* श्रीर्जयतितराम् *

श्रीभर्तृहरि विरचित-

# * वाक्य पदीय ब्रह्मकाण्डः *




सोयम्

लब्धधौत प्रतिष्ठ, विद्यावाचस्पति, व्या० आ० वे० शास्त्रि मैथिल-

## पं० श्रीद्रव्येशझा प्रणीत प्रत्येकार्थ प्रकाशिका-

समाख्यया व्याख्ययोपेतः।

श्री वृन्दावने पं० रामनिवास शर्म द्वारा

श्री "व्रजेन्द्र" मुद्रणालये सम्मुद्रय प्राकाश्यं नीतः।

सं० १९८३



प्रायो व्यावहारिक शब्दानामेवेह सन्निवेश इति

टीकाप्रणेतुः प्रतिज्ञा।


प्र० १००० ] —— [ मू० ३।)

॥ श्रीर्जयतितराम् ॥



# * वाक्यपदीय ब्रह्मकाण्डः *

योगिराज महावैयाकरण-

श्रीभर्त्तृहरि विरचितः ।

व्याकरणाचार्य्य वेदान्तशास्त्रि पण्डितवर मैथिल--

## श्रीद्रव्येशझा शास्त्रि प्रणीत-

प्रत्येकार्थ प्रकाशिका टीका-

परिगुम्फितः ।

व्याकरणाचार्य्य पण्डित श्री सीतारामाचारि शास्त्रिणा-

संशोधितः ।

पं० श्री श्रीवर चतुर्वेदिनानुमोदितश्च

सोयम्

श्री व्रजेशानुकम्पया श्रीवृन्दावने अशीत्यधिको-

नविंशति शतमिते १९८३ वैक्रमाब्दे-

श्रीव्रजेन्द्र नाम्नि मुद्रण यन्त्रालये

पं०रामनिवासशर्मद्वारा सम्मुद्र्य

प्राकाश्यं नीतः ।

प्र० १००० ]  [ मू० २)

# ❁ भूमिका ❁

कस्को न किल जानाति "एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गलोके च कामधुक् भवति" इति श्रुतिविहितसाधुशब्दमाहात्म्यम् । तत्साधुशब्दज्ञापिका स्मृतिर्व्याकरणमेव तत्रापि महेश्वरपरमाचार्य्यकत्वेन पाणिनीयस्यैव प्राधान्यं जरीजागर्त्ति तत्रापि श्रीमद्भगवत्पतञ्जलिप्रणीतमहाभाष्यसम्मतमतेरेव परितो मान्यतेति यथोत्तरं मुनीनां प्रामाण्यमित्युद्घोषयत्सु शाब्दिकेषु नाविदितं वरीवर्त्ति । तस्य च गम्भीरभावैः परिक्लिश्यमानान् लोकानालक्ष्य परमकारुणिकाचार्य्य योगिराज श्रीभर्तृहरिः परितः प्रथमं कारिकारूपेण वाक्यपदीय ग्रन्थमुपनिबबन्ध । अस्य च कियत्प्रामाण्यमाहात्म्यं प्राचीनत्वञ्चेति भूषणादौ प्रमाणतया एतत्कारिकोपन्यासेनैव विदितं विद्यते विद्वद्वृन्देषु परञ्चास्य पठनपाठनप्रणाली शेखरादिनिबन्धग्रन्थाधिक्येन स्थगिताभूदित्येतदवलोक्य अनवरतम् प्राचीनग्रन्थपरिरक्षणतत्परम् मनो येषां तैः काशीस्थ क्वीन्स कालेज प्रधान कार्यवाहक ( प्रिन्सपिल ) म० म० डाकृर श्रीगंगानाथ झा प्रभृति महोदयैः तत्रत्याचार्य षष्ठ खण्डे समावेशितः श्री कविराज गोपीनाथ एम. ए. महोदयैः संरक्षितश्च तस्याद्यभागो ब्रह्मकाण्डः) परन्तु प्राचीन लेखशैल्याः स्वाभाविककाठिन्यास्पदतया कारिकार्थप्रकाशक व्याख्यान्तराभावाच्च तदन्वेषिणां महान्तं क्लेशमवगम्य अतिपरिश्रमेण **प्रत्येकार्थ प्रकाशिका टीकया** सम्वलित एतस्योपादेयतानवेति स्वयमेव विविच्य सफलयन्तु मे मनोरथान् भवन्तो विद्वांस इत्यलं पल्लवितेन एतल्लोपयोगितामवलोक्य एतन्मुद्रणे व्याकरणाचार्य पं० श्रीसीतारामाचारी पं० श्री श्रीवर चतुर्वेदी च अत्युत्साहं साहाय्यञ्चादिषातामतः तयोरुपकारभारमाजन्म शिरसा बिभृमः ।

## इति विनीत—

झोपाह्व व्या० आ० वे० शास्त्री द्रव्येश शर्म्मा
नेपाल राज्यान्तर्गत वसतपुर ग्रामवासी
पो० वरुनिआ
जि० मुजफ्फर पुर

॥ श्रीशः पातु सततम् ॥

निखिल जनक दुग्धा रक्षणे दत्तबुद्धि,

रसुरनिधनकारी व्याप्तकीर्त्ति मुरारिः ॥

चरणकमलयुग्मा स्वादरक्तांघ्रिरेफान् ।

गिरिवर करधारी कृष्ण चन्द्रोऽवतान्नः ॥ १ ॥

वाराणसी सर्वपुरीषु रम्या, तदीय विद्यालय क्विन्स कालिजे ।

शब्दाख्य शास्त्रस्य परीक्षणस्य, आचार्य्य षष्ठांशदले द्वितीये ॥ २ ॥

निर्धारितो वाक्यपदीयभागः, श्रीब्रह्मकाण्डो ललितोऽस्ति गम्यः ।

तस्यापि व्याख्यानमसर्वबोधकृत्, श्रीपुञ्जराजेन कृतन्तु लभ्यते ॥३॥

नेपालराज्ये वसन्तादिपत्तने, वासं दधानेन चिरञ्चिताये ।

द्रव्येशझाख्येन च शब्द तर्क, वेदान्तसांख्यादि विचारशालिना ॥४॥

प्राज्ञोपकारक्षमछात्रबोधिनीं, व्याख्यां च सर्वार्थ प्रकाशिकाभिधां ।

आदाय रम्यांश्च कृतां सुशिक्षकाः, कृतार्थयन्त्वस्य परिश्रमं मुदा ॥ ५ ॥

मयापि विविच्यालोच्यचैतत्प्रणेतृशास्त्रिभ्यः कोटिशो धन्यवादाः ।

वितीर्य्यन्ते तज्जन्यपरिश्रमश्च मुक्तकण्ठेन शतशः प्रशंसनीय इति विरमति ॥ ६ ॥

विदुषां पादद्वन्द्व सरोजचंचरीकः

पं० सीताराम शास्त्री व्या० आ०

निश्चयप्रचमेतदेषा प्रत्येकार्थ प्रकाशिका टीका मूलग्रन्थस्यास्यानायासेनाशेषगूढार्थ ज्ञानप्रकाशमुखेनेतरटीकामतिशयानाधिजिगमिषूणामतीवोपकरिष्यत्येव प्रत्युताध्यापिपयिषूणामपि साकल्येन साहाय्यं विधास्यत्यतस्तद्रचयितु एतद्ग्रहणे निर्म्मत्सरा गुणपक्षपातिनो विद्वांस इति तथमाधेद्यति ।

पं० श्रीगणपति शर्मा न्या० आ०

विधेयो बुधानाम्

❀ श्री जयतितराम् ❀

प्रत्येकार्थप्रकाशिकाव्याख्यासहितः

# वाक्य पदीये ब्रह्मकाण्डः



॥ मङ्गलाचरणम् ॥

तण्डुलेनैव संतुष्या ददादिष्टं मुदाहियः ।
ब्रजेशं राधिकेशं तं नत्या तोषायितुं यते ॥ १ ॥
परीक्षार्थ्युपकाराय प्रत्येकार्थप्रकाशिका ।
टीका वाक्यपदीयस्य ब्रह्मकाण्डे वितन्यते ॥ २ ॥

अथ प्रयोजन मनुद्दिश्य मन्दोऽपिन प्रवर्त्तते इत्यतः प्रथमं व्याकरणाध्ययने प्रवृत्तिप्रयोजकं प्रयोजनं वक्तव्यम् तच्च अर्थधर्म्मकाममोक्षाख्यं चतुर्विधम् तेषु इतरेषां अनित्यत्वेन मोक्ष एव परमपुषार्थः तस्य नित्यत्वात् । सच (मोक्षुः) तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय ततो मां तत्त्वतो ज्ञात्वाविशते तदनन्तरम् इत्यादि श्रुति स्मृति प्रामाण्यात् ब्रह्मतत्त्व ज्ञानाद् भवति ब्रह्मतत्त्वञ्च शब्दतत्त्वादभिन्नम् ब्रह्मशब्दयोरैक्यात् तथाच ब्रह्मात्मकशब्दतत्त्वनिर्णयद्वारा परमपुरुषार्थमोक्षात्मकफलं व्याकरणाध्ययनस्येति सिद्धान्तयिष्यता आचार्यपादेन ब्रह्मकाण्डोयमारभ्यते एतेन व्याकरणाध्ययनस्यार्थधर्म्मकामाख्यं लौकिकमेव फलं यदि भवेत्तदोक्तलौकिकफलानां कृष्यादिना सुलभोपायेनाऽपि सुसाध्यतया दुर्गाहविचारसाध्यैतदध्ययनोपाये प्रवृत्तेरनावश्यकत्वं स्यात् किञ्च मुमुक्षूणां प्रवृत्ति सम्भवलेशोऽपि नस्यात् इति विविदमानाः परास्ताः तत्र प्रथमं ब्रह्मपदार्थस्योपस्थितत्वात् तत्कीर्त्तनस्य ग्रन्थादौ मङ्गलरूपत्वाच्च तल्लक्षणं विधाय शब्द एव ब्रह्मेति प्रतिज्ञां कुर्वन् अर्थात्मक सृष्टि व्यवहारमुपपादयति अनादिनिधनेत्यादि —

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥

अनादीति यद् इत्युद्देश बोधकम् न आदिनिधने यस्य तत् अनादिनिधनम् उत्पत्तिमरण रहितम् ( नित्य मिति यावत् ) सावयवं हि परिच्छिन्नञ्च वस्तु अवयवादेः संय्योग वियोगाभ्याँ उत्पद्यमानं विनश्यच्चलोके दृष्टम् ब्रह्मणस्तु

निरवयवत्वत् अपरिच्छिन्नत्वाच्च उत्पत्तिविनाशयोः स्वप्नेप्यसम्भवात् अक्षरम् व्यापकमित्यर्थः अश्नोतीतिविग्रहे अशू-व्याप्तौ इतिधातो रौणादिकसरन् प्रत्यये साधितत्वात् अतएव अनाधिनिधनपदेनाविनाशित्वार्थस्योक्तत्वेऽपि व्यापकतायाः अनुक्तेर्नपुनरुक्तिदोषः **ब्रह्मेति** बृंहयति पालयतीति स्वचैतन्यसम्पादनद्वारा जगद्व्यवहारस्थितिनियामकमित्यर्थः एतेन आकाशादेश्चैतन्यशून्यस्य व्यावृत्तिः तदित्याध्याहारः यत्तदोर्नित्यसम्बन्धात् **शब्दतत्त्वमिति** विधेयतं तस्य भावः तत्त्वम् याथार्थ्यमितियावत् शब्द एव तत्वम् सकलशब्दग्राह्यमपि तदेव सकलशब्दस्वरूपमपि तदेव शब्दार्थयोस्तादात्म्यात् अतएव भगवता ओमित्येकाक्षरं ब्रह्मेति गीतायामुक्तम् अर्थात् शब्द रूपब्रह्मण एवायं धर्म्मःयत् नानाशब्दरूपेण नानार्थरूपेण च प्रतीयते इति सिद्धान्तयिष्यति तथा चायं निर्गलितोर्थः नित्यं व्यापकचेतनतया सकलव्यवहारस्थितिनियामकञ्च यत् तत् शब्दतत्वम् ननु शब्दएव ब्रह्म तदा ततोर्थात्मकसृष्टिः कथमित्यत आह **विवर्त्तत इति यतः** ब्रह्मणः **जगतः** नामरूपाभ्यां व्याकृतदृश्यमानसंसारस्य **प्रक्रिया** व्यवहारः **अर्थरूपेण** घटपटादिव्यक्तिरूपेण **विवर्त्तते** विवर्त्तरूपोत्पत्तिर्भवति उत्पत्तिर्द्विधा परिणामो विवर्तश्च तात्त्विकान्यथाभावः आद्यः यथा दुग्धस्य दधिपरिणामः अयथार्थान्यथाभावः अन्त्यो यथा रज्ज्वा विवर्त्तः सर्प्पःशुक्तिकायाश्चरजतम् अयम्भावः यथा रज्जौ रज्जुत्वेतिविशेषधर्म्माज्ञानात् सर्प्पोयम् दण्डोयम् उदकधारेयम् भूछिद्रमिदमित्याद्याकारकनानारूपप्रतीतिर्जायते तत्र सर्प्पादिप्रतीतेः किंमूलमितिगवेषणायां रज्जोरभावे सर्प्पादिप्रतीतेरप्यसंभवात् रज्जुरेव मूलमिति निश्चीयते परञ्च सर्प्पादिप्रतीतेः रज्जुसाक्षात्कारानन्तरं निवृत्तिदर्शनात् रज्जुतत्त्वमेव सत्यं सर्प्पादितत्त्वमसत्यम् तस्य वाधदर्शनेन अवाध्यत्त्वं सत्यत्वमिति सत्यत्वलक्षणस्य तत्रासंघटनात् तथैव प्रकृते नामरूपात्मकसकल दृश्यमानपदार्थस्य नानारूपस्य संसारस्य ज्ञानं शब्दतत्त्वात्मकब्रह्मस्वरूपाज्ञानप्रयुक्तम् तथाच यदि सत्यं ब्रह्म न स्यात् तदा तत्स्वरूपाज्ञानप्रयुक्तं नानारूपं असत्यं जगन्न प्रतीयेत अतः संसारभ्रमस्याधिष्ठानं ब्रह्म जगद्विवर्त्तोपादानकारणम् किन्तु अधिष्ठानसाक्षात्कारस्य भ्रमनिवर्त्तकत्वेन यदा शब्दात्मकब्रह्मस्वरूपाधिष्ठानसाक्षात्कारो भवति तदा अज्ञाजन्यसंसारज्ञानस्य निवृत्तिर्भवति तथाच संसारनिवृत्तिरूपमोक्षः सिध्यतीति मोक्षरूप प्रयोजनं व्याकरणस्य सिद्ध मिति ननुशब्दएव ब्रह्म इत्यत्र किंमूलमितिचेत् श्रुतिस्मृती गृहाण

**सूक्ष्मामर्थेनाप्रविभक्ततत्वामेकाबाचमभिस्पन्दमानाम् उतान्ये विदुरन्यामिवच पूतां नाना रूपात्मनि सन्निविष्टाम्**

इति अनेन सर्वेषामन्तः करणे सन्निविष्टं चैतन्यं शब्दः तस्यै- व शक्तिः परवोधनाय निस्सृत्य शब्दरूपेणार्थरूपेणय नाना रूपेण भासते इति सिद्धम् किन्तु

ओमित्यात्मानं युञ्जीत, ओमिति ब्रह्म, ओंकार एवेदं सर्वम्, वाचारम्भणो विकारो नामधेयं तदस्येदं बाचा तन्त्या नामभिर्दामभिः सर्वं सितम् सर्वं हीदं नामानि बहीदं शब्द निर्म्माणं शब्द शक्तिनिबंधनम् । विवृत्तं शब्दमात्राभ्य स्तास्वेवप्रविलीयते इत्यादि आकरतोद्रष्टव्यम् ।

ननु एकमेव शब्दतत्त्वं ब्रह्म तदानाना रूपेण कथं ज्ञायते इत्यत आह

**एकमेव यदाम्नातं भिन्नं शक्ति व्यपाश्रयात् ।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्त्तते ॥ २॥**

एकमेवेति यत् एकमेव शब्दतत्वम् ब्रह्म आम्नातम् एकमेवा द्वितीय ब्रह्म प्रणव एवैकस्त्रिधा भिव्यज्यते इत्यादि श्रुतिभिःकथितमित्यर्थः तदित्याक्षेपः शक्तिव्यपाश्रयात् नानाशक्त्याश्रयात् शक्तेर्भेदादितियावत् भिन्नम् बहुधा प्रतिभातिशक्तेर्नानात्वात् तदाश्रय ब्रह्म गोऽपि नानात्वमारोप्यते इतियावत् ननुशक्ति भिन्ना तदा श्रयो ब्रह्मभिन्नम् एवञ्च कथमेकमेवेति प्रतिज्ञातमित्यत आह अपृथक्त्वेति शक्तिभ्यः ब्रह्मण इत्याक्षेपःअपृथक्त्वेऽपि अभिन्नत्वेऽपि पृथक्त्वेनेव पृथगिव ननु वास्तविकभिन्नता इत्याकूतः पृथक्त्वमारोप्यतेइतियावत् वर्त्तते विद्यते इत्यर्थःअयमाशयः घटत्वेन शरावत्वेन च घटशरावादयो भिन्ना अपि मृत्तिकारूपेणाभिन्ना एव एवं विकारो विकारी यावद्वस्तु परस्परं भिन्नमपि सर्वस्योपादानकारणं ब्रह्म एकमेव अतस्तेन रूपेण सर्वं एकमेव ननु एकञ्चेत् भिन्नं कथं एकस्मिन् भेदस्यबाधात् इतिचेन्न एकस्मिन्नपि ब्रह्मणि नानाशक्तिसमावेशात् शक्तिगत भेदस्य ब्रह्मणि आरोपेऽपि स्वकीयैकत्वस्य वास्तविकस्या बाधेन एकत्वभिन्नत्वोभयव्यवहारस्यो पपत्तेः यथा एकस्मिन् ज्ञाने घटः पटइत्याद्यनेक विषयस्य भानेपि विषयगत नानात्वेन ज्ञानगतैकत्वस्य न बाधः किञ्च करः कमलः इत्यादौ करे कमलत्वारोपेऽपि वास्तविककरत्वस्य न बाधः इदमत्रावधेयम् ता शक्तयोऽपि नहि ब्रह्मणः पृथक् तासांतत्रैवोपलब्धेः अन्यत्रानुपलब्धेस्च शक्तिशक्ति मतोरभेदात् किन्तु अविवेकिनां पृथगिव लभ्यते इति ॥ २ ॥

ननु ब्रह्म एकं तदा तद्गतशक्तयः कथं नाना इत्यत आह

**अव्याहताः कला यस्य कालशक्ति मुपाश्रिताः ।**
**जन्मादयो विकाराः षट् भावभेदस्य योनयः ॥३॥**

अव्याहतेति यस्य ब्रह्मणः अव्याहताःन व्याहता स्वरूपेणाविनष्टा इत्यर्थः नित्या इति यावत् कलाःशक्तयः कालशक्तिं समय शक्तिं उपाश्रिता प्राप्ताः

भावभेदस्य पदार्थभेदस्य योनयः कारणानि जन्मादयः षट् जन्मस्थितिमरण वृद्धि ह्रास परिणामाख्या इत्यर्थः भवन्तीति क्रियाध्याहारः अयंभावः ब्रह्मणि कालाख्यशक्तिः व्यापिकाम हतीतदधीना एव जन्मादिशक्तयः तासां कालमपेक्ष्यैव व्यवहार सम्भवात् कार्य्यमात्रं प्रति कालस्य कारणत्वात् सा कालशक्तिः यदा जन्म शक्तिमाज्ञापयति तदाघटउत्पद्यते यदाप्रतिबध्नाति तदा नश्यति यदा उभयंनकरोति तदातिष्ठति एवञ्च उत्पद्यमानघटात् तिष्ठन्घटोभिन्नः एवंतिष्ठतः घटात् विनश्यश्चघटोभिन्न इत्यादि रीत्या सर्वेषांविकाराणां परस्परं भेदः पौर्वापर्यक्रमश्च तथा च विकारगतभेदानां जन्मशक्त्यवच्छेदेन स्थित्यवच्छेदेन चा श्रयतया एकोऽपिपौर्वापर्यक्रमहीनोऽपि कालः भिन्नः पौर्वापर्यक्रमवांश्चभवति अतएव- तमेव भेदं क्रमञ्चादाय भवति अभूत् भविष्यतीत्यादि व्यवहारः एवमेववर्द्धते इत्यादयोऽपि यथा एकमेवतूलासूत्रं ( श्रोलनेका ईङ्गरेजीकांटा ) तस्मिन् उर्द्धदेशे एकोदण्डः तत्रानेकलेखाः भवन्ति तस्याधः प्रदेशे द्रव्यान्तरं स्थाप्यते तस्य द्रव्यस्य गुरुत्वं यदा प्रतिबध्यते तदोर्ध्वस्थित लेखानां मध्ये यस्यां लेखायां संयुक्तं सत् तिष्ठति तत्परिमाणं एकसेटकं द्विसेटकं खारीत्यादि व्यवहारो भवति तत्र वस्तुतः एकस्मिन्नेव तूलासूत्रे एकएवदण्डः द्रव्यगतभेदानां तत्तल्लेखावच्छेदेना श्रयतया भिन्नः तथैव प्रकृते जन्मादिनानाशक्तिसमनुगत कालशक्तिरेकापि नानात्वेन एकस्मिन् ब्रह्मणि व्यवह्रियते इत्युप पत्तिरनुभूयतां सुधीभिरितिदिक

सा कालशक्तिर्ब्रह्मभिन्ना उततत्स्वरूपा इति बोधयितु माह —

एकस्य सर्व वीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥ ४ ॥

एकस्येति सर्ववीजस्यसर्वेषांवीजं कारणं तस्येत्यर्थः एकस्यसजातीय द्वितीयरहितस्य यस्य ब्रह्मणः अनेकधा अनेकरूपा भोक्तृभोक्तव्यरूपेण भोक्ता च भोक्तव्यश्च तयो रूपं तेन रूपेण द्वन्द्वान्ते श्रूयमाणतया प्रत्येक मन्वयः तथा च भोक्तृरूपेण अहंममेत्यभिमान लक्षण जीवरूपेण भोक्तव्य रूपेणान्नपाना- दिविषयरूपेण चेति पर्य्यवसानम् भोगरूपेण च भोजनपानशयनादिक्रिया रूपेणेत्यर्थः लोकव्यवहारार्थं प्रवर्त्तते इत्यध्याहारः अयम्भावः वेदान्ते अविद्या इति सांख्ये सत्वरजस्तमस्साम्यावस्था प्रकृति रिति च याकथ्यते सैवेहकाल शक्ति शब्देन बोध्यते इयमेव लोके यावद्व्यवहाराणां प्रवर्त्तिका ब्रह्म च निर्विकारं चिदानन्दरूपम् सदा एकरूपं कदापि कुत्रापि न व्यभिचरति यथा रज्जुत्वाज्ञान मेव रज्जुस्थले सर्प्पः दण्डः जलधारा इत्यादि ज्ञान प्रवर्तकम् रज्जुस्तु सदा स्वरूपेणैव तिष्ठति कदापि वस्तुतः सर्पो न भवति इदमत्रविचारणीयम् रज्जुसत्तानस्यात् चेत्तदा तु सर्पादिसत्तापि न भवेत्, अतः स-

र्पादिसत्ता न रज्जुसत्तातः पृथक् अतः रज्जुभेदेन वक्तुं शक्यः । किञ्च वस्तुतः रज्ज्वभिन्नोऽपि न सर्पः । रज्जुजनितकार्यस्य सर्पेणाजननेन वास्तविकस्य रज्ज्वभेदस्य वाधात् । तस्माद्भेदरूपेणा भेदरूपेणचावाच्यत्वात् सर्पोऽनिर्वाच्यः रज्जुस्तुनिर्वाच्यः सत्यः तथैव प्रकृतेऽपि ब्रह्म सत्यं निर्वाच्यं मायातु अनिर्वाच्या असत्या सैव शक्तिः अनिर्वाच्यं विचित्रं संसारं प्रसूते ननु संसारस्य मायारूपत्वमेवासिद्धमितिचेन्न अन्तवत्वाद् दृश्यवत्वाच्च स्वप्नवत् इत्यादि हेतु दृष्टान्तादिभिः संसारस्य मायारूपत्वम् अन्यत्र साधितम् । विस्तरेण तत एवावगन्तव्यं इति वेदान्त प्रक्रिया अत्रब्रह्मपदेन शब्द रूपं ब्रह्मेति कुत्रापिन विस्मरणीयमितिदिक् । ४

ननु अस्तूक्तलक्षणं ब्रह्म तत्प्राप्तिस्तु ज्ञानादेव भवेद् तदा किं व्याकरणेनेति शंकापरिहाराय परम्परया व्याकरणस्य तत् प्राप्त्युपायतां प्रदर्शयति ।

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ॥
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥ ५ ॥

प्राप्त्युपेति । तस्य ब्रह्मणः प्राप्त्युपायः प्राप्तेरुपायो मार्ग इत्यर्थः अनुकारोऽनुकरणम् ( भाषायां नकल फोटो इत्यादि कथ्यते ) वेदः सच एकोऽपि महर्षिभिः याज्ञवल्कादिभिः अनेक वर्त्मेव अनेकशाखात्मकः पृथक् पृथक् भिन्नः भिन्नः समाम्नातः प्रणीतः व्यवस्थापित इति यावत् अयमाशयः यथा वृन्दावनं दृष्टवान् पुरुषः तत्र जिगमिषुं अन्यम्प्रति तत्प्राप्त्यर्थं प्रतिपादयति एतादृशो मार्गोऽस्ति मार्गेच अमुकं अमुकं नगरं विद्यते तेन गन्तव्यं यत्र यमुना पतितपावनी विशालातिविशाल मन्दिरो मन्दिरे २ गेहे २ च अनुपमाभरण भूषित श्री राधा कृष्ण विग्रहाः श्री राधे श्यामेति शब्दैः गुञ्जायमान गगनः इत्यादि दृश्यं तज्ज्ञातव्यं इदमेव श्रीवृन्दावनधाम इति तथैव महर्षयः तपस्याविशुद्धान्तःकरणेन समाहितचेतस्काः नित्यां वाचं शब्दरूप ब्रह्म साक्षात् कृतवन्तः मंत्रदृशः अज्ञेभ्यः परेभ्यो वोधन द्वारा तत्प्राप्त्यै वाक्यात्मकशब्दसमुहरूपेण अनुकरणं प्रादर्शयन् । स एव वेदः सच स्वरूपेण भेदाभावादेक एव अध्ययनाध्यापननिवन्धनशाखाभेदेन लोकेऽप्रमाणवाक्यात्मकशब्दभेदोपदेशभेदप्रयुक्तस्मृतिपुराणेतिहासभेदेनच पृथक् पृथगिव महर्षिभिः कृतः एवञ्च ब्रह्मानुकरणवेदज्ञानात् ब्रह्मज्ञानं स्यात् ततोमोक्षः इतिवेदः ब्रह्मप्राप्त्युपाय इति सिद्धम् ॥ ५ ॥

ननु महर्षिकल्पितशाखानां परस्परं भिन्नत्वेन विरोधात् एककर्म्मणि समावेशो न स्यात् तथाच शाखाभेदेन कर्म्माऽपि भिन्नं स्याद् इति शङ्का परिहाराय आह

भेदानां वहुमार्गत्वं कर्म्मण्येकत्र चाङ्गता ।
शब्दानां यतशक्तित्वं तस्यशाखासु दृश्यते ॥ ६ ॥

भेदानामिति शतमध्वर्य्युशाखाः सहस्रसाम्नः एकविंशतिधा वह्वृचां नवधाऽथर्वणो वेद इत्यादि शाखा भेदानां वहुमार्गत्वं नाना मार्गाः शाखा भेदाः एकस्मिन् साधनीये अनेके उपायास्ते इतियावत् कर्म्मणि एकत्र एकस्मिन् कर्म्मणि अंगता अन्यशाखाप्रदिपादितकर्म्मण्यपि इतरशाखास्थ मंत्राणां विनियोग इति नन्वेवं सर्वेषां एकस्मिन् समावेशात् विरोधाभावेन तत्तच्छाखानां किम्प्रयुक्तो भेद इति मनसि निधायाह शब्दानामि त्यादि तस्य वेदस्य शाखासु पूर्वोक्तशाखासु शब्दानां पदात्मकादिप्रयोगाणां यतशक्तित्वम् यता नियताः शक्तयः अर्थवोधकतासामर्थ्यानि येषां तेषां भावः इत्यर्थः दृश्यते इति कर्म्मप्रत्ययान्तपदवोध्यक्रियायाः कर्म्मेदम् इदमत्र फलितम् एकस्मिन् कर्म्मणि सर्वेषां समावेशसम्भवेऽपि एतदर्थवोधनेच्छया अयं शब्दः अस्यामेवशाखायां उदात्तादिगुणविशिष्टः प्रयुक्तः सन् पुण्यजनको भवति नान्यस्यां शाखायाम् इति नियमः पृथक् पृथक् तत्तच्छाखायां दृश्यते इति तत्तन्नियमभेदप्रयुक्तएव शाखाभेद इति वोध्यम् अतएव भगवन्तः श्री पाणिनिपादा देवसुम्नोर्य्यजुषि सिमस्याथर्वणेऽन्त उदात्त इत्यादि निर्म्ममुः इतिदिक् । ६

नन्वेवं वेदस्यैव प्रमाणत्वे स्मृतीना मप्रामाण्यं स्यादत आह ।

स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवा श्रित्य लिङ्गेभ्योवेदविद्भिः प्रकाशिताः ॥ ७ ॥

स्मृतय इति वेदविद्भिः वेदज्ञैः कर्त्तृपदमिदम् तमेव वेदम् आश्रित्य मूलमादाय लिंगेभ्यः हेतुभ्यः श्रुत्यनुगुणहेतुभ्यः नतु शुष्कतर्क्केभ्य इतियावत् दृष्टादृष्टप्रयोजना दृष्टञ्चादृष्ञ्च ते प्रयोजने यासां ताः दृष्टफलं चिकित्सादिवोधनद्वारा रोगापनयनं अदृष्टफलं भक्ष्याभक्ष्यादिवोधनद्वारा पुण्यपापरूपमिति फलितोऽर्थः बहुरूपाश्च नानारूपाश्च स्मृतय आयुर्वेदादि शास्त्राणि मन्वादिधर्म्मशास्त्रादीनिच प्रकाशिता मन्द धियामुपकाराय प्रकटी कृताः। अयम्भावः वेदोक्त एवार्थः श्रुतिवाक्येभ्यः निश्चेतु मशक्तानां सुखवोधाय स्मृतिषु विस्तरेण प्रकाशितः महर्षिभिरिति स्मृतीनामपि वेद मूलकत्वात् प्रामाण्यमिति दिक् ।

ननु स्मृतीनां वेद मूल कत्वे वेदस्यच एकरूपत्वात् स्मृतिषु मतभेदोऽ प्रामाणिकःस्यादत आह ।

**तस्यार्थवादरूपाणि निश्चित्य स्वविकल्पजाः ।**
**एकत्विनां द्वैतिनांच प्रवादा वहुधा मताः ॥ ८ ॥**

तस्यार्थेति तस्य वेदस्य अर्थवादरूपाणि अर्थवादात्मकवाक्यानि निश्चित्य निर्णीय ऋषिभिरिति कर्त्तृपदं अध्याहार्य्यम् अत एव मता इत्येतदपेक्षया अस्य समानकर्त्तृकत्वात् समान कर्त्तृकयोरिति क्त्वा स्वविकल्पजा स्वस्वानुभवानुसारेण एकात्विनां वेदान्तादीनां द्वैतिनाञ्च न्यायादीनाञ्च प्रवादाः सिद्धान्ताः वहुधा वहुरूपाः मताः स्वीकृताः अयमाशयः अर्थवादादिप्रकरणेषु क्वचित् कर्म्मकाण्डस्तुतिः एवं रुद्रस्तुतिः सूर्य्य स्तुतिः इत्यादि वर्तन्ते तत्र स्वस्वरूच्या एकं प्रधानीकृत्य तत्तत् परिपुष्ट्यै तत्तद्दर्शनं निरमायि अतः सर्वासां वेदमूलकत्वात् प्रामाण्यमिति ।

नन्वेवं खलु प्रवादेषु किं सत्यं तत्राह ।

**सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ।**
**युक्ता प्रणवरूपेण सर्ववादाविरोधिनी ॥ ९ ॥**

सत्येति । तत्रोक्तप्रवादेषु एकपदागमा एकपदरूपाश्रुतिः विशुद्धिः सर्वकल्पनादिदोषरहिता सर्ववादाविरोधिनी सर्ववादेषु अविरोधिनी कस्मिन्नपि सिद्धान्ते अस्या विरोधो नास्तीति यावत् प्रणवरूपेणयुक्ता प्रणव रूपा ओं इतिवाक् विद्या सर्वार्थ प्रकाशिनी सत्या यथार्था उक्ता कथिता अयमाशयः एकमेवाऽहं द्वितीयोनास्ति सत्यं विज्ञान मानन्दं ब्रह्मेत्यादि प्रतिपाद्यं एकमेव ब्रह्म सत्यं तस्य च साक्षाद् वोधकः प्रणवः अतः तयोरभिधानाभिधेययोरैक्यात् प्रणवरूपं ब्रह्म सत्यमिति फलितम् । संसारस्य च सर्ववस्तुनः तत्रैव कल्पितत्वम् कल्पनायाश्च मिथ्याज्ञानमूलत्वेन मिथ्यात्वात् तत्कृतविरोध दोषलेशोपि ब्रह्मणि नास्ति यथा गगने तलमलिनत्वादेः वालैः कल्पितत्वेऽपि तत्कृतदोषस्य आकाशे असत्वमेव तथाच प्रणवरूपमेव ब्रह्म नानाशब्दकल्पनायाः नानार्थकल्पनायाश्चाधिष्ठानम् अतः कल्पनायाः स्वस्ववुद्ध्यनुसारित्वात् विरोधेऽपि अधिष्ठानस्य निर्विकल्पस्य ब्रह्मणः कुत्रापि विरोधोनास्तीति वेदान्त सिद्धान्त रीत्यायम् ग्रन्थ इति ध्येयम् ।

ननु प्रणव एकएव कथंसर्वरूप इत्यत आह ।

विधातु स्तस्य लोकाना मङ्गोपाङ्गनिवन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ॥१०॥

विधातुरिति । लोकानां सकलजगतां विधातुः प्रकृतेः प्रामाण्यश्चात्र सहि शब्दार्थ प्रकृतिरिति श्रुतिः प्रकृतिपदेनात्र विवर्त्तोपादानकारण गृह्यते इति पूर्बमेव प्रपञ्चितम् तस्य प्रणवस्य अंगोपांगानिवन्धना अङ्गश्चोपाङ्ग श्च तेनिवन्धने प्रयोजके येषां ते विद्याभेदा व्याकरणादयः चिकित्सादयश्च ब्रह्मणः अङ्गेभ्यो व्याकरणादयः उपाङ्गेभ्येश्चिकित्सादयः इति फलितम् ज्ञानसंस्कारहेतवः ज्ञानपदेन सम्यकूज्ञानं संस्कारपदेन पुरुषसंस्कारः तयोर्हेतवः कारणानि प्रतायन्ते प्रभवन्तीतियावत् एवञ्च सर्वेषां प्रणवप्रभवत्वात् प्रणवरूपत्वेन ऐक्यमेवेति भावः ।

तेषु विद्याभेदेषु व्याकणं ब्रह्मणः प्रत्यासन्नमित्याह ।

आसन्नम् ब्रह्मण स्तस्य तपसामुतमं तपः ।
प्रथमं छन्दसामङ्गं प्राहु र्व्याकरणं बुधाः ॥११॥

आसन्नामिति । बुधाः महर्षयः तस्य वेदरूपस्य ब्रह्मणः आसन्नं समीपम् साधुत्वबोधनद्वारा स्वरूपसंस्कारकस्य व्याकरणस्य साक्षादुपकारकत्वात् आसत्तिर्बोध्या तपसां चान्द्रायणादीनां स्वाध्यादीनाञ्च मध्ये उत्तमं अधिक मिदम् तपः अस्य दृष्टाऽदृष्टो भयफलहेतुत्वात् अतएव अक्षर समाम्नायस्य ज्ञानमात्रेण सर्वपुण्यफलप्राप्तिबोधकस्मृतिः संगच्छते छन्दसां वेदानां प्रथमं प्रधानं अंगम्व्याकरंगप्राहुः कथयन्ति अतएव महाभाष्ये प्रधानञ्च षडङ्गेषु व्याकरणम् प्रधाने च कृतोयत्नः फलवान् भवति इति प्रतिपादितम् ।

ननु कया युक्त्या प्राधान्यमित्यत आह ।

प्राप्तरूपविभागाया यो वाचः परमोरसः ।
यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोयमाञ्जसः ॥१२॥

प्राप्तरूपेति प्राप्ताः रूपविभागाः वर्णरूपविभागः पदरूपविभागः वाक्यरूपविभागश्चेति यस्याः तस्या वाचः गिरः यः परमोरसः गोत्वविशिष्टव्यक्तिनिष्ठकर्म्मत्वबोधने गामिति शब्दः अभ्युदयहेतुः एवं रीत्यानियमितसाधुभावः शब्दसमुदायः एतेन भाषायाः अर्थबोधनियतत्वेऽपि पुण्यहेतुत्वाभावात् व्यावृत्तिः

यत्तु ज्योतिः शब्दः, अग्निर्यथा स्वप्रकाशेन घटपटादिं बोधयति तथैव शब्दोऽपि अर्थप्रकाशकः अतोज्योतिरित्युक्तम् तत्तु पुण्यतमम् प्रयोक्तुः पुण्यजनकत्वात् पुण्यतममिदम् स्वयं पवित्रमेवान्यं पवित्रयति यथा गङ्गाजलम् तस्य साधुशब्दसमूहस्य किञ्चित्सामान्यलक्षणम् आदगुण इतिकिञ्चिच्चविशेषलक्षणं वृद्धिरादैच् इति एव स्वरूपक व्याकरणरूपः मार्ग उपायः आञ्जसः स्वाभाविकः ऋजुरितियावत् अयम्भावः पौर्वापर्य्यक्रमहीनं एकमेवाखण्डरूपं शब्दतत्वं ब्रह्म एतस्य साधुत्व बोधनम् व्याकरणेन न सम्भवति किन्तु एतस्मात् यदा वर्णपद वाक्यात्मकनानाशब्दानां घटपटादिनामार्थानाञ्च सृष्टिर्भवति तदाभाषादीनामपि शब्दत्वेन लोके अर्थबोधकत्वेऽपि वेदे संस्कृतस्यैव प्रयोगात् संस्कृत शब्दानां व्याकरणेन घटकर्म्मकामयनार्थबोधने घटमानयेति शब्दः साधुरिति रीत्या साधुत्वबोधनात् वेदस्य साक्षात् स्वरूपबोधकं व्याकरणम् इति सिद्ध व्याकरणस्यैव प्रधानत्वम् इदमत्र फलितम् व्याकरणेन वेद स्वरूपज्ञानम् ततश्च तन्मूलभूतप्रणवस्वरूपज्ञानं ततश्च ब्रह्मज्ञानमपि जातमेव ओमित्येकाक्षरं ब्रह्मेतिगीताप्रामाण्यात् तयो स्तादात्म्यात् ततश्चमोक्षः सिद्ध इतिदिक् १२

एतदेव प्रपञ्चयति २२ द्वाविंशति श्लोकपर्य्यन्तम् ।

अर्थप्रवृत्तितत्वानां शब्दाएव निवन्धनम् ।
तत्त्वाववोधः शब्दानां नास्ति व्याकरणादृते ॥१३॥

अर्थेति अर्थानां घटपटादि व्यक्तीनां प्रवृत्तयः व्यवहारविषयताः तासां तत्त्वानि तेषां निवन्धनम् ज्ञापकम् शब्दाएव निवन्धनेतिविशेषणे एकवचनम् उद्देश्यतावच्छेदकशब्दत्वव्यापकतया विधेयान्वयबोधनाय विशेष्यगत वहुत्वसंख्याया विशेषणेनाऽविवक्षया वेदाः प्रमाणमितिवत् जातिगतैकत्व मादाय वोध्यम् तत्त्वपदेनात्र विवक्षाया ग्रहणमितिकेचित् विवक्षावशादेवहि लोकाः तत्तदर्थबोधनयोग्यं तत्तच्छब्दं प्रयुञ्जते यथारूपग्रहणयोग्येन चक्षुरिन्द्रियेणैव रूपोपलब्धिः नतुश्रवणेन प्रयोगश्चशब्दाधीनः अतः शब्दमन्तरा विवक्षाया असम्भवात् विवक्षानिवन्धनम् शब्दाः अपरे तत्त्वपदेन घटत्वपटत्वादिसामान्यङ्गृह्यते तेषांनिवन्धनं वोधकः शब्दइत्याहुः परेतु प्रवृत्तिपदेन आख्यातार्थ जननादिक्रिया वोध्यते तस्यास्तत्वं साध्यत्वम् साधनाकाँक्षारूपम् सर्वत्रहि प्रथमं नाम बुद्धौ कृत्वैवार्थं साधयति यथाकुम्भकारः पूर्वं बुद्धौ घटं वा शरावं वा करिष्यामीति विनिश्चित्यैव तदनुसारेण घटं शरावञ्चरचयतीत्यतःसाध्यत्व निवन्धनं शब्दा इति कथयन्ति शब्दानां तत्वं साधुत्वं तस्या ववोधः ज्ञानम् व्याकरणादृते शब्दशास्त्रं विना नास्ति नभवतीत्यर्थः १३

तद्द्वार मपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्याना मधिविद्यं प्रकाशते ॥१४॥

तद्द्वारेति अपवर्गस्य मोक्षस्य द्वारं व्यापारः तद् व्याकरणम् अयमाशयः व्याकरणेन साधुशब्दानां ज्ञानात् प्रयोगाच्च सञ्जातधर्म्मविशेषेण विशुद्धेऽन्तःकरणे वर्णपदवाक्यात्मकध्वन्यतिरिक्ता एकाऽखण्डरूपा मध्यामावाक् प्रत्यगन्तःकरणसन्निविष्टा एवाऽर्थबोधिका सएव स्फोट इति साक्षात्कारो भवति ततोऽपि दृढ़ताराभ्यासात् मध्यमावाक्प्रकृतिभूतां नाभीस्थांपश्यतीं वाचं पश्यन्ति ततोप्युर्ध्वमननात् मूलाधारस्थां ब्रह्मरूपिणीं परानाम्नीं वाचं पश्यन्ति ततश्च ब्रह्मज्ञानान्मोक्षः इति मोक्षमार्गे प्रथमस्थानम् व्याकरणम् इति योगविद्वेद्यम् वाङ्मलानां वाग्दोषाणां चिकित्सितम् भावक्तान्तादर्शाद्यच् तथाच चिकित्साविशिष्टमिति फलितम् यथा आयुर्वेदे शारीरिकचिकित्सा सर्वविद्यानांसर्वासु विद्यासु इदं,पवित्रम् पुण्यम् सकल विद्यास्थशब्दसंस्कारकत्वात् अधिविद्यं विद्यासु विभक्त्यर्थेऽव्ययीभावः प्रकाशते द्योतत इति १४

यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।
तथैव लोके विद्याना मेषा विद्या परायणम् ॥१५॥

यथार्थेति यथा अर्थजातयः घटत्वपटत्वादयः सर्वाः सकलाः शब्दाकृतयः घटशब्दत्वपटशब्दत्वादयः निबन्धनानि वाचकानि यासां ताःअयम्भावः अर्थगतजाति र्वाच्या शब्दगतजातिः वाचिका तथाच शब्द ज्ञानाधीनं अर्थज्ञानं अतः शब्दानां प्राधान्यम् तथैवलोके विद्यानांमध्ये एषा विद्या परायणम् श्रेष्ठा प्रधानशब्दसंस्कारकत्वात् इति १५

इदमाद्यपदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सामोक्षमाणाना मजिह्मा राजपद्धतिः ॥१६॥

इदमेति सिद्धेः मोक्षस्य सोपानम् आरोहमार्गः तस्य पर्वाणि ग्रन्थयः तेषां मध्ये आद्यं प्रथमं पदस्थानं चरणनिःक्षेपस्थलम् इदं व्याकरणम् मोक्षमाणानां मुक्तिकामानां साइयं अजिह्मा अकुटिला सुखेन गम्या इत्यर्थः राजपद्धतिः राजमार्गःअस्तीतिक्रियाक्षेपः इयमिति स्त्रीलिङ्गनिर्देशःउद्देश्यविधेययोरैक्यमापादयत्सर्वनाम पर्य्यायेण तत्तल्लिङ्ग भाग् भवतीति न्यायेन

विधेयगतस्त्रीत्वविवक्षया । १६

अत्रातीतविपर्य्यासः केवला मनुपश्यति ।
छन्दस्यश्छन्दसां योनि मात्मा छन्दोमयीं तनुम् ॥१७॥

अत्रेति अत्र व्याकरणे अतीतविपर्य्यासःअपगतभ्रमः सम्यग्ज्ञानवान् इतियावत् छन्दस्यः शुद्धः आत्मा अन्तःकरणम् छदसां योनिं कारणम् छन्दोमयीं छन्दोरूपां तनुं सुक्ष्मां केवलां मध्यमाद्याख्यां वाचम् अनुपश्यति जानाति १७

प्रत्यस्तमितरूपाया यद् वाचोरूपमुत्तमम् ।
यदग्निनेव तमसि ज्योतिः शुद्धं प्रवर्त्तते ॥१८॥

प्रत्यस्तमितेति प्रत्यस्तमितानि आच्छादितानि अज्ञातानीतियावत् रूपाणि घट इति प्रथमैकवचनविभक्त्यन्तत्वं भवतीति प्रथमपुरुषैकविभक्त्यन्तत्वम् इत्याद्याकारकाणि यस्याः तस्याः वाचः घटोभवतीत्यादेः यत् उत्तमंरूपं घट इतिरूपं भवती तिच रूपं इत्यर्थ केचिद्वदन्ति परेतु व्याकरणानभिज्ञा लोकाः घटोभवतीत्यादिस्थले श्रावणप्रत्यक्षविषयवर्णादिषु एवशब्दत्वं मन्यन्ते नतु तदभिव्यङ्ग्यः तदतिरिक्तः अखण्डस्फोटः शब्द इति जानन्ति अतः प्रत्यस्तमितं रूपं अखण्डत्वादि यस्या स्तस्या वाचः मध्यमाख्यशब्दस्फोटस्य यत् उत्तम रूपं अखण्डत्वादि एतस्मिन् कल्पे उत्तमपदस्य अग्रेशुद्धपदस्य च स्वारस्यं स्वरसतः उपपद्यते इत्याहुः तमसि अन्धकारे अज्ञान्तःकरणे च ज्योतिः पद्मादि प्रकाशः अग्निना इव व्याकरणेन शुद्धः स्वच्छं प्रवर्त्तते सम्पद्यते इतिदिक्

वैकृतं समतिक्रान्ता मूर्त्तिव्यापारदर्शनम् ।
व्यतीत्या लोकतमसी प्रकाशं य मुपासते ॥१९॥

वैकृतंमिति वैकृतं तदाख्यनादं समतिक्रान्ता अतीत्यवर्त्तमाना मध्यमादिवाक् आलोकतमसी व्यतीत्य त्यक्त्वा मूर्तिः स्वकीयाखण्डत्वादिः व्यापारः, घटाभिव्यङ्ग्येन घटत्वावच्छिन्नबोधनं पटाभिव्यङ्ग्येन पटत्वावच्छिन्न बोधनञ्चेत्यादि तयोर्दर्शनं ज्ञापकं यम्प्रकाशं व्याकरणाख्यम् उपासते समाश्रयते अयम्भावः घटादिरूपंआलोके मण्यादि प्रकाशश्च अन्धकारे प्रस्फुरति मध्यमावाचस्तु मूर्त्तिव्यापारौ उक्तोभयातिरिक्ते व्याकरणे ज्ञायेते इति व्याकरणस्य प्राशस्त्यम्—इतिदिक् १९

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिविम्ववत् ॥ २० ॥

यत्रेति यत्र व्याकरणे वाचः मध्यमावाचः निमित्तानि वर्णपदवाक्य प्रकृतिप्रत्ययादीनि अक्षरस्मृतेः, वास्तविकाकाशवृत्त्यक्षराणां स्मरणस्य चिह्नानीव लिपयइव शब्दपूर्वेणयोगेन प्रकृतिप्रत्ययादिव्युत्पादनेन प्रतिविम्ववत् प्रतिछाया इव भासन्ते ज्ञायन्ते अयमाशयः, व्याकरणे प्रकृति प्रत्ययादि व्युत्पादनं मध्यमावाचः स्मरणार्थं चिह्नम् नतु वास्तविकमिति तस्या अखण्डत्वात् अक्षरस्य लिपिरिवेति ॥ २० ॥

अथर्वणा मङ्गिरसां साम्ना मृग्यजुषस्यच ।
यस्मिन्नुच्चावचा वर्णाः पृथक् स्थितपरिग्रहाः ॥ २१ ॥

अथर्वणामिति ऋक् च यजुश्चेति द्वन्द्वे द्वन्द्वाच्चुदषहान्तेतिटच्त्रि ऋग्यजुषः तस्य अन्यत् सर्वं सुगमम् सर्वासां श्रुतिस्मृतीनामिति यावत् उच्चावचाः स एव कचित् उदात्तः कचित् अनुदात्तः कचित् आत्मना अन्यत्र त्मना इत्यादिरूपा वर्णाः यस्मिन् व्याकरणे पृथक् स्थितपरिग्रहाः असंकीर्णाः यथावत् प्रतिपादिता इत्यर्थः ॥ २१ ॥

यदेकं प्रक्रियाभेदैं र्वहुधा प्रविभज्यते ।
तद् व्याकरण मागम्य परं ब्रह्माधि गम्यते ॥ २२ ॥

यदिति यद् एकं व्याकरणं भवतीत्यादौ पदं प्रक्रियाभेदैः कचित् लट् तस्य स्थाने तिप् कचित्तिपः लट संज्ञा इत्याद्युपाय भेदैः वहुधाप्रविभज्यते विभक्तं भवति तद् व्याकरणं आगम्य ज्ञात्वा मध्यमावागादिज्ञानद्वारा परं ब्रह्म अधिगम्यते प्राप्नोतीतिदिक् २२ ॥

ननु अनित्याः शब्दाश्चेद् तदा लोकाः प्रतिक्षणं नवं नवं उत्पादयिष्यन्ति ततः शब्दानां व्याकरणेन अनुगन्तु मशक्यत्वात् किं व्याकरणेन इत्यत आह

नित्याः शब्दार्थ सम्वन्धाः समाम्नाता महर्षिभिः ।
सूत्राणां सानुतंत्राणां भाष्याणाञ्च प्र णेतृभिः ॥ २३ ॥

नित्याइति अस्य व्याख्या स्पष्टैव सूत्रकारवार्तिकारभाष्यकाराणां त्रयाणां मते शब्दः अर्थः सम्वन्धश्चेति त्रयोऽपि नित्याइति तात्पर्य्यम् यदि शब्दाः अनित्याःस्यु तदा प्रतिक्षणं उत्पत्तिमतां शब्दानां असंख्यातत्वेन अनुगमासम्भवात् श्रीपाणिनेः सूत्रप्रणयनमेव व्यर्थस्यात् यदिनित्याः तदा तेषां व्यवस्थिततया अनुगमाय सूत्रप्रणयनं सार्थकम् यद्वा तदशिष्यं संज्ञा प्रमाणत्वात इति

सूत्र मेव प्रमाणम् सिद्धे शब्दार्थ सम्बन्धे, इति वदन् वर्त्तिककारोऽपि प्रमाणम् नित्येषु शब्देषु कुटस्थैरविचालिभिरित्यादि भाष्यकारोक्तमपि नित्यत्वेऽनुकुलम् इत्याद्यूह्यम् अत्रत्यविचारो वादिविजयाय वितन्यते केचित्तु शब्दपदेन शब्दत्वव्याप्यकलशशब्दत्वादिजातिः अर्थपदेन अर्थगत घटत्वादिजातिः बोध्यते जातिरेव वाचिका जातिरेव वाच्या ते उभेनित्ये ननु जातेः वाचकत्वे तस्या नित्यत्वेन सदा विद्यमानतया सर्वदैव कथंनार्थबोध इतिचेन्न तस्या विद्यमानत्वेऽपि अभिव्यक्तेरभावात् तथाहि कलशशब्दत्वाश्रय कलशशब्दस्योच्चारणानन्तरं श्रावणज्ञानं यदा भवति तदा तद्गतजातिः, अभिव्यज्यते अनुच्चारण दशायां तदभि व्यञ्जक शब्दव्यक्ते र्ज्ञानाभावेन जातेरपि ज्ञानाभावः नच कम्बुग्रीवादि मद्व्यक्ते र्यावतां अवयवानां युगपत् विद्यमानतया तदारब्धः अवयवी कम्बुग्रीवादिमान् तस्मिन् घटत्वजातेः पर्य्याप्तत्वेन अवयविज्ञानेन तद्गतजातिरभिव्यज्यते इति समुचितम् कलशशब्दस्य तु प्रत्येकवर्णानामुच्चरितप्रध्वंसितत्वेन ककारादिवर्णात्मकावयवानां यावतां युगपद्साहित्यावस्थानासम्भवेन अवयविनमारब्धुमशक्यतया अवयविनि कलशशब्दत्वज्जातेः पर्य्याप्तत्वा भावेन कथं सा जाति रभिव्यज्यते प्रत्येकं पर्य्याप्तत्वे तु द्वितीयादि वर्णोच्चारणस्य वैयर्थ्यापत्तिश्चेति वाच्यम् यथा न्याय नयेऽपि भ्रमणत्वं जातिः भ्रमण व्यवहार्य्यता अनेकेष्वेव व्यापारेषु नतु एकस्मिन्व्यापारे तथाच क्रियायाः तृतीयक्षणे ध्वंसात् प्रथम व्यापारस्य द्वितीय व्यापारोत्पत्तिसमये नाशः तस्यापि तदुत्तरव्यापारकाले नाशः एवंरीत्या क्रमेण उत्पद्यमानानां विनश्यतांश्च यावतां व्यापाराणां एकस्मिन् काले साहित्याऽसम्भवेऽपि अपेक्षाधिया यावतां संकलनया तावद्व्यापारात्मकावयवारब्धावयविरूपं भ्रमणाख्यक्रियाविशेषं बुध्यते ततश्च तद्गतजातिरपि बुध्यते एव प्रकृते क्रमेण उत्पद्यमानानां विनश्यतांश्चापि वर्णानां स्मरणद्वारा एककाले साहित्यसम्भवेन अवयविज्ञानेन तद्गतजात्यभिव्यक्तेर्बाधकोभावात् प्रत्येकं अपर्य्याप्तत्वेन द्वितीयादिवर्णोच्चारणवैयर्थ्याभावाच्च वस्तुतस्तु वैयाकरण मते वर्णानां उच्चरितप्रध्वंसितत्वेन साहित्यासम्भवात् पूर्व पूर्व वर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णानुभवोद्बुद्धसंस्कारेण युगपत् यावत् वर्णानां स्मरणेन साहित्यसम्भवेऽपि नष्टविद्यमानयोः अधिकरणतायाः नष्टे घटे जलम् इत्यादिवत् व्यवहारविरुद्धतया शक्त्याश्रयताया असम्भवाच्च कलशेत्याद्यति रिक्तः तदभिव्यङ्ग्यः स्फोट एव वाचकः स एव जातिरूपः नित्यश्च सच पूर्व पूर्व वर्णानुभवजनितसंस्कारसंस्कृते अन्तःकरणे अन्त्य वर्णविज्ञानतोऽभिव्यज्यते यथा मण्यादि परिचयः वारं वारं दृष्टेसति तरात् संस्कार संस्कृतेन मनसा क्रियते अत एव न पूर्व पूर्व वर्णानामानर्थक्यम् तथाच यथा प्रदीपादौ अभिव्यञ्जके घटाद्यधिकरणतायाः असत्वेऽपि तत्सम्बन्धेन अभिव्यज्यते तथैव कलशेत्याद्यानुपर्वीषु जात्यधि

करणतायाः असत्व स्वीकारेऽपि तत्राइ वर्णे जातेरभिव्यक्तिः अधिकरणञ्चास्या मध्यमावागाख्यस्फोटरुपतया हृदिस्था मध्यमाज्ञेया इति प्रमाण्यात् हृदयदेशः एवञ्च न दोषलेश इति बोध्यम् अपरे जाति मस्वीकुर्वाणा अनेकवर्णाभिव्यङ्ग्यां नित्यां शब्दव्यक्तिं मन्यन्ते तत्रापि केचन एकस्यामपि कलशादिशब्दव्यक्तौ नाना वर्णा इति संगिरन्ति परेतु प्रतिपदं प्रतिवाक्यं चैक एव शब्द अवास्तविकक्रमोत्पन्नावयवप्रत्ययभासतया प्रकाशते इत्याहुः अपरे व्यवहारानादित्वेनैषां नित्यत्वं स्वतोऽनित्यत्वञ्चेति स्वी कुर्वन्ति अर्थानामपि आकृति नित्यत्वात् व्यक्तिप्रवाहनित्यत्वाद्वा नित्यत्वं मन्यंते सम्बन्धमन्तरा अर्थोपदेशस्या शक्य कर्त्तव्यत्वात् सम्बन्धोऽपि औत्पत्तिकः स्वभावसिद्धः अनादिः प्राप्ताविच्छेदः इति नित्य इति सिद्धम् सच शब्दार्थयोः शङ्केतग्राह्या तादात्म्य रूपा योग्यता यथेन्द्रियविषययोः प्रकाश्यप्रकाशकभावः केचित्त्व शब्दैरर्थानां बुद्धौ कल्पनात् अर्थ बुद्ध्याच तत्प्रतिपादनाय शब्दकल्पनात् कार्य्यकारण भावः सम्बन्ध इत्याहुः २३

ननु वाक्य स्यैव लोके प्रयोगात् वाक्यवाक्यार्थयोः ।तत्सम्बन्ध स्यैवच नित्यत्वात् इति प्रकृति प्रत्यादि कल्पनं विफल मित्यतआह

**अपोद्धारपदार्था ये येचार्थाः स्थितलक्षणाः ।**
**अन्वाख्येयाश्च ये शब्दा येचापि प्रतिपादकाः॥२४॥**

अपोद्धार इति अपोद्ध्रियन्ते यानि तानि अपोद्धाराणि कर्म्मणि घञ्-तानि च पदानि तेषां अर्थाःअयमर्थःलोके वाक्यस्यैव प्रयोगात् अखण्डवाक्यार्थ एव वास्तविकः अतएव वृक्ष इत्युक्तेक्रियापदं विना अर्थानिरूपणात् क्रिया विशेषापेक्ष नियमः अतः सर्वत्र अस्ति भवतीत्यादीनामाक्षेप इति वैयाकरणसमयः परञ्च तेषामानन्त्यात् प्रतिपदपाठेन उपदेशं कर्त्तु मशक्यतया लघुनोपायेन साधु शब्दबोधनाय शास्त्रे, पदानि प्रविभज्य तेषामर्था अपि कल्पिता ते एव अर्थाः अपोद्धारंपदार्थाः कथ्यन्ते एवं शास्त्रव्यवहारं दृष्ट्वा लोका अपि अस्य पदस्य अयमर्थः इत्यादि व्यवहरन्ति अतएवापोद्धृतपदस्यै वार्थवत्वं मत्वा कृत्तद्धितान्तश्चैवार्थवत्वकेवलाः कृत स्तद्धितावेति भाष्ये उक्तम् एव मेव ऋषिभिः स्वस्वभावनानुसारेण प्रकृतिः प्रत्ययः तत्तदर्थश्च धात्वर्थः प्रातिपदिकार्थः इत्यादि कल्पितः अतएव अर्थवत् सूत्रे अप्रत्यय पर्य्यु दासः अधातु पर्य्यु दासश्चरितार्थः इति तत्सूत्रे भाष्ये स्पष्टम् ( अन्वाख्येयाश्चेति ) प्रकृतिप्रत्यादयः प्रतिपादका इति भूतिभू पतिरित्यादि पदानि वाक्यानि च तत्र केषाञ्चित् पदावधिकान्वाख्यानं केषाञ्चि द्वाक्यावधिकान्वाख्यानम् तत्र पूर्वपक्षे विशेषणपदानि सामान्यार्थ बोधकतया सामान्ये नपुंसक मिति बलेन नपुंसकैकवचने लब्ध संस्काराणि विशेष्यपदान्तर सम्बन्धे सत्यपि अन्तरङ्गत्वाज्ञात संस्कारस्य बाधायोगेन नपुंसक लिङ्ग एव प्रयोगो भवेत् तदर्थं विशेषणानांचाजातेरिति भाविबहिरङ्ग सम्बन्धापेक्ष

संस्कारबोधकम् द्वितीयपक्षेतु पदानां सामान्यार्थत्वमेव नास्ति एवं द्वन्द्वे द्वन्द्वपदानां प्रत्ययवयबं संस्कारे वहुषुलुगुवबन मुपन्यस्तम् वाक्य संस्कारमादाय नवा सर्वेषां द्वन्द्वे वह्वर्थत्वा दित्युक्तमित्यलम् अस्य अग्रीम तृतीयश्लोकेना काक्षांपूर्तिः । २४

कार्य्यकारण भावेन योग्य भावेन चस्थिताः ।
धर्म्मे ये प्रत्यये चाङ्गं सम्वन्धाः साध्व साधुषु ॥२५॥

( कार्य्येति ) शब्दश्च अर्थबोधं जनयति ज्ञानञ्च अर्थेषुप्रत्यस्तमितरूपं सत् अर्थत्वेनाध्यवस्यति तथैव अर्थंबुद्ध्वा तत्प्रतिपादनाय शब्दप्रयोगः अतः शब्दार्थयोः परस्परं ( कार्य्यकारण भावः ) सम्बन्धस्तेन ( योग्य भावनेति ) अयमर्थः कार्य्यकारणयोर भेदाध्यव सायात् योयं शब्दः सोयमर्थोयोयमर्थः सोयंशब्दः इति प्रतीत्या ओमित्ये काक्षरं ब्रह्मेत्यादि प्रामाण्याच्च तादात्म्यमेव शब्दार्थयोः सम्बन्धः तदुक्तं सङ्ग्रहे शब्दार्थयोरसम्भेदे व्यवहारे पृथक् क्रिया । यतः शब्दार्थयोस्तत्व मेकं यत् समवस्थितम् ११ सम्वन्धस्यन कर्त्तास्ति शब्दानां लोकवेदयोः । शब्दैरेवहि शब्दानां सम्वन्धः स्यात्कृतः कथमिति सम्वन्धस्यै वार्थबोधने योग्यता तद् ग्रहश्च इन्द्रियविषयोरिव प्रकाश्य प्रकाशक भावेन अतएव यस्य शब्दस्य येनार्थेन तादात्म्यम् सशब्दस्तस्यै वार्थबोधने कारणम् अतो योग्य भावेनेत्युक्तम् ( स्थिताइति ) सिद्धाइत्यर्थः ( साध्वसाधुषु ) अपभ्रंशेषु संस्कृतेषुच येसम्बन्धाः ( धर्म्मे ) पुण्ये प्रत्यये अर्थबोधने ( अङ्गम् ) कारणम् अयमाशयः यथा संस्कृत शब्दानां तत्तदर्थैः सह सम्वन्धाः बोधदर्शनाज्ज्ञायन्ते तथैव भाषाशब्देभ्योऽपि अर्थबोध दर्शनात् तत्तदर्थैः सहसम्वन्धाः सिध्यन्ति परञ्चायं विशेषः संस्कृतशब्देभ्यः अर्थबोधः पुण्यञ्चोभे भवतः भाषा शब्देभ्यश्च पुनः केवलार्थ बोधएव अस्यापि सम्वन्धः अग्रीमश्लोकेनेतिदिक् २५

ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेस्मिन्नुपदर्शिताः ।
स्मृत्यर्थ मनुगम्यन्ते केचि देव यथागमम् ॥२६॥

(ते लिङ्गैरिति)(ते) पूर्वश्लोकद्वयेउक्ताः ( लिङ्गैः ) सूत्रकारादिभिः तिप्तस्झीत्यादि रूपेण ( स्वशब्दैश्च ) प्रतिपदपाठरूपेण ( अस्मिन् ) व्याकरणे ( उपदर्शिताः ) व्यवस्थापिताः ( स्मृत्यर्थं ) स्मृतिप्रणनाय लोकैरपि कैश्चित् इत्याक्षेपः ( यथागमम् ) श्रुत्यनुकूलम् केचि देव अनुगम्यन्ते स्पष्टोऽस्यभावः

ननुचैषा साध्वसाधुव्यवस्था अप्रामाणिकी इत्यत आह

शिष्टेभ्य आगमात्सिद्धाः साधवो धर्म्म साधनम् ।
अर्थप्रत्यायनाभेदे विपरीतास्त्व साधवः ॥२७॥

अस्यान्वयः स्पष्टएव अयमाशयः साध्वपभ्रंशयोरूभयोरर्थबोधकताया स्तुल्यत्वेऽपि संस्कृत शब्दप्रयोगे धर्म्मो भवति अपभ्रंशप्रयोगे नेति व्यवस्था शिष्टानां परम्पराव्यवहारदर्शनेन तद्बोधकस्मृतिः श्रुतिमूलिकैव मन्वादि स्मृतिवत् २७

नन्वस्तु शब्दनित्यतावादिमते शिष्टोक्तशब्दानामेव व्याकरणेनानुगमात् श्रुतिमूलकत्वम् अनित्याश्च शब्दाः व्याकरणेन निष्पाद्यन्ते इति तार्किकादिमते कथमागममूलकत्वमतआह

**नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते ।**
**प्राणिनामिव सा चैषा व्यवस्था नित्यतोच्यते ॥२८॥**

( नित्यत्व इति तेषां ) शब्दानां ( नित्यत्वे कृतकत्वे ) अनित्यत्वे वा ( आदिर्न ) विद्यते अनादित्वम् वर्त्तत इति यावत् ( प्राणिनामिव ) संसारिणामिव सा एषा ( व्यवस्था नित्यता ) व्यवहार नित्यता उच्यते यथा संसारिणां उत्पन्नविनाशयो र्दृष्टत्वेऽपि अनादित्वेन प्रवाहनित्यत्वात् उक्तव्यवस्थायाः शिष्टव्यवहारानुमितश्रुतिमूलकत्वम् इतिभावः २८

ननु लोकत एव साध्वसाधु व्यवस्था ज्ञास्यते किं व्याकरणेनेत्यत आह

**नानर्थिकामिमां कश्चित् व्यवस्थां कर्त्तुमर्हति ।**
**तस्मान्निबध्यते नित्या साधुत्वबिषया स्मृतिः ॥२९॥**

( नानर्थिकामिति ) अन्वयः सुगमः अयमाशयः अयंसाधुरयमसाधुः इति नियमः धर्म्माधर्म्म निबन्धकतया अर्थवत्वेन कर्तव्यत्वात् इदानीं तनेभ्यः कैश्चिदपि अनन्तानन्तप्रयोगविषयकनियमं कर्त्तुमशक्यत्वाच्च नित्यैव व्याकणस्मृतिः गुरू परम्परया ( निबध्यते ) इति

ननु अनन्त प्रयोग विषयापीयं व्यवस्था प्रबलतर्केण साध्याचेत् किम् व्याकरणेनेत्यत आह

**नचागमादृते धर्म्म स्तर्केण व्यवतिष्ठते ।**
**ऋषीणामपि यद् ज्ञानं तदप्यागम हेतुकम् ॥३०॥**

( नचेति आगमादृते ) वेदं बिना ( तर्क्केण ) अनुमानेन ( धर्म्मः ) नच ( व्यवतिष्ठते ) नतु व्यवस्थितो भवतीत्यर्थः सूक्ष्मादि यावत् पदार्थानां पुरुषैर्ज्ञातुमशक्यत्वात् ननु ऋषयः अतीन्द्रियप्रत्यक्षकर्त्तारः अनुमास्यन्ति इत्यत आह ( ऋषीणामपि यद् ज्ञानं ) सूक्ष्मादि प्रत्यक्षं( तदपि आगमहेतुकं ) वेदोक्त कर्म्मानुष्ठान जनितमित्यर्थः अयम्भावः काशीस्थस्य पुरुषस्य प्रयागगमनेऽपि स्वभावो न व्यतिक्रमते कर्म्मणान्तु देश काल मन्त्रादि भेदेन सामान्य नगरे

गोदानेन यत्फलं ततोऽधिकं काश्यादि क्षेत्रे तत्रापि ग्रहणे अधिकतरं तत्रापि मंत्रादिपूर्वकेनाधिकतममित्यादि फलजननस्वभावस्य भिन्नत्वात् स्वभावस्य नैयत्याभावात् साहचर्य्यादि द्वारा व्याप्तिग्रहाभावेन धर्म्मव्यवस्था तर्क्केण नानुमातुं शक्या अतः आगमबलादेव अदृष्टधर्म्माधर्म्मव्यवस्था तथाच साध्वसाधुप्रयोगविषया धर्म्माधर्म्मव्यवस्था व्याकरणम् विना न तर्क्क साध्या इतिफलति यद्यपि ऋषयः योगजधर्म्मबलात् अतीन्द्रियपदार्थानपि साक्षात्कृतवन्तः तथापि तेषामपि सिद्धावस्थातः पूर्वं आगमोक्तयोगानुष्ठानात् आगमेनैव धर्म्म निर्णयः नतु शुष्कतर्क्केणेति सिद्धम् ३०

नन्वस्तु यत्र तर्कानवसरः तत्रागमस्य प्रामाण्यं यत्रतु सम्भवति तर्क्कः तत्र तेनागमो बाध्यतामित्यत आह

**धर्म्मस्यचाव्यवच्छिन्नाःपन्थानो ये व्यवस्थिताः।**
**नताँल्लोकप्रसिद्धत्वात्कश्चि त्तर्क्केण बाधते ॥३१॥**

( धर्म्मस्येति धर्म्मस्य अव्यवच्छिन्नाः ) अभ्रष्टाः सदा विद्यमाना इति यावत् ( व्यवस्थिताः ) नियताः ( ये पन्थानः ) मार्गाः तरति ब्रह्महत्यां योऽश्वमेधेन यजेते त्यादयः ( तान् ) मार्गान् ( कश्चित् ) शिष्टजनः ( लोकप्रसिद्धत्वात् ) लौकिकव्यवहारानुसारात् ( तर्क्केण ) स्वयुक्त्या ( न बाधते ) न विरुणद्धीत्यर्थः अयमाशयः लोके हिंसायां विरुद्धत्वेऽपि वायव्यंश्वेतपशु मालभेते तिश्रुतिबलात् याज्ञीय पशुवधस्य धर्म्मसाधकत्वं मन्यन्ते शिष्टाः अत आगमो न तर्क्क बाध्य इति ३१

किञ्चानु मानादीनां व्यभिचारो प्यस्ती त्याह

**अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु ।**
**भावाना मनुमानेन प्रसिद्धि रतिदुर्लभा ॥३२॥**

( अवस्थेति ) यादृशो युवावस्थायां बलः तादृशोन वार्द्धके इत्य ( वस्थाभेदात् ) हिमालये शीततरस्पर्शवज्जलं बलाहकाग्निकुण्डादिषु तूष्णम् इति ( देशभेदात् ) ग्रीष्मे सूर्य्यस्य यादृशप्रण्डांशवः न तादृशो हेमन्ते इति ( कालभेदात् भिन्नासु शक्तिषु ) सतीषु ( भावानां ) वस्तूनां ( प्रसिद्धिः ) साहचर्य्यादि स्वभावः अनुमानेन युक्त्या ( दुर्लभा ) दुःप्रापा इत्यागम बलादेव धर्म्मोनिर्णेतव्य इतिफलितम् ३२

किञ्च प्रतिबन्धकवशात् सतोऽपिस्वभावस्य विनाश इत्याह

**निर्ज्ञातशक्तेर्द्रव्यस्य तान्ता मर्थक्रियां प्रति ।**
**विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ॥३३॥**

( निर्ज्ञातेति ) तां तां ( अर्थक्रियां ) दहनादिं प्रति ( निर्ज्ञाता ) दृष्टा ( शक्ति ) र्दाहकता यस्य तस्य ( द्रव्यस्य, अग्नेः ( विशिष्टद्रव्यसम्बन्धे ) प्रतिबन्धकमणिसमवधाने साशक्ति र्दाहकता प्रतिबध्यते विनश्यतीत्यर्थः अतः स्वभावानुगमोदुर्घट इति भावः

किञ्चैकेनानुमितस्यार्थस्य परेण खण्डनात् तर्केषु न कस्यचिद् विश्वास इत्याह

यत्नेनानुमितोप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरै रन्यै रन्यथै वोपपद्यते ॥३४॥

( यत्नेनेति ) अन्वयः सुगमः उदाहरणम् यथा केनचित् शब्दः द्रव्यम् अव्यवहितसम्बन्धग्राह्यत्वात् घटवत् इत्यनुमानेन शब्दे द्रव्यत्वे साधिते परेण शब्दो न द्रव्यं बहिरिन्द्रिय व्यवस्थाहेतुत्वात् रूपादिवत् इत्यनुमित्या शब्दे द्रव्यत्वाभावः साध्यते अतः केवलतर्के विश्वासो न कार्यः अतएव भगवन्तो जैमिनि व्यासादमः विरोधे त्वनपेक्षं स्या दसति ह्यनुमानम्, तर्का प्रतिष्ठानात् इति सूत्रयाँ चक्रुरिति ३४

नन्वेवम् ऋषीणां सूक्ष्मासूक्ष्म व्यवहिता व्यवहित विषयकं यद्ज्ञानं तदपि आनुमानिकं तथाच तत्रापि विश्वासो नस्यादतआह

परेषा मसमाख्येय मभ्यासा देव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ॥३५॥

( परेषामिति ) (परेषाम् ) अन्यान् जनान् प्रति ( असमाख्येयम् ) अवाच्यम् ( मणिरूप्यादिविज्ञानम् ) अयम् मणि र्वास्तविकः अयंन इदं रूप्यकं सत्यम् इदमसत्य मित्यादि बोधः ( तद्विदां ) मण्यादिपरीक्षकाणां (अभ्यासादेव) वारं वारं स्वयमभ्यासादेव ( जायते ) उत्पद्यते ( नानुमानिकम् ) नानुमानकृतमित्यर्थः अयम्भावः यथा लोका मण्यादिपरिचये अनेकशोऽभ्यासा न्मणिपरीक्षका भवन्ति यथा वा षड्जादिस्वरभेदं शास्त्रतोज्ञात्वा पि स्वयमभ्यासादेव गाथका भवन्ति तथैव ऋषयोऽपि योगादौ अभ्यासात् योगजधर्म्मबलेन अतीन्द्रिय द्रष्टारो भवन्ति नानुमानेन अतोन ऋषिज्ञानेऽविश्वास इति ३५

अन्यामपि युक्तिमाह

प्रत्यक्षमनुमानञ्च व्यतिक्रम्य व्यवस्थिताः ।
रक्षः पितृपिशाचानां कर्म्मान्ता एवसिद्धयः ॥३६॥

( प्रत्यक्षेति ) रक्षाँसि च पितरश्च पिशाचाश्च तेषां ( कर्म्मान्ता एव ) कर्म्म परिपाकाः अनुष्ठानजन्यादृष्टनिमित्ता इतियावत् सिद्धयः व्यवहिता

व्यवहित सूक्ष्मा सूक्ष्मादि दर्शनरूपाः(प्रत्यक्षं) लौकिकसामग्रीजज्ञानम् (अनुमानं) लिङ्गज्ञानजज्ञानञ्च ( व्यतिक्रम्य ) हित्वा व्यवस्थिताः प्रवृत्ताः अयमाशयः सत्यपिकुड्यादिव्यवधाने अन्तर्गृहस्थितवस्तूनि राक्षसादयः पश्यन्ति तत्र कोहेतुः तत्तत्कर्म्मसम्पादितादृष्टशक्तिरेव तथैव ऋषयोऽपि तपः सम्पादिता दृष्टशक्तिवलादेव पश्यन्ति नतु लौकिकप्रत्यक्षेणानुमानेन वा येना सम्भवात् तत्र लोकानामविश्वासो भवेदतः ऋषिज्ञानं विश्वनीय मेवेति निर्गलितोर्थ इतिदिक् ३६

नन महर्षिज्ञानं यदि नानु मितिरूपं लौकिक सन्निकर्षा भावात् न प्रत्यक्षरूपं वा तदा किमात्मक मित्या शंक्य योगजधर्मरूपालौकिकसन्निकर्षजन्यत्वा दलौकिकप्रत्यक्षरूपतां दर्शयितु माह

**आविर्भूतप्रकाशानाम नुपद्रुतचेतसाम् ।**
**अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥३७॥**

( आविर्भूतेति आविर्भूताः ) उद्बुद्धाः प्रकाशाः सत्वगुणा येषां तेषाम्, ( अनुपद्रुतचेतसाम् ) नास्ति उपद्रुतं उपद्रवः विषयवासनाजनित मालिन्यदोषो येषु तानि अनुद्रुतानि चेतांसि येषां तेषाम् महर्षीणामित्याध्याहारः ( अतीतं ) भूतं ( अनागतं ) भविष्यत् तदुभयविषयकज्ञानं इदमुपलक्षणम् सक्ष्मासूक्ष्मव्यवहिताव्यवहितादीनाम् ( प्रत्यक्षान्नविशिष्यते) नविलक्षणम् भवति प्रत्यक्षरूपमेव भवति किन्तु योगजधर्म्मेणा लौकिकसन्निकर्षेण जन्यत्वात्, अलौकिकप्रत्यक्षरूपमिति फलितम् यथाहिलोके स्वमुखमपश्यमानोऽपि शुद्धदर्पणादि द्वारा प्रतिविम्बरूपेण पश्यति तथैव महर्षीणां तपसा विशुद्धेऽन्तःकरणे यावतां वस्तूनां दर्शनं भवतीति सारांश इति विभाव्यताम् सुधीभिः

ननुलोके, इन्द्रिय सम्बद्धस्यैव प्रत्यक्षात् इन्द्रियासम्बद्धस्य प्रत्यक्षम् तेषामनुमिति विरुद्ध मित्यत आह

**अतीन्द्रियान संवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।**
**ये भावान् वचनं तेषां नानुमानेन वाध्यते ॥**

( अतीन्द्रियेति ये ) महर्षयः, ( अतीन्द्रियान् ) इन्द्रियाण्यतिक्रान्तान् असंवेद्यान् अन्यैर्दुर्ज्ञेयान् ( भावान् ) पदार्थान् ( आर्षेण ) तपः सम्पादितेन चक्षुषा, अन्तर्नयनेन ( पश्यन्ति ) प्रत्यक्षीकुर्वन्ति तेषां [ वचनं ] उपदेशः अनुमानेन निरवधिकतर्क मात्रेण [ नवाध्यते ] नविरूध्यते, अतोमहर्षीणां प्रत्यक्षं तदनुसारि वचनञ्च न केनचन प्रामाणान्तरेण वाध्यमिति फलितम् ३८

तेषां प्रत्यक्षे न केनापि विप्रतिपत्तिर्विधेयेत्यत्रलौकिकप्रत्यक्षमेव दृष्टांतमुपन्यस्याध्यवसाययति

योयस्य स्वमिवज्ञानं दर्शनं नाभिशङ्कते ।
स्थितं प्रत्यक्षपक्षे तं कथमन्यो निबर्त्तयेत् ॥ ३९ ॥

[ यो यस्येति ] [ यः, ] घटप्रत्यक्षीकृतवान् जनः, [ यस्य ] इतरजनस्य [ ज्ञानं ] दर्शनं सत्यं ( घटविषयकं ) [ स्वमिव ] स्वकीयज्ञानमिव [ नाभिशङ्कते सत्यमेव मनुते यथामदीयघट दर्शनं सत्यं तथैवान्यस्यापि भवेदिति निश्चिनुते [ तं प्रत्यक्षपक्षेस्थितं ] स्वयं प्रत्यक्षीकृतवन्तं पुरुषम् [ अन्यः ] , स्वयं साक्षात्कारशून्यः, केवलतार्किकः, [ कथं निवर्त्तयेत्, ] अप्रामाण्यमापादयेत् ( अपितु-नेतिकाकुः) अयम्भावः,शर्करामाधुर्य्यं मनुभूतवान् जनः,इतरजनेन शर्करा मधुरेति कथिते न शङ्कते यस्तु तदनभिज्ञः, मधुरानवेति शङ्कते तस्य शङ्कया न माधुर्य्यस्यवाधः एवमेव अतीतानागतविषयकार्षप्रत्यक्षस्य न तर्केण वाधः, तपः कृत्वा स्वयमेवानुभूयतामिति ३६

एतावता आर्षप्रत्यक्षे प्रामाण्यं व्यवस्थाप्य तद्वचनेनैव धर्म्माधर्म्मौ निर्णेतव्यौ नत्वनुमानेनेत्याह

इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये ।
आचण्डालं मनुष्याणां समं शास्त्रप्रयोजनम् ॥४०॥

[ इदमिति][ चण्डालम् अभिव्याप्य [ मनुष्याणां] अयं धर्म्मःअयमधर्म्मः ( इति पदद्वये ) वोधनद्वये [ समं ] एकरूपं [ शास्त्राणां ] ऋषिप्रणीतवचनानाम् [ प्रयोजनम् ] आवश्यकम् अतः, अनुमित्या धर्म्माधर्म्मयोर निर्णयात् तन्निर्णयाय आर्षोपदेशात्मकशास्त्राणां आवश्यकतेति फलितम् ४०

शास्त्राणां सर्वतः प्रावल्यं प्रदर्शयति

चैतन्य मिव यश्चाय मविच्छेदेन वर्त्तते ।
आगमस्तमुपासीनो हेतुवादैर्नवाध्यते ॥ ४१ ॥

[ चैतन्यमिति चैतन्यमिव ] यथा अहंममेति व्यवहारकारकम् प्रत्यक्सिद्धं ज्ञानं न केनचिदपि तस्य वाधः क्रियते तथा [ योयम् ] सर्वत्र प्रसिद्धः, [ आगमः ] विधि निषेध तदङ्ग तत्स्तुत्यादिवोधकवाक्यात्मक श्रुतिस्मृति रूपः [ अविच्छेदेन ] विध्वंश राहित्येन वर्त्तते विद्यते तमागमम् [ उपासीनः ) शास्त्रानुसारेण प्रवर्त्तमानः पुरुषः ( हेतुवादैः ) , युक्तिवादैः, वेदे, अविश्वसिभिः पण्डितम्मन्यैः, न वाध्यते न विचाल्यते इति शास्त्रमेवानु सर्त्तव्यम् इतिभावः ४१

सर्वत्रानुमानेनैव व्यवहरणे,अनर्थकारितां दृष्टांतदार्ष्टान्तिकयोः रूपकेणाह।

हस्तस्पर्शादिवाधेन विषमेप्यभिधावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥ ४२ ॥

( हस्तेति अनुमानमेव प्रधानं ) यस्य तेन एकत्र चक्षुः शून्येन परत्रागम शून्येनेति फलितम् ( विषमे ) एकत्र गिरिवनादिदुर्गमार्गे, अन्यत्र दुर्ग्रहधर्म्मा-दिमार्गे, ( अभिधावता ) एकत्र शीघ्रं गच्छता, अपरत्र अनुतिष्ठता अन्धेनेति दृ-ष्टांतस्थानीयस्य धार्म्मिकंमन्येनेति दार्ष्टान्ति स्थानीयस्य चोभयोराक्षेपः कर्त्तृ वाचकमिदम् ( हस्तस्पर्शादिः ) उपलक्षण मिदंहेतोः तस्य ( वाधेन ) हस्तेन स्पृ ष्ट्वा २ गच्छतोऽन्धस्य शुन्यदेशे स्पर्शवाधेन वन्धेति पाठपक्षे हस्तस्पर्शादिः हेतु र्वन्धः अवलम्बो यस्य तेनेति कर्त्तृविशेषणम् तर्क्केण धर्म्मं निर्णयतश्च, अदृष्ट-कर्म्मणि स्वभादि नियमाभावात् लिङ्गवाधेन हेतौ तृतीया ( विनिपातः ) एकस्य गिरिगर्त्ते; अपरस्य नरकगर्त्तेच, अधोगतिः नदुर्लभः अवश्यमेवलभ्यते इति नञ् द्वयं प्रकृतार्थं द्रढयति अतोधर्म्मनिर्णये आगमचक्षुष्मानेव समर्थ इति भावः ४२

एवञ्च साधवसाधु प्रयोगेण धर्म्माधर्म्मौ व्याकरणेनैव निर्णेयौ, इत्यतो व्या-करणनिवन्धन मिति प्रकृते निगमयति

तस्मादकृतकं शास्त्रं स्मृतिं वा सनिवन्धनाम् ।
आश्रित्यारभ्यते शिष्टैः शब्दाना मनुशासनम् ॥४३॥

तस्मेति ( तस्मात् पूर्वोक्तहेतोः, अकृतकम् ) अनादि परम्परया, आगतम् ( शास्त्रम् ) शास्यतेऽनेनेति व्युत्पत्त्या पुरुषहितोपदेशकरणम् आम्नायम् सनिवन्धनां साङ्गोपाङ्गां स्मृतिम् अनादिपरम्परया शिष्टाचरितसाधुशब्द प्रयोग पुञ्जाम्, आश्रित्य प्रमाणीकृत्य शब्दानाम्, अनुशासनम् वोधनोपायम् शिष्टैर्म्महर्षिभिः आरभ्यते, अनुगम्यते ननु नवीनशब्दप्रयोगः, स्वयंकल्प्यते सर्वेषामनादि सिद्धत्वादिति भावः ३४

अव्यवहित श्लोके शब्दानुशासन मिति प्रस्तुते प्रथमं शब्दः क इति निर्णयस्या वश्यकतया शब्दस्वरूपं वोधयितुमाह

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दाना मपरोऽर्थे प्रयुज्यते ॥४४॥

द्वावुपेति उपादीयते विवृत्यते अर्थो येनेति करणसाधनम्(उपादानशब्दः,) अस्मन्मते शब्द एवार्थरूपेण विवर्त्तते इत्यादावे वोक्तम् यथारज्जुरेव सर्प्प-रूपेण विवर्त्तते, अतः सर्प्पविवर्त्तोपादानम् रज्जुः तथैव, अर्थोपादानं शब्दः ननु यत्र विषमकार्य्योपत्तिः तत्र विवर्त्तः यथा शुक्तिकाया रजतम् तथाच गामुच्चार-येत्यत्र वाच्यवाचकयो रुभयोः स्वरूपतया एकरूपत्वात्कथं विवर्त्तोपादान

मितिचेत् उपादीयते श्रोत्रादिना ज्ञायते यदिति कर्म्मसाधन मेव शब्दार्थक स्थले गृहाण वस्तुतस्तु उपादीयते ज्ञायते अर्थो येनेति व्युत्पत्त्या वाचकत्वेनैक रूपेणो भयोः संग्रहात्तदर्थं न करणरूपविवर्त्तोपादानबोधकम् उपादानपदम् तथाच ( उपादानशब्देषु ) वाचकशब्देषु ( शब्दविदः ) वैयाकरणाः ( द्वौशब्दौ ) वाचकौ ( विदुः ) जानन्ति ( एकः ) श्रोत्रग्राह्यवैखरी वाग्रूपः ( शब्दानां ) स्फोटरूपाणां ( निमित्तं ) प्रकाशकारणम् तेनहि स्फोटः प्रकाश्यते नतूत्पाद्यते तस्य ब्रह्मरूपतया नित्यत्वात् ( अपरः ) स्फोटरूपः ( अर्थेप्रयुज्यते ) अर्थबोधन क्षमो भवतीति सारः अयमाशयः वैखरीवागात्मकशब्दः न साक्षादर्थं बोधयति अपितु स्फोटप्रकाशन द्वारा अर्थं बोधयति मध्यमावाग्रूपस्फोटश्च साक्षादर्थं बोधयतीति वैयाकरणसमय इतिदिक् ४४

तत्र प्रकार माह

**आत्मभेद स्तयोः केचि दस्तीत्याहुः पुराणगाः ।**
**बुद्धिभेदा दभिन्नस्य भेदमेके प्रचक्षते ॥४५॥**

कार्यकारणयो भेद इति पक्षे वैखरीवाक् स्फोटयोर्भेद इति केचित् अपरेतु एकः श्रोत्रेन्द्रिय ग्राह्यः,अपरः मनोग्राह्य इति बुद्धिभेदाद् भेदो वास्तविकस्तु अभेद इत्याहुः

वैखरी स्फोटयो रभिन्नत्वेऽपि प्रकाश्य प्रकाशकभावमूलक कार्य्य कारणभावं दृष्टान्तबलेनोपपादयति

**अरणिस्थं यथाज्योतिः प्रकाशान्तरकारणम् ।**
**तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥४६॥**

( अरणिस्थमिति अरणिस्थं ) शमीकाष्ठमध्यवर्त्ति ( ज्योतिः ) वह्निः ( यथा प्रकाशान्तरस्य ) मन्थनादिना उद्बुद्धस्य वहिरुपलभ्यमानस्य ज्योतिषः ( कारणम् ) उपादानम् ( वस्तुतः ) अन्तस्थित मेव ज्योतिः मन्थनेनो द्बुद्धं सत् वहिरुपलभ्यते ( नत्वन्यत् ) इतिभावः ( तद्वत् ) तथैव ( बुद्धिस्थः ) हृदयस्थः ( शब्दः ) स्फोटः अपि अर्थबोधनेच्छया प्रयत्नादिनो द्बुद्धः सन् इत्याध्याहारः ( पृथक् श्रुतीनां ) विभिन्नरूपेण श्रवणेषु ( कारणम् ) बीजम् अन्यैः श्रोत्रेन्द्रियेण वहिरुपलभ्यमानं व्यञ्जकध्वनिगतकत्वगत्वादिरूपेणा भासमानं पृथक् अभिलक्ष्यते अयमत्रसारः वक्तुः प्रयत्नेन विबुद्धः स्फोटः ध्वनिगत धर्म्मरूषितः सन् परश्रवणग्राह्यो भवति परेण श्रुतः सः हृत्स्थं स्फोट मभिव्यञ्जयति ततोर्थ बोध इति वस्तुतः एकस्यैव प्रयत्नाद्युपाधिवशात् उभयोःप्रकाश्यप्रकाशकभावः, अतएव कार्य्यकारणभाव इति ४६

नन्वेवं घटशब्देन पटोऽप्यर्थः कथं न प्रतीयतइति शङ्कां परिहरन्नाह

**वितर्कितः पुरा बुद्धया क्वचिदर्थे निवेशितः ।**
**कारणेभ्यो विवृत्तेन ध्वनिना सोनु गृह्यते ॥४७॥**

( वितर्कितइति पुरा ) पूर्वं ( बुद्धया ) मनसा [ वितर्कितः ] घट शब्दस्य कम्बुग्रीवादिमते व तादात्म्यसम्बन्धः नतु पटेन एवं पटस्य तदर्थेनैव इत्यादि रीत्या तत्तदर्थेन सह तादात्म्यसम्बन्धितया ऊहितः शब्दः पश्चादित्याध्याहारः [ क्वचिदर्थे निवेशितः अर्थबोधनेच्छयाप्रयुक्तइति भावः [ कारणेभ्यः ] वायवभिहतताल्वादिभ्यः, [ विवृत्तेन ] जातेन [ ध्वनिना कत्वहस्वत्वो दात्तत्वादिधर्म्माश्रयेण स अर्थबोधने, इत्याध्याहारः [ अनुगृह्यते ] उपक्रियते ध्वनिगत घटत्वादिधर्म्मवा निवाभिलक्ष्यते अतोनार्थबोधसङ्कर इति भावः इदमत्र निस्सरितम् यादृशधर्म्मवान् ध्वनिः, तादृशधर्म्मवानिव शब्दोऽभिव्यज्यते तेन सह यस्यार्थस्य पूर्वं शङ्केतो गृहीतः तस्यैव बोधो नान्यस्येतिदिक् ४६

नन्वेवं स्फोटो नाना स्यादत आह

**नादस्य क्रमजातत्वा न्न पूर्वो नापरश्च सः ।**
**अक्रमः क्रमरूपेण भेदवा निव गृह्यते ॥४८॥**

[ नादस्येति नादस्य ] ध्वनेः [ क्रमजातत्वात् ] क्रमेणोत्पद्यमानत्वात् ध्वनिरेव पौर्वापर्य्यव्यवहारविषय इति यावत् [ सच स्फोटः न पूर्वः न परः ] पौर्वापर्य्यव्यवहारशून्यः अतः [ अक्रमः ] क्रमशून्यः [ क्रमरूपेण ] व्यञ्जकध्वनिगततत्तद्धर्म्मेण [ भेदवानिव ] नाना इव गृह्यते उपलभ्यते वस्तुत एक एव स इति फलितम् स्फोटस्य वस्तुत एकत्वेऽपि ह्रस्वत्वादि धर्म्म शून्यत्वेऽपि च व्यञ्जकध्वनिगततत्तद्धर्म्म भेदेन नार्थबोध सङ्कर इति ४८

एतदेव दृष्टान्तेन द्रढयति

**प्रतिविम्बं यथा न्यत्र स्थितं तोयक्रियावशात् ।**
**तत्प्रवृत्तिमिवा न्वेति सधर्म्मः स्फोटनादयोः ॥४९॥**

[ प्रतिविम्बमिति यथा अन्यत्र ] जलादौ [ स्थितं ]निविष्टं [ प्रतिविम्बं] प्रतिच्छायम् स्वतोऽक्रियमपि तोयक्रियावशात् जलकम्पाद्युपाधिनिमित्तात् तत्प्रवृत्ति मिव कम्पादिक्रियामिव अन्वेति प्राप्नोति तथैवेत्याध्याहारः स्फोटनादयोः सः धर्म्मः स्वभाव इति ४६

नन्वेवं गवादि शब्दानां सास्नादिमद्व्यक्ति बोधने एव सामर्थ्यञ्चेत् तदा गामुच्चारय राज्ञो यत् इत्यादौ लोके शास्त्रे च अर्थे कार्यस्य बाधात् उक्त वाक्यानां अप्रामाण्यं स्यात् अतः शब्दोऽपि शब्दजन्य बोधे भासते इति स्वमत दृष्टान्तेन साधयति

आत्मरूपं यथा ज्ञाने ज्ञेयरूपञ्च दृश्यते ।
अर्थरूपं तथा शब्दे स्वरूपञ्च प्रकाशते ॥५०॥

( आत्मेति यथाज्ञाने ] न्यायनयेनानुव्यवसायात्मके भट्टमतेन प्रत्यक्षात्मक ज्ञान सामान्ये [ ज्ञेयरूपं आत्मरूपञ्चेति ] भूत भविष्यद्व वर्तमान घटादि स्वरूपं ज्ञानमपि (दृश्यते) विषयो भवति अतएव ज्ञानस्य प्रत्यक्षतया ज्ञानवान् नवेति सन्देहो न जायते [ तथा ] एव मेव [ शब्दे अर्थरूपम् ] सास्नादिमदादि व्यक्तिः [ स्वरूपंच ] ग + औ इत्याद्यानुपूर्वी (प्रकाशते) उभयं शब्दजन्यबोध विषयो भवतीति फलितम् । इदमत्र बोध्यम् शब्दानां शब्दे अर्थेच खण्डशः शक्तिः अतः उभयोर्विशेष्यविशेषणभावस्य स्वेच्छानुसारित्वात् क्वचिदर्थो विशेष्यः शब्दो विशेषणम् क्वचित् शब्दो विशेष्यः,अर्थो विशेषणम् तथाच यत्रार्थे कार्य्यस्य सम्भवस्तत्र स एव विशेष्यः यथा गामानय यत्र च वाधस्तत्र शब्द एव विशेष्यः यथास्मद्व व्याकरण सूत्रादौ इति ५०

स्फोट नादयोर्भेदं प्रकारान्तरेणाह

अण्डभाव मिवापन्नो यः क्रतुः शब्दसंज्ञकः ।
वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम् ॥५१॥

[ अण्डभावमिति यः शब्दः संज्ञा यस्य ] सः शब्दाख्य इत्यर्थः [ क्रतुः ] ब्रह्म [ अण्डभावम् ] इवा पन्नः हृद्देशे अवयवविभागम् अति क्रम्यस्थितः तस्यः क्रिया रूपा अवयवोद्ग्राहकारक व्यापाररूपा [ वृतिः विवर्त्तः [भागशः ] अवयवशः क्रमं पौर्वापर्य्यं [ भजते ] आश्रयते अयमाशयः यथा पक्षिणां अण्डः पूर्वं अवयवादिविहीनः एक रूपेण स्थितो दृश्यते सएव पश्चात् उद्भिन्नः अवयवादिमान् लोके दृश्यते तथैव शब्दब्रह्म हृदयस्थः, अवयवादिशून्य स्फोट इति सच यदा वाय्वाद्यभिहतः ताल्वादिना विवर्तते तदा अवयववान् पौर्वापर्य्य क्रमवांश्च नाद इति कथ्यते परञ्च दृष्टान्तस्थले अण्डः अनित्यः दार्ष्टान्तिकेतु नित्य इति बोध्यम् ५१

शब्दोऽपि शब्देन गृह्यते इत्यत्र दृष्टान्त पूर्वकं युक्त्यन्तर माह

यथैकबुद्धिविषया मूर्ति राक्रियते पटे ।
मूर्त्यन्तरस्य त्रितय मेवं शब्देऽपि दृश्यते ॥५२॥

[ यथेति ] यथा [ मूर्त्यन्तरस्य ] पुरुषान्तरस्य [ मूर्तिः ] चित्रं [ पटे ] वस्त्र कुड्यादिषु [ एक बुद्धि विषया ] एकज्ञानग्राह्यः [ आक्रिते ) आकारः प्राप्यते अयमभावः पुरुषः १ पटः २ मूर्त्तिः ३इति पृथक्त् पृथक् क्रमेण गृहीतमपि

चित्रस्थले तृतयं एकवारेणैव ज्ञायते तथैव तृतयं शब्देऽपि दृश्यते अयमाशयः वैखरी रूप शब्दः घ अ ट अ इत्यादि क्रमेण ज्ञातोऽपि प्रति सं हृत क्रमध्वनिः, एक बुद्धिविषयो भवति ततश्च अन्तः करणे क्रम शून्यः अवयवशून्यश्चस्फोटोज्ञायते इत्यवस्थाभेदात् सएव ग्राह्यः सएव ग्राहकोपीति विचार्य्यताम् ॥५२॥

**यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्त्तते।**
**व्यवसायो ग्रहीतृणा मेवं तेष्वेव जायते ॥ ५३ ॥**

(यथेति) (यथा) (प्रयोक्तुः) प्रयोग कर्त्तुः (प्राक्) प्रथमं (शब्देष्वेव) शब्दविषयिकैव (बुद्धिः) ज्ञानं (प्रवर्त्तते) जायते यस्य शब्दस्य येनार्थेन तादात्म्यसम्बन्धस्तस्यैवोच्चारणेतस्यार्थस्यबोधोभवतीत्यतः अर्थबोधनेच्छया प्रथमं शब्दं जानन्ति अनन्तर मुच्चारयतीति भावः (ग्रहीतृणां) श्रोतृणां (व्यवसायः) ज्ञानं (तेष्वेव) शब्देषु एव (जायते) अयमाशयः शब्दाधीन एवार्थबोधः, अतः उच्चारयितुः बोद्धुश्चोभयोः शब्द भावनाप्राबल्यात् शब्दविशिष्टमेवार्थं जानाति किन्तु क्वचित् शब्दः विशेषणं क्वचित् विशेष्य इत्यत्र पूर्वोक्तयुक्तिरनुसरणीया इति ५३

नन्वेवं शब्दस्यापि प्रातिपदिकार्थत्वे गामानयेत्यादौ अर्थस्य यथाक्रियान्वयस्तथा शब्दस्यापि स्यादत आह

**अर्थोपसर्ज्जनीभूता नभिधेयेषु केषुचित्।**
**चरितार्थान् परार्थत्वान्न लोकः प्रतिपद्यते । ५४ ॥**

(अर्थोप सर्जनीति) । (अभिधेयेषु) वाच्येषु (केषुचित्) मध्ये (अर्थोपसर्ज्जनीभूतान्) विशेषणीभूतान् अतएव (चरितार्थान्) इतर व्यावर्त्तकतयासफलान् (परार्थत्वात्) विशेष्योपकारकत्वात् (तान्) विशेषणीभूतान् (लोकः न प्रतिपद्यते) ज्ञायते क्रियान्वयितया इति शेषः । अयम्भावः शुक्लवाससं भोजय इत्यादौ विशेषणीभूत वासः वस्त्ररहितस्यान्यस्य पुरुषस्य ग्रहणं मास्तु इति बोधनद्वारा चरितार्थं चेत् तस्य क्रियान्वये मानाभावः फलाभावश्च विशेष्यस्तु क्रियान्वयमन्तरा अचरितार्थः सन् क्रियान्वयी एवं यो गो शब्दः सोयं पिण्ड इति प्रतीत्या शब्द विशिष्टार्थप्रतीतावपि शब्दस्य अयम्पिण्डः अस्य पदस्य वाच्यः नान्यस्येति बोधनेन चरितार्थत्वात् न क्रियान्वयित्वम् एतद् युक्ति मूलकं एव इतरनिष्ठ विशेष्यतानिरूपितप्रकारतासम्बन्धेनान्वयंप्रति मुख्यविशेष्यतासम्बन्धेनोप स्थितिः कारणम् इति कार्य्यकारणभावः अतएव घटत्वान्वयतात्पर्येण न नित्यो घट इति प्रयोग इति नैयायिकादीना मुद्घोषणम् इति ५४

तत्रैव प्रकारान्तरं वदन्नुपसंहरति

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दाना मेते पृथगिव स्थिते ॥५५॥

( ग्राह्यत्वमिति, ग्राह्यत्वं ) घटादौ नतु ग्राहकत्वं ( ग्राहकत्वंच ) चक्षुरादीन्द्रियादौ नतु ग्राह्यत्वं तेजसस्तु आलोकादेः ते द्वे (उभये) शक्ती यथा घटादि ग्राहकतया ग्राहकत्वं स्वरूपग्राहकतया ग्राह्यत्वमपि ( तथैव सर्व शब्दानां एते) ग्राह्यत्व ग्राहकत्वे उभे शक्ती( पृथगिव ) भिन्नेइव ( वस्तुतः उभयो नित्यत्वात्मरूपत्वात् अभिन्नैवेति ५५

शब्दानामुभयशक्तिसत्वात् आह

विषयत्वमनापन्नैः शब्दै नर्थिः प्रतीयते ।
न सत्तयैव तेर्थाना मगृहीताः प्रकाशकाः ॥५६॥

( विषयत्वमिति ) विषयत्वं बोधविषयतां ( अनापन्नैः ) अनाश्रितैः ( शब्दैः नार्थः ) प्रतीयते बोध्यते यतस्ते शब्दाः ( अगृहीताः) अज्ञाताः(सत्तयैव) सत्तामात्रेण ( अर्थानां ) न ( प्रकाशकाः ) उपस्थापकाः भवन्ति अयम्भावः अनुच्चारण दशायां अर्थ बोधोन भवति अतः ज्ञाता एव शब्दा अर्थ बोधकाः तथाच शब्देन यथा गोत्वस्य व्यक्तेश्चोपस्थितिः एवमेव शब्दस्यापि अतः गोत्वादिवत् शब्दस्यापि विशेषणत्वसम्भवे तत्परित्यागे माना भाव इति ५६

ननु अनुभवकरणं यथा इन्द्रियम् तथैव शब्दोऽपि ततश्च शब्दो यथा बोधविषयः एवम् इन्द्रियमपि कथःनेत्युभयो वैषम्ये वीज माह

अतोऽनिर्ज्ञातरूपत्वा त्किमाहेत्यभिधीयते ।
नेन्द्रियाणां प्रकाश्येर्थे स्वरूपं गृह्यते तथा ॥५७॥

( अतइति ) यतः शब्दानां इत्याध्याहारः ( अनिर्ज्ञातरूपत्वात् ) यदा वक्ता उच्चरितः शब्दः श्रोत्रा न ज्ञायते तदा ( किमाह ] किं ब्रूते [ इत्यभिधीयते] प्रत्युच्यते अतः ज्ञाताः एव शब्दा अर्थबोधका इति शब्दोपि बोधविषयः [ इन्द्रियाणाम् स्वरूपं ] प्रकाश्येर्थे बोध्ये विषये [ यथा ] [ न गृह्यते ] ज्ञायते अज्ञातान्येवेन्द्रियाणि कारणानि इति भेदान्नेन्द्रियम् बोधविषय इति वैषम्यम् ५७

ननु अग्नेर्ढगित्यादौ बोध्यबोधकयोः समानानुपूर्वीकत्वेनैकत्वात् स्वं रूपमितिशास्त्रबोधितसंज्ञासंज्ञि भावोऽनुपपन्न इत्यत आह

भेदेनावगृहीतौ द्वौ शब्दधर्म्मावपोद्धृतौ ।
भेदकार्य्येषु हेतुत्वमविरोधेन गच्छतः ॥५८॥

[ भेदेनेति ] [ शब्द धर्म्मौ ] शब्दार्थौ [ [ अपोद्धृतौ ] वस्तुतोऽभिन्नावपि बुद्धिकल्पितपृथग्भावौ अतएव [ भेदेनावगृहीतौ ] भिन्नतया ज्ञातौ [ द्वौ ] [ भेदकार्य्येषु ] भेदप्रयुक्तविधेयेषु [ हेतुत्वं ] कारणत्वं [ अविरोधेन] समावेशेन [ गच्छतः ] प्राप्नुतः अयमाशयः यथा लोके यस्य देवदत्तस्यैकपुत्रः तेन बुद्ध्या पृथग् प्रकल्प्य ज्येष्टत्व कनिष्टत्वादिमारोप्य ज्येष्टत्वप्रयुक्तकार्य्यस्य। कनिष्टत्वप्रयुक्तकार्य्यस्य च समावेशः क्रियते शास्त्रेऽपि आभ्या मित्यादौ एकस्मिन् अकारे अदन्तत्वादिमारोप्य ।तत्प्रयुक्तदीर्घादिकार्य्यस्य समावेशः तथैव तत्रापि एकस्मिन् एव सूत्रघटकत्व प्रयोगघटकत्वोपाधिभेदात् पृथक्त्व कल्पनया संज्ञासंज्ञि भाव इति ५८

किञ्च

वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।
आदैच् प्रत्यायितैःशब्दैःसम्बन्धं यान्ति संज्ञिभिः ॥५९॥

[ वृद्ध्यादय इति ] [ यथा वृद्ध्यादयः शब्दाः ] वृद्धिरादैच् इत्यादि सूत्र घटकाः वृद्धिः इत्यादि शब्दाः [ स्वरूपोपनिबन्धनाः ] स्वरूपाणां उपनिबन्धना बोधकाः स्वरूपेणैवार्थवन्त इति यावत [ आदैच् प्रत्यायितैः ] स्वरूपेणार्थवदादैच्शब्देन बोध्यैः [ शब्दैः ] आदैच् इत्यानु पूर्वीभिः [ संज्ञिभिः ] [ सम्बन्धं ] तादात्म्यरूपं [ यान्ति ] प्राप्नुवन्ति इदं फलितम् वृद्धिरादैच् इति संकेत ग्राहक वाक्ये सङ्केतग्रहात्पूर्वं वृद्धिपदबोध्यं वृद्धिपदं आदैच्पदबोध्य मादैच्पदमिति शक्त्यैवार्थवत्वा त्प्रातिपदिकत्त्वेन वृद्धिरीत्यत्र विभक्तिः,अनन्तरम् उभयोः संज्ञा संज्ञि भावः एवं भेदाभावस्थलेऽपि बोध्यम्

प्रकृते उपसंहरति ५९

अग्नि शब्द स्तथै वायमग्निशब्दनिबन्धनः ।
अग्नि श्रुत्यैति संबन्ध मग्निशब्दाभिधेयया ॥६०॥

[ अग्नि शब्देति] तथैवाग्नि शब्दस्यनिबन्धनः, बोधकोऽयम् अग्निशब्दः सूत्र घटकः [ अग्निशब्दोऽभिधेयोऽर्थोयस्य स्तया ग्निश्रुत्या ] प्रयोगघटकेन [ संबन्धमेति ] प्राप्नोति सूत्रघटकोऽग्निशब्दः केवलशब्दबोधकः संज्ञा अर्थबोधकप्रयोगस्थाग्निशब्दः संज्ञीति काल्पनिकभेदव्यवहारेणोपपाद्य इति भावः ६०

ननु उच्चारित एव शब्दः कथन्न कार्यान्वयीत्यत आह

योय उच्चार्य्यते शब्दोनियतं न स कार्य्यभाक् ।
अन्यप्रत्यायने शक्तिर्न तस्य प्रतिबध्यते ॥६१॥

योय इति योयः शब्द उच्चार्य्यते [ स ] [ नियतं ] निश्चितम् सर्वत्र कार्य्यभाक् कार्य्यान्वयी न किन्तु यत्रार्थे कार्यस्य बाधः तत्रैव शब्देऽपि कार्या-

न्वयित्वं यथा गामुच्चारय अतएव नियत इति पदम् इतिभावः इदमग्रे ६३
श्लोके स्फुटी भविष्यति ननुतर्हि अर्थ बोधकताशक्तिरपिनस्यादत आह [ तस्य ]
शब्दस्य [अन्य प्रत्यायने] इतर बोधने शक्तिः,न प्रतिबध्यते प्रतिबन्धका भावान्न
विनश्यतीतिसारः ६१

कार्यान्वयाभावे कारणमाह

**उच्चरन् परतन्त्रत्वात् गुणः कार्य्यैर्नयुज्यते ।**
**तस्मात्तदर्थैः कार्य्याणां संवन्धः परिकल्प्यते ॥६२॥**

उच्चरन्निति [ गुणः ] विशेषणीभूतः [ कार्यैः ] आनयनादिभिर्न युज्यते नान्वितोभवतीत्यर्थः तत्र हेतुमाह उच्चरन् परतन्त्रत्वात् पारार्थ्यादिति यावत् तस्माद्धेतोः [ तदर्थैः ] शब्दार्थैः [ कार्याणाम् ] आनयनादीनां [ संबन्धः परिकल्प्यते ] अन्वयोभवतीत्यर्थः ६२

नन्वेवम् अग्नेर्ढगित्यादौ अर्थीभूतस्यापि अग्निशब्दस्य ढगादि कार्ययोगोन स्या दुच्चारणपरतन्त्रत्वात् अनुच्चरितस्य अर्थबोधकत्वासम्भव श्चेत्यत आह

**सामान्यमाश्रितं यद्यदुपमानोपमेययोः ।**
**तस्यतस्योपमानेषु धर्म्मोऽन्योव्यतिरिच्यते ॥ ६३ ॥**

(सामान्यमिति ( उपमानोप मेययो र्यद्यत् सामान्यं ) सादृश्यमुच्चारणपरतन्त्र त्वादिक माश्रितं(तस्यतस्य)सर्वस्येत्यर्थः---उपमानेषु --(अन्योधर्मः)प्रकारतासमा नाधिकरणत्व विशेष्यतासमानाधिकरणत्वेतिविशेषधर्मः(व्यतिरिच्यते)भिद्यते स र्वांशस्य साम्येदृष्टान्तताहानिः अयमा शयः ) अस्तुसर्वत्राऽग्निशब्दः-- उच्चारण परतन्त्रः किन्तु यः शाब्दवो धेविशेष्यः स कार्य्यभाक्यथा अग्नेर्ढगि त्यादौ यत्र विशेषणम् तत्र न यथाग्निमानय -अ-उभयत्रोच्चारणपरतन्त्रत्वसामान्यधर्मस्य सत्वेऽपिविशेष्यत्वविशेषणत्वेतिविशेषधर्मयोर्भेदादितिहृदयम् ॥ ६३ ॥

(अन्यस्मात् व्यावर्त्तकेधर्मेऽपि विशेषाधायकधर्म्मान्तर मस्ती त्युपपादयति

**गुणः प्रकर्षहेतुर्य्यः स्वातन्त्र्येणोपदिश्यते॥**
**तस्याश्रिताद्गुणा देव प्रकृष्टत्वं प्रतीयते ॥ ६४ ॥**

(गुणइति)(प्रकर्षहेतुः)शुक्लोघट इत्यादौद्रव्यस्य द्रव्यान्तरेण विशेषकरणे कारणम्, (योगुणः)शुक्लादि(स्वातन्त्र्येण)घटे शुक्लमित्यादौ(उपदिश्यते)प्रयुज्यते(तस्य)घटगत शुक्लादिगुणस्य (प्रकृष्टत्वं) पटादिगतशुक्लादिगुणतो विलक्षणत्वम्(आश्रिताद्) घट शुक्लस्थिताद् गुणात् शुक्लतरत्वादितः(प्रतीयते) ज्ञायते,अयम्भावः शुक्लो घट इत्यत्र नीलघटतो विशेषकारकः, शुक्ल गुणस्तस्यापि घटगतशुक्लादितो विशेषकारक तद्गत शुक्लतर त्वादिधर्मः, एवंप्रकारेण विशेषकारकधर्मेऽपि भेदकधर्म्मान्तरम् इति ॥६४॥

तस्य प्रकृतेऽपि संघटयति ।

**तस्याभिधेय भावेन यः शब्दः समवस्थितः ।**
**तस्याप्युच्चारणे रूप मन्यत्तस्माद्विविच्यते ॥६५॥**

[ तस्येति ] सूत्रस्थाग्निशब्दस्य [ अभिधेयभावेन ] वाच्यत्वेन [ समवस्थितः ] बुद्धो [ यः शब्दः ] प्रयोगादिस्थः [ तस्योच्चारणेऽपि ] उच्चारणाधीनत्वेऽपि [ तस्मात् ] सूत्र घटकाग्निशब्दात् [ अन्यत् रूपं ] धर्म्मान्तरम् [ विविच्यते ] भिद्यते, इत्यर्थः, अयं सारः, वाच्यवाचकयो रुभयो रुच्चारणाधीनत्वस्याविशेषेऽपि वाचके सूत्रघटके स्वरूपार्थमात्रसम्बन्धित्वं प्रयोगादिस्थ वाच्ये व्यक्त्यर्थसम्बन्धित्वमिति धर्म्म भेदोऽस्त्येवेति बोध्यम् ६५

यथाऽग्नेर्ढगित्यादौ स्वरूपार्थबोधकाः शब्दाः तथा शक्तिग्राहक वाक्येऽपि स्वरूपार्थबोधका इत्युपपादयति

**प्राक्संज्ञिनाभि सबन्धात् संज्ञा रूपपदार्थिका ।**
**षष्ठ्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते ॥६६॥**

प्रागिति, संज्ञिना आदैच्, इत्यनेनाभिसम्बन्धात्, प्राक्, वृद्धिरादैच् आदैच् वृद्धिसंज्ञको भवतीति वाक्यार्थ बोधात् पूर्वं संकेतग्रहाभावेन शक्तिज्ञानाभावात् आदैच् संज्ञी वृद्धिः संज्ञा, इति ज्ञानाभावः, अतस्तद्वाक्ये, इत्यर्थः ( संज्ञा ) वृद्धिरिति ( रूपपदार्थिका ) स्वरूपेणैवार्थवत्, षष्ठ्या विभक्तेः प्रथमायाश्च निमित्तत्वाय कल्पते विभक्त्युत्पत्तिकारणं भवति, अन्यथा अर्थवत्वाभावेन प्रातिपदिकत्वाभावात् विभक्त्युत्पत्तिर्न स्यात् इति भावः ६६

ते उभे विभक्ती उपपादयति

**तत्रार्थवत्त्वात्प्रथमा संज्ञाशब्दाद्विधीयते ।**
**अस्येति व्यतिरेकश्च तदर्था देव जायते ॥६७॥**

तत्रेति अस्यान्वयः सुलभः, अयम्भावः वृद्धिरादैच् इति संकेतग्राहक वाक्ये उभयोः स्वरूपेणार्थवत्वेऽपि यदि आदैच् पदाभिन्नं वृद्धिपदम् इति संज्ञा संज्ञिनो स्तादात्म्याध्यवसायेन शक्तिनियमश्चिकीर्ष्येत तदा, उभयत्र प्रथमा यथा गौर्वाहिक इत्यत्र यदा तु, अस्यायम् वाचको भिन्नश्चैवं रूपेण शक्तिनियमस्तदा एकत्र षष्ठी, अपरत्र प्रथमा यथा उञ इत्यादौ स्वरूपेणार्थवदुञ् शब्दस्य प्रगृह्यमिति संज्ञेति तदर्थ इति ६७

स्वरूपं शब्दस्ये त्यनेन संज्ञासंज्ञिभावो बोध्यते तत्र केषा चिन्मते व्यक्तिः संज्ञा केषाञ्चिन्मते जातिः संज्ञा एवं संज्ञित्वं व्यक्तौ जातौ वा मन्यन्ते इति मतभेदं दर्शयति श्लोकद्वयेन

स्वरूपमिति कैश्चित्तु व्यक्तिः संज्ञोपदिश्यते ।
व्यक्तौ कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते ॥६८॥

स्वरूपमिति, ( स्वरूपमिति ) विषये राज्ञोयदित्यादौ ( कैश्चिदाचार्यैः ) व्यक्ती राजेतिव्यक्तिःसंज्ञा उपदिश्यते बोध्यते अत्यायमाशयो यत्र भेदवन्तोऽर्था स्तत्र सोयमिति बुद्ध्युपपादनाय जातिः अत्र तु स्वरूपभेदाभावान्ना वश्यकता तस्याः अपरे पुनः व्यक्तौ संसृष्टा, आश्रिता जातिः कार्य्याणि संज्ञादीनि प्रतिपद्यते प्राप्नोतीति ६८

संज्ञिविषय आह

सञ्ज्ञिनीं व्यक्ति मिच्छन्ति सूत्रग्राह्या मथापरे ।
जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ॥६९॥

सञ्ज्ञिनीमिति,( सूत्रेण ( ग्राह्याम् ) बोध्यां (व्यक्तिम्)संज्ञिनीं ) वाच्यामिच्छन्ति, अथापरे ) जातिमिच्छन्तीत्याध्याहृत्य व्याख्येयं ननु जातिश्चे त्संज्ञिनी तदा राज्ञोयदित्यादौ जाते र्यत् प्रत्ययः कथंस्यादत आह ( जातिप्रत्यायितेति ) प्रदेशेषु प्रयोगेषु जात्या प्रत्यायिता अविना भावेन बोधिता व्यक्तिम् बिना आश्रयताया असम्भवात् जात्याश्रिता व्यक्तिः ( उपतिष्ठते ) उपस्थिता भवत्यतस्तत्रैव कार्यं स्यात् इति ६९

जाति वादिनस्त्वयमाशयो व्यक्तेरानन्त्या ज्जातावेव शक्तिः येषां मते एक एव शब्दस्तेषाम्मते जाति व्यक्ति व्यवहारो नास्ति किन्तु अनेकत्ववादि मते, एव तद्व्यवहार इति दर्शयति

कार्यत्वे नित्यतायां वा केचिदेकत्ववादिनः ।
कार्यत्वे नित्यतायां वा केचि न्नानात्ववादिनः ॥७०॥

कार्यत्वइति ( कार्यत्वे ] शब्दस्यानित्यत्वे सएवायं गकार इति प्रत्यभिज्ञा बलात् ( नित्यतायां ) नित्यश्चेच्छब्द स्तदा मुख्यमेव शब्दस्यैकत्वमिति वादिनः केचित् अपरेतु अनित्या वा नित्या नाना एव शब्दा इति जल्पन्ति एतन्मते स एवायमिति रक्षणार्थं जातिस्वीकार इति हृद्यम् ७०

इदानीं पदादि व्यवस्था वक्तुमुपक्रमते

पदे भेदेऽपिवर्णानामेकत्व न्न निवर्त्तते ।
वाक्येषु पदमेकञ्च भिन्नेष्व प्युपलभ्यते ॥७१॥

पदेभेद इति ( वर्णानांभेदेऽपि) नानात्वेऽपि, पदे, एकत्वं न निवर्त्तते, एकं पदमिति व्यवहारो भवत्येव समुदायनिबन्धनत्वादेकत्वस्य वनं सेना इत्यादि

वत् किञ्च भिन्नेषु वाक्येषु अपि घट मानय घटोऽस्ति इत्यादिवाक्यानां परस्परं भेदेऽपि सर्वत्र घट इति एकं पदमित्युपलभ्यते, इति व्यवह्रियते इति यावत् ७१

नन्वेवंवर्णातिरिक्तं पद मित्यत आह

तद्वर्णव्यतिरेकेण पदमन्यन्न विद्यते ।
वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन ॥७२॥

( तद्वर्णेति ) ( वर्णव्यतिरेकेण ) वर्णभिन्नं ( पदं ) न विद्यते नास्ति प्रत्येकं समुदायातिरिक्तमपि समुदायस्य प्रत्येकानतिरेकत्वमितिन्यायादिनये प्रसिद्धतया वर्णसमुदायात्मकपदस्य वर्णभिन्नत्वा स्वीकारात् एवञ्च वाक्यं वर्ण पदसमूहात्मकं वर्णपदभिन्नं नेतिसारः

इदं परमतं प्रथमं प्रतिपाद्य स्वमतं सिद्धान्तयति

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा नच ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥७३॥

[पदे वर्णाः]वर्णात्मकावयवाः न विद्यन्ते इति प्रतिज्ञा अत्रोभयमतसिद्धस्थले दृष्टान्त मुपन्यस्यति वर्णेष्ववयवाश्चेति] यथा वर्णे अवयवा न सन्ति शब्दत्वरूप हेतोः स्पष्टतया पृथक् नोक्तः, एवं वाक्येष्वपि पदावयवो नास्तीति कारिकायाः सामान्योऽर्थः अयमाशयः पदाद्यात्मकशब्दः अवयवशून्यः शब्दत्वात् वर्णवत् इत्यनुमित्या वर्णसमुदायात्मकं पदमिति परमतम् न युक्तिसहम् किञ्च वर्णेऽवयवान्तर मस्वीकृत्य पदे वर्णावयत्वस्वीकारे किंते बुद्धिवैशद्यं यदिच घट् इत्यत्र अकारो नोच्चरितः घट इत्यत्र घकार अकारोप्युच्चरित इति व्यवहार एव प्रमाणमिति ब्रूषे तदपि सुभिदमूलमेव, तद्व्यवहारस्य घत्वट त्वादिधर्मस्य ध्वनिगतत्वस्वीकारेण ध्वनिगतवैलक्षण्यादेवोपपत्तेः किञ्च-वनं सेना इतिवत् एकंपदमिति व्यवहारोपपादनमपि ते आशामोदकायमानम् वनस्य वृक्षाद्यवयवानां यावतामेककाले विद्यमानतया तावदवयवकसमुदायस्य सिद्धतया तद्गतैकत्वमादाय वनमिति व्यवहारोपपत्तावपि वर्णाना मुच्चरित प्रध्वंसितया एकक्षणे यावतां साहित्याभावेन अवयवसापेक्ष समुदायत्वस्यैवासिद्धतया तद्गतैकत्वमादायोपपादनस्या सम्भवात् इति विमृश्यतां सुधीभिः अधिकन्तु विस्तरभयान्नोक्तम् अस्मन्मते पदादिव्यवहारस्य काल्पनिकतया वास्तविकः अखण्डः एकोनिरवयवः स्फोट एव शब्दः इति एकं पदम् वाक्यमित्यादि प्रतीतिः एतेन स्फोटानङ्गी कुर्वन्तोऽपिपरास्ताः ७३

ननु स्वमते पदादीनामसत्यतया पदादिसाधुत्वप्रदर्शनंकथमित्यत आह ।

भिन्नं दर्शनमाश्रित्य व्यवहारो ऽनुगम्यते ।
तत्र यन्मुख्यमेकेषां तत्रैतेषां विपर्य्ययः ॥ ७४ ॥

( भिन्नमिति भिन्नं, ) दर्शनम् मतान्तर माश्रित्यालम्ब्य ( व्यवहारः ) पदादि व्यवहारः ( अनुगम्यतेऽनुगमः ) क्रियते ( तत्र ) मतान्तरे ( एकेषां ) प्रधानानां ( यन्मुख्यं ) पदादिः सत्य इति एतेषां पदादीनां ( तत्र ) व्याकरणमते ( विपर्य्ययो ) वैपरीत्यम् असत्यत्व मिति यावत् अन्यमते प्रसिद्धः पदादि व्यवहारः स्वमतेऽसत्योऽपि रेखागवयन्यायेन अनुगम्यते इति भावः ७४

स्फोटे पदादियावद्व्यवहाराभावं प्रपञ्चयतिचतुर्भिः श्लोकैः

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥ ७५ ॥

स्फोटस्येति ( अभिन्नकालस्येति ) कालानवच्छिन्नस्येत्यर्थः अतएव नित्यत्वमिति फलितम् ननु तदा लोके तदानीम् घटशब्द उच्चारितो नत्विदानी मिति व्यवहारः कथमित्यतआह( ध्वनि कालानुपातिन इति ) ध्वनेर्व्यञ्जकस्य काललक्ष्या इत्यर्थः ( ग्रहणोपाधि भेदेनेति ) ग्रहणस्य व्यञ्जकस्यो पाधेर्ध्वन्यादेर्भेदेन ( वृत्तिभेदं ) द्रुतादिवृतिम् प्रचक्षते कथयन्ति नतु तस्य वास्तविक द्रुतादिवृत्तिरिति फलितम् ७५

स्वभावभेदा न्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्य्यते ॥ ७६ ॥

स्वभावेति प्राकृतस्यैतन्नामकस्य स्वभाविकस्येति यावत् इत्यग्रे स्पष्टं स्यात् ( ध्वनेः स्वभावभेदात् ) अल्पमध्योच्चै रुच्चारणभेदात् (ह्रस्वदीर्घप्लुतादिषु) सत्सु ( कालः ) एकमात्रिकद्विमात्रिकादिकालः नित्यत्वे ( सत्यपि इत्यध्याहारः शब्दस्येत्युपचर्य्यते)आरोप्यते इति यावत् नतुवस्तुतःतस्य कालानवच्छिन्नत्वादिति फलितम् ७६

प्राकृत वैकृतयोर्लक्षणमाह

वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनि रिष्यते ।
वृत्तिभेदे निमित्तत्वं वैकृतःप्रतिपद्यते ॥ ७७ ॥

वर्णस्येति येन वर्णज्ञानं स ध्वनिः प्राकृतो नाम अयन्तु प्रथमं भवति अनन्तरं येन द्रुता मध्यमा विलम्बितेति वृत्तित्रयं भवति सःध्वनिः वैकृतनामकः इति सारार्थः ७७

शब्दस्योद्‌र्ध्वमभिव्यक्ते वृत्तिभेदे तु वै कृताः ॥
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न्न भिद्यते ॥ ७८ ॥

शब्दस्येति शब्दस्योर्द्ध्वं देशम् ( अभिव्यक्तेः ) प्रकाशस्य निमित्तानि ये प्राकृता इति पूर्वत आक्षेरः (वृत्तिभेदे ) उक्तवृत्तिभेदे तु कारणानीत्याक्षेपः, ये वैकृता स्तैः प्राकृतवैकृतैः, ( ध्वनयः समुपोहन्ते संघाताः) भवन्ति(स्फोटात्मा) न भिद्यते वस्तुतो न भिन्नो भवति तस्यैकत्वान्नित्यत्वाच्चेति भावः ७८

ध्वनिभिः कः संस्क्रियते येन शब्दः प्रकाश्यते इति मतभेदेनाह

इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य च ।
क्रियते ध्वनिभिर्वादा स्त्रयोभिव्यक्तिवादिनाम् ॥७९॥

इन्द्रियस्येति ( ध्वनिभिः ) (इन्द्रियस्यैव) श्रोत्रेन्द्रियस्यैव (संस्कारः) ( क्रियते ) संस्कृतेन तेन शब्दो गृह्यते इति केषाँचिन्मतम् वा अथवा ( शब्दस्यैव ) शब्द एव ध्वनिभिः संस्कृतः श्रोत्रविषयो भवति इति अपरमतम् वा ( उभयस्य ) शब्द श्रोत्रेन्द्रिययो रुभयोः संस्कार इति परमतम् इति त्रयोवादा अभिव्यक्तिवादिनाम् नित्यवादिनाम् नये प्रसिद्धा इति ७९

उक्तवादत्रयेऽपि क्रमशः दृष्टान्तमाह

इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः ।
विषयस्य तु संस्कारस्तद्‌गन्धप्रतिपत्तये ॥८०॥

इन्द्रियस्येति(समाधानं)चित्तैकाग्रता अञ्जनंआदिना मण्डुकवशादिः(इन्द्रियस्यैव) चक्षुरादेरेव संस्कारः अत एव चक्षुषैव घटो दृश्यते नतु श्रोत्रेण अन्यथा विषयस्या संस्कारेऽ संस्कृतो घटो यथा चक्षुषा गृह्यते तथा अन्येनापि स्यात् द्वितीयदृष्टान्तमाह विषयस्येति शरावादेः उदकादिना संस्कारः अत एव शरावस्थगन्ध एव गृह्यते नतु घटस्थः अन्यथा घ्राणेन्द्रियस्या संस्कारेऽ संस्कृतेन घ्राणेन्द्रियेण यथा शरावगन्धप्रत्यक्षः तथा घटादिस्थगन्धस्यापि स्यात् इन्द्रियस्याविशेषात् इति ८०

तृतीयमते दृष्टान्तमाह

चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।
विषयेन्द्रियोरिष्टः संस्कारः स क्रमो ध्वनेः ॥८१॥

चक्षुष इति ( चक्षुषः प्राप्यकारित्वे ) चाक्षुषप्रत्यक्षे (तेजसा ) आलोकेन ( विषयेन्द्रिययोर्द्वयोरपि ] ( संस्कारः ) इष्टः अन्यथा विषयस्यासंस्कारे अन्धकारस्थितघटस्यापि प्रत्यक्षं स्यात् इन्द्रियस्यासंस्कारे स्वयं अन्धकारे

स्थितोऽपि पुरुषः घटं पश्येत् एवमेव( क्रमः )परिपाटी ध्वनेः ध्वनिर्हि श्रोत्रेन्द्रियं संस्करोति अतएव अत्रोच्चारितशब्दः अन्यत्रस्थितपुरुषेण नोपलभ्यते विषयं शब्दमपि संस्करोति अतएव घट इतिध्वनिसंस्कृतेन श्रोत्रेण पटशब्दो नोपलभ्यते इति भावः ८१

तत्र ध्वनि स्फोटयो र्ग्रहणे मतभेदमाह

**स्फोटरूपाविभागेन ध्वनेर्ग्रहण मिष्यते ।**
**कैश्चिद् ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यप्रकाशकः ॥८२॥**

स्फोटेति, स्फोटे रूपस्य स्वकीयरूपस्या विभागेन अभिन्नतया स्फोटेरूपानुषक्तस्येति यावत् ध्वने र्ग्रहणमिष्यते अयंभावः व्यञ्जकरूपानुषक्तस्यैव व्यङ्गो लोके भवति यथा जपाकुसुमगतलौहित्यरूप मिश्रितस्यैव स्फटिकादे र्भानमेवम् ध्वनिस्फोटरूपयोरभिन्नतयैव ज्ञानमिति कैश्चित् । ध्वनिः असंवेद्यः स्वयमप्रत्यक्षः स्वतन्त्रः केवलः अन्यस्य स्फोटस्य प्रकाशको ज्ञापक इत्यर्थः यथा चक्षुरादीन्द्रियाणि स्वयमज्ञातानि विषयान् प्रकाशयन्ति तद्वत् ८२

इदानीं स्वमते ध्वनीनां क्रमिकत्वेऽपि एकपदं वाक्यमित्यादि व्यवहारमुपपादयति

**यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ।**
**आवृत्या न तु स ग्रन्थः प्रत्यावृत्या निरुप्यते ॥८३॥**

यथेति, ( यथानुवाकः ) तदाख्यग्रन्थः नानावाक्यसमुदायः ( श्लोको वा ) नाना पदसमुदायः ( सोढत्वं ) एकबुद्धिविषयतां ( उपगच्छति ) प्राप्नोति नतु स ग्रन्थः आवृत्या सकृदावृत्येतियावत् प्रत्यावृत्या बारं बारं आवृत्यापि भेदेनेत्याध्याहारः निरूप्यते निश्चीयते किन्त्वेक इत्येव बुद्धिः एवमेव पदेऽपीति अयमाशयः तत्प्रयत्नजनितै र्ध्वनिभिरवास्तविकान् सखण्डवर्णपदवाक्यान् स्फोटान् पुनः पुनराविर्भावयद्भिः अल्पशोऽल्पशः वास्तविकाखण्डस्फोटबुद्धि प्रकाशयद्भिः अन्त्ये साकल्येनैकः स्फोटः प्रकाश्यते इयं प्रक्रिया नित्यैकत्व वादिनां नये तथा च वास्तविकैत्वमादाय एकोऽयमिति व्यवहारः अवान्तरे तत्तद्ध्वनिसमुदाय गतसखण्डत्वधर्म्मकृतनानाधर्म्मप्रयुक्तवैलक्षण्यमादाय नाना पदानि नाना वाक्यानीति अवास्तविकव्यवहारः इति शाब्दिकनये सर्वं समञ्जसम् मतान्तरे क्रमेण तु वर्णग्रहणे सति समुदायाभावादविषयत्वं तेषां बुद्धौ स्यादिति संहिता सूत्रे भाष्ये स्पष्टमिति ८३

ननु घटेत्यत्र श्रवणानन्तरं स्फोटो ज्ञातश्चेत्, अलम् तज्ज्ञानार्थमेव घट ध्वनि स्वीकारेणेति शङ्कामपनुदन्नाह

प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥८४॥

( प्रत्ययैरिति ) ( ग्रहणानुगुणैः ) ग्रहणोपकारकैः ( अनुपाख्येयैः ) अवाच्योपायैः ( प्रत्ययैः ) घटाद्यवान्तरज्ञानैः ( ध्वनिप्रकाशिते ) ध्वनिना व्यक्ते शब्दे ( स्वरूपं ) स्फोटरूपं ( अवधार्यते ) सम्यग् ज्ञायते अयमाशयः नहि सकृद् द्विर्दर्शनेन स्फोटः सम्यक्तया ज्ञायते किन्तु सकलध्वनिभिः सम्यगभिव्यक्तस्य स्फोटस्य स्वरूपज्ञानं भवतीति ८४

तत्र सम्यग् ज्ञानस्य क्रममाह

नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥८५॥

( नादैरिति ) ( नादैः ) पूर्वपरध्वनिभिः, ( आहितं ) स्थापितम् ( बीजं ) सम्यक्प्रकाशानुगुणसंस्कारः यस्यां तस्याम् ( आवृत्तपरिपाकायां ) आवृत्तः पुनः पुनः कृतः परिपाकः प्रत्यक्षकरणयोग्यता यस्यां असकृदनुभवजनित संस्कारसंस्कृतायामिति यावत् तस्यां ( बुद्धौ ) अन्तःकरणे ( अन्त्येनध्वनिना-सह ) चरमध्वनिसहकारेणेत्यर्थः ( शब्दः ) स्फोटोऽवधार्यते निश्चयरूपेण ज्ञातो भवतीत्यर्थः । अयमाशयः, यथा मणिपरिचयः सकृद्दर्शनेन न भवति, अपि तु एकवारदर्शनेन कश्चित्संस्कारो मनसि जातः पुन र्दर्शने सति ततोऽधिकसंस्कार एवंरीत्या चरमदर्शनेनोद्बुद्धसंस्कारसहकृतेनान्त्यानुभवेन सम्यक् परिचितो भवति एवमेव पूर्वपूर्वध्वन्यनुभवजन्यसंस्कारसंस्कृतेनान्तःकरणेऽन्त्यध्वनिसहकारेण स्फोटः प्रत्यक्षोभवति अतएव न कस्यचिद्ध्वनेर्वैयर्थ्यमिति ८५

ननु वास्तविकस्फोटोऽखण्डश्चेत् तदा मध्ये मध्ये वर्णपदाद्यवयवावभासः असङ्गतःस्यादत आह ।

असतश्चान्तराले याञ्छब्दानस्तीति मन्यते ॥
प्रतिपत्तुरशक्तिस्सा ग्रहणोपाय एव सः ॥ ८६ ॥

( असत इति ) ( अन्तराले ) मध्ये (असत) असत्यान ( याञ्छब्दानिति ) वर्णरूपान् वर्णावयवकपदरूपान् पदावयवकवाक्यरूपान् शब्दानित्यर्थः ( अस्तीति ) ( मन्यते ) अस्तित्वेन बुध्यते सा (प्रतिपत्तु) ज्ञातुः (अशक्तिः) वर्णाद्यवयवावभासः व्यञ्जकध्वनिषु विद्यते तद्व्यङ्ग्यस्फोटस्तु निरवयव शुद्धोऽखण्ड इति विवेचनशक्तेरभावः इत्यर्थः वस्तुतस्तु स ध्वनिः ग्रहणोपाय एव स्फोटप्रकाशक इति । ८६

नन्वेवं वाक्यानां पदानाञ्च परस्परं भेदो न स्यादत आह

**भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ॥**

**क्रमोपसृष्टरूपाया ज्ञानं ज्ञेयव्यपाश्रयम् ॥ ८७ ॥**

( भेदेति ) ज्ञानं वस्तुतो निरवयवं ( एकं नित्यं ) विषयाकारन्तु नाना रूपात्मकम् व्यावहारिकमसत्यं विषयाणामसत्यत्वेन तदाकारताया अपि असत्यत्वात् इत्यद्वैतवेदान्तमतेन दृष्टान्तः ( यत इत्याध्याहारः ) ( ज्ञेयव्यपाश्रयम् ) व्यवहारे घटाद्याकारक मतो ज्ञानस्य ( भेदानुकारः ) भेदप्रतीतिर्घट ज्ञानं पटज्ञानाद्भिन्नमिति व्यवहारः, घटादीनां भेदेन तत्तद्विषयक ज्ञानयोरपि भेद स्वीकारात् इति यावत् तथा (क्रमेण) घट इत्यादि ध्वनिक्रमेण, (उपसृष्टं) संश्लिष्टं ( रूपम् ) यस्या स्तस्याः ( वाचः ) स्फोटस्योपप्लवो भेदः (ध्रुवः) अवश्यं व्यवहार इति शेषः घटेति व्यञ्जक ध्वनि रूपानुषक्तःतदभिव्यङ्ग्यः शब्दः पटेतिव्यञ्जकरूपानुषक्तात् तद्व्यङ्ग्यात् शब्दाद्भिन्न इति व्यावहारिकोभेदः परमार्थस्तु एकएवेति सारः ८७

ग्रहणोपाय एवस इत्युक्तेऽर्थे दृष्टान्त मुपन्यस्यति

**यथाद्यसंख्याग्रहण मुपायः प्रतिपत्तये ।**

**संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ॥८८॥**

यथेति, ( संख्यान्तराणां ) अवान्तरैकत्वादिसंख्यानां परस्परंभेदेऽपि शब्दत्वसंख्याया इति शेषः ( प्रतिपत्तये ) ज्ञानाय ( आद्य संख्या) एकत्वादिः तस्याः ( ग्रहणम् ) ज्ञानं यथोपायः ( तथा शब्दान्तरश्रुतिः ) वाक्यस्फोटज्ञानाय तदवान्तरपदादिश्रुतिः उपाय इति ८८

इदानीं वाक्यपदादिविषयकदेवतादिश्रुतीनां ध्वनीनां भेदेऽपि तदभिव्यङ्ग्यस्यैक्यमुपपादयति

**प्रत्येकं व्यञ्जका भिन्ना वर्णा वाक्यपदेषु ये ।**

**तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः ॥८९॥**

प्रत्येकमिति ( वाक्यपदेषु ) वाक्येषु पदेषु च ( प्रत्येकं भिन्नाः ) नाना रूपाः ( व्यञ्जकाः ) स्फोटद्योतकाः ( वर्णाः ) वर्णरूपा ध्वनयः [ ये ] [ तेषामत्यन्तभेदेऽपि ] नानात्वेऽपि [ शक्तयः ] मात्रारूपाः [ संकीर्णाइव ] अभिन्नाइव अयंसार स्तत्तत्प्रयत्न प्रेरिता वायवः तत्तत्स्थानाभिघातेन ध्वनीनुत्पादयन्ति इति तेषां परस्परं भेदेऽपि श्रुत्वादिरूपेण सर्वत्राकारादिमात्राणां साम्यात् एकैवाकारश्रुतिः सर्वत्र यथा गोत्वादि जात्यभिव्यञ्जकानां भ्रमणत्वादिजाति व्यञ्जकानामिव न भेदो दुर्ज्ञान इति एवञ्च निरवयवेष्वपि वर्णपद वाक्येषु

मात्राविभागः वर्णविभागः पदविभागश्च तत्कृत एव काल्पनिको मिथ्या इत्यग्रे दृष्टान्त द्वारा स्पष्टो भविष्यति ८९

उक्तार्थे एव दृष्टान्तं प्रदर्शयति

यथैव दर्शनैः पूर्वं दूरा त्सन्तमसेऽपिवा ।
अन्यथाकृत्य विषयमन्यथैव ाध्यवस्यति ॥९०॥

यथेति [ यथा दूराद् ] वा [ सन्तमसे ] अन्धकारेपि [ पूर्वैर्दर्शनैः ] प्राथमिकविलोकनैः (विषय मन्यथा कृत्य) विपरीतं बुद्ध्वा पुनः समीपे आलोके वेति शेषः [ अन्यथैव ] पूर्वदृष्टविपरीततया (अध्यवस्यति ) नीर्णीयते अयमभावः दूरतोऽन्धकारे वा जनस्य प्रथमं वृक्षादौ रज्वादौ च हस्त्यादेःसर्प्पादेश्च भ्रमात्मकबोधः ततः समीपगमने आलोकानयने च वृक्षोयम् रज्जुरिय मितिच निश्चिनोतीति ९०

दृष्टान्तं व्युत्पाद्य दार्ष्टान्तिके योजयति

व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।
भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्त्तते ॥९१॥

व्यज्यमान इति वाक्यानामभि व्यक्तयः प्रकाशाः, तासां [ हेतवः ] कारणानि तै ध्वनिभिः [ व्यज्यमाने ] प्रकाश्यमाने [ वाक्ये पूर्वं ] प्रथमं भागानां वर्णपदाद्यात्मकावयवानामवग्रह आभास स्तस्य रूपेण स्वरूपेण प्रकृत्यादिभ्य इति तृतीया तस्या अभेदोऽर्थः अतो वर्णपदावयवकाभासरूपेति फलितम् (बुद्धिः)ज्ञानं प्रवर्त्तते भवतीत्यर्थः निरवयवेषु वाक्येषु विवेकाभावप्रयुक्तसावयवत्वभ्रम इति भावः ९१

पूर्वं आभासरूपा ततो निश्चरूपा बुद्धिरित्यत्र दृष्टान्त माह ।

यथा नुपूर्वीनियमो बिकारे क्षीरवीजयोः ।
तथैव प्रतिपत्तृणां नियतो बुद्धिषु क्रमः ॥९२॥

यथेति, क्षीरञ्च बीजञ्चतयोः । दुग्धस्य आम्रादि बीजस्य चेत्यर्थः(विकारे) दधिरूपेवृक्षरूपेच(यथानुपूर्वीनियमः)अयं हि क्रमःक्षीरदध्नोः प्रथमं क्षीरं द्रवद्द्रव्यं ततः किञ्चित् काठिन्यविशिष्टद्रवद्रव्यं ततश्चाधिककाठिन्यविशिष्टं भवति तदा दृढं सत् दधीति परिणतंभवति—एवंवीजमपि द्वैधीभावाङ्कुरादिक्रमेण वृक्षरूपेण परिणमति ( तथैवप्रतिपत्तृणां ) बोद्धृणां ( बुद्धिषु ) ज्ञानेषु ( क्रमः ) परिपाटी ( नियतः ) जायते इति फलितम् स्फोटबुद्धिरपिपूर्वं वर्णाद्याभासादि क्रमेण पश्चात् निरवयवस्फोटविषयकनिश्चयात्मिकाभवतीतिभावः ९२

अयमेव पन्थाः स्फोटानङ्गीकृतां वर्णनित्यतावादिनां वेदान्तिनो मवश्य माश्रयणी यइत्यु पपादयति

**भागवत्स्वपि तेष्वेवं रूपभेदो ध्वनेः क्रमात् ।**
**निर्भागेष्व प्युपायो वा भागभेदप्रकल्पनम् ॥९३॥**

भागवदिति(भागवत्सु)न्-अ-द्-ई-इति वर्णचतुष्टयावयवकसमुदायरूपादि पदेषु अपि ( तेषु ) वेदांतिमतेष्वपि ( रूपभेदः ) दीनेतिसमुदायरूपात् । नदीति समुदायस्य स्वरूपभेदः ( ध्वनेः क्रमाद् ) ध्वनिक्रमप्रयुक्त एवेत्यर्थः । अयमाशयः नदीत्यत्र भवद्भिः तद् वर्णाभिव्यङ्ग्यः तदतिरिक्तः स्फोटोऽर्थ वाचकः इति नाङ्गीक्रियतेऽपितु तावद् वर्णसमुदाय एव वाचकः, वर्णश्च नित्य इति स्वीक्रियते तदा प्रत्येकवर्णाभिव्यक्त्यनन्तरसमुदायप्रतीतिश्चेत् द्विती-यादिवर्णानां वैयर्थ्यम् तावद्वर्णाभिव्यक्त्यनन्तरंसमुदायबोधश्चेत् नदीदीने त्युभयत्र तावतां वर्णानां साम्या दर्थ संकरः अत इत्थमेव उत्तरणीयं स्यात् यादृशक्रमेण ध्वनिःतत्तादृश क्रमेणैवतत्तद् वर्णाभिव्यक्तिः तावद् वर्णाभिव्यक्त्यनन्तर क्रमिकसमुदाय बोधः अतो न नदीदीनयोरर्थसंकरः इति तत्तद् ध्वनिक्रमेण पूर्व पूर्व वर्णाभि व्यक्ति स्तूपायः अन्त्यवर्णप्रत्यक्षकाले समुदायग्रहणयेति अभिव्यञ्जकध्वनिक्रमकृतैव नदी दीनेत्यादौ भेदबुद्धिः यथा मण्डूकवसासम्व द्धप्रदीपेनाभिव्यक्तरज्वां सर्पज्ञानभेदः इति समायातम् ॥ एतत् स्वमते साम्यं निगमयति निर्भागेति निर्भागेषु निरवयवपदादिस्फोटेषु भागभेदकल्पनम् वर्णाद्यवयवकल्पनम् उपायः बोधद्वारमित्यर्थः तवमते सावयवपदादिसमुदायबोधे पूर्व पूर्व वर्णानामुपायता अस्मन्मते निरवयव स्फोटबोधे इति भावः एतेनो पायस्यावयो स्तुल्यत्वेऽपि तव मतेऽनन्तानन्त पादानां वाचकत्व मनन्तानन्तध्वनीनां व्यञ्जकत्वमिति द्विविधानन्तगौरव कल्पनापेक्षयाऽनन्तपादाना मवाचकत्वकल्पनालाघवात् एकः अखण्डस्फोटो वाचक इति वैयाकरणशरणिरेव ज्यायसीति विभाव्यतां सुधीभि रधिकन्तु विस्तर भयान्न वितन्यते इति ९३

मतान्तरमाह

**अनेक व्यक्त्यभि व्यङ्ग्या जातिः स्फोट इतिस्मृता ।**
**कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥९४॥**

अनेकेति, कैश्चिदाचार्यैः,अनेकाश्च ता व्यक्तयः क्रमोत्पन्ना वर्णास्तैरनेक वर्णैः अन्त्यवर्णप्रत्यक्षकाले पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकारेणा-भिव्यज्यत इति अभिव्यङ्ग्या ( जातिः स्फोटः ) इति स्मृता, कथितेत्यर्थः

एतेन शब्दस्फोटकीनामनित्यत्वेऽपि तद्गताकृतिनित्यत्वात् शब्दोनित्य इति व्यवहार इति सूचितम् स्फोटमात्रनिर्दिश्यते रश्रुते र्लश्रुतिरिति ऐ ओङित्यादि सूत्रस्थभाष्ये स्फोटशब्देन शब्दगतजातिः बोध्यत एतन्मतमनुसृत्य भूषण कारेण स्वग्रन्थे प्रतिपादितम् इति ततएव विस्तरेणद्रष्टव्यः [ अस्या ] जातेः [ ध्वनित्वेन ] व्यञ्जकत्वेन [ व्यक्तयएव ] उत्पत्तिमत्योऽनित्या शब्दव्यक्तयः [ प्रकल्पिताः ] कथिता इति ९४

पूर्व मतस्यैव सिद्धान्तसम्मतत्वं मुख्यत्वञ्च दर्शयितुं पुनस्तदेवाह

**अविकारस्य शब्दस्य निमितै र्विकृता ध्वनिः ।**
**उपलब्धौ निमितत्वमुपयाति प्रकाशवत् ॥९५॥**

अविकारस्येति, परेतु जातिमसहमाना एकमेव शब्दतत्वं, नित्यमिति मन्यन्तेऽतोऽविकारस्य विकाररहितस्य नित्यस्येतियावत् शब्दस्यैकवचनेनैक शब्दतत्वमिति सूचितम् [ उपलब्धौ ] ज्ञाने ( निमित्तैः ) तत्तत्प्रयत्न प्रेरितवाय्वभिघातरूपकारणैः ( विकृता ] उत्पन्ना ध्वनिः [ प्रकाशवत् ] आलोकस्यानाश्रितस्य स्वसंयुक्तस्य पटादेरूपलब्धौ यथा तथा ( निमित्तत्वं ) कारणत्वम् ( उपयाति ] प्राप्नोतीत्यर्थः ध्वनिना तद्रूपानुषक्ततदनाश्रितस्फोटस्य बोध इति भावः ९५

ननु शब्दस्या भिव्यक्तिपक्षेऽपि अनित्यस्यापि घटादेः प्रदीपादिभिः लोकेऽभिव्यक्तिदर्शनात् शब्दोऽनित्यः अभिव्यङ्ग्यत्वाद् घटादिवत् इत्यनुमित्या अनित्यत्वं सेत्स्यति उत्पत्ति पक्षेतु सुतरामनित्यत्वमित्या शङ्क्याह

**न चानित्येष्वभिव्यक्ति र्नियमेन व्यवस्थिता ।**
**आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥९६॥**

नचेति [ अनित्येषु ) वस्तुषु अभिव्यक्तिः अभिव्यङ्ग्यत्वं [ नियमेन ) नियततया यत्रयत्राभिव्यङ्ग्यत्वं तत्र तत्रानित्यत्वमिति व्याप्तिरूपेणेति यावत् ( नव्यवस्थिता ) नहिनिश्चिता अनित्यत्वसाध्यव्यभिचारी अभिव्यङ्ग्यत्वहेतु रिति भावः व्यभिचारं प्रदर्शयति ( नित्यानां ] जातीनां घटत्वगोत्वादीनाम् ( आश्रयैः ] कम्बुग्रीवाद्यवयवै र्व्यक्तिः अभिव्यक्ति रिष्यते उभयमते सिद्ध मित्यर्थः जातौ अभिव्यङ्ग्यत्वहेतोः सत्वेऽपि अनित्यत्वरूपसाध्याभावात् ( व्यभिचारोऽतः पूर्वोक्त हेत्वाभासेन नानित्यत्वं साधयितु मलमिति भावः ९६

ननु गेहान्तरस्थितेन प्रदीपेन गेहान्तरस्थितस्य घटस्याभिव्यक्तेरदर्शनं यथा तथा तात्वोष्ठपुटव्यापारजन्यप्रकाश्यमानैः श्रोत्रदेशस्थितैः ध्वनिभिः हृद्देशस्थितस्य शब्दस्य वैयधिकरण्यात् कथ मभिव्यक्तिरित्यत आह

देशादिभिश्च सम्बन्धो दृष्टः कायवतामिह ।
देशभेदविकल्पेऽपि न भेदो ध्वनिशब्दयोः ॥९७॥

देशेति ( इह ) लोके (कायवतां ) मूर्त्तानामेव [ देशादिभिः ) सम्बन्धः, अस्यपूर्वदेशेन तस्यच परदेशेन अनयोस्तु, एकदेशेनैव सम्बन्धः इति व्यवहारा देव नाना देशत्वादिव्यवहारः इष्टः प्रत्यक्षीकृतः ध्वनिशब्दौ त्वमूर्तौ तयो र्नानादेशत्वव्यवहाराभावान्न वैयधिकरण्यमिति भावः इदानीं नानादेशत्वव्यवहारं स्वीकृत्यापि समाधत्ते [ देशेति] देशानां भेदः तस्य विकल्पे ऽयंपूर्वदेशस्थः अयंपर देशस्थः इमावेकदेशस्थाविति व्यवहारस्वीकारेऽपीत्यर्थः ध्वनि शब्दयोर्न भेदः न देशभेदः हृद्देशेऽपि आकाशः श्रोत्रेऽप्याकाश इत्युभयत्रा काशत्वस्य तुल्यत्वात् इतिभावः किम्वा ध्वनिः श्रोत्रेन्द्रिय द्वारा हृद्देशे गच्छतीति नास्ति देशभेदप्रयुक्तवैयधिकरण्यमिति भावः ९७

ननु प्रदीपादयोऽभिव्यञ्जका यथाघटमभिव्यञ्जयन्ति तथापटमपीत्यत्रा नियमो दृश्यते ध्वनीनांतु नियता भिव्यञ्जकता तात्वभिघातजेन नादेन चादय एवाभि व्यज्यन्ते नतु कादयइति नियमः तस्मात् शब्दा उत्पद्यन्ते इत्येव पक्ष इत्यत आह

ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।
व्यङ्ग्यव्यञ्जक भावेन तथैव स्फोटनादयोः ॥९८॥

ग्रहणेति गृह्यतेऽनेनेति [ ग्रहणम् ] चक्षुरिन्द्रियादिः । गृह्यन्त इति [ ग्राह्या ] रूपादयस्तयो र्योग्यता चक्षुषि रूपग्राहकता रूपे चक्षु र्ग्राह्यता चेति यथा नियता सिद्धा चक्षुषा रूपमेव गृह्यते नतु गन्धो रूपे चक्षु र्ग्राह्यतैव नतु श्रोत्र ग्राह्यतेति नियम इति भावः ( तथैवस्फोट नादयोः ) व्यङ्ग्यव्यञ्जकभावेन नियमः, तात्वभिधातजध्वनिः चादीनेवाभिव्यञ्जयति नतु कादीनिति नियमेन अभिव्यक्तेर्न कापि क्षतिरिति भावः ९८

नन्वस्तु विभिन्नेन्द्रियग्राह्यरूपादिषु तादृशनियमः एकेन्द्रियग्राह्य ध्वनिषु कथं नियम इत्यतो नियममाह

सदृशग्रहणानाञ्च गन्धादीनाम्प्रकाशकम् ।
निमित्तं नियतं लोके प्रतिद्रव्य मवस्थितम् ॥९९॥

सदृशेति, (सदृशानि ग्रहणानि) ग्राहकानि, येषा तेषां तुल्येन्द्रियग्राह्याना मित्यर्थः [ गन्धादीनां ] कुमकुमगन्धादीनाम[प्रकाशकम]अभिव्यञ्जक गो घृतादीत्यर्थः [ निमित्तम ] कारणं (नियतं) प्रतिद्रव्यं द्रव्यं द्रव्यं प्रति (अवस्थितम) वर्तन्त इति यावत् गोघृतं हिकुङ्कुम गन्धमेवाभिव्यञ्जयति नतु पाषाणस्थगन्धम् उदकंहि सक्तुरस मेवाभिव्यञ्जकम् नतु पाषाणरस मिति नियमो यथा तथैव प्रकृतेऽपीति भाव: ९९

नन्वेवमपि यथा लोके प्रदीपादीनां वृद्धिह्रासयोः सत्वेऽपि न घटादीनाँ वृद्धिह्रासौ किञ्च व्यञ्जकप्रदीपादीनां संख्याभेदेऽपि अभिव्यङ्ग्ये न संख्यान्तर सम्बन्ध इति दृश्यते न तथा शब्दे शब्दो ध्वनिधर्म्मानुसारेण वृद्धिह्रास संख्यान्तरसंबन्धादिधर्म्म मनुसरति, अतो व्यङ्ग्यधर्म्माभावात् न शब्दोऽभिव्यज्यतइति शङ्कां परिजिहीर्षु राह

**प्रकाशकानां भेदांश्च प्रकाश्योऽर्थो ऽनुवर्त्तते।**
**तैलोदकादिभेदे तत् प्रत्यक्षं प्रतिबिम्बके ॥१००॥**

प्रकाशेति, (प्रकाशकानां) आदर्शजलादीनां (भेदान्) उन्नतनिम्नत्वभेदान् जलतरङ्गादिभेदाँश्च ( प्रकाश्यः ) अभिव्यङ्ग्यमुखचन्द्रादिप्रतिबिम्बः (अर्थः) पदार्थः अनुवर्ततेऽनुसरति (प्रतिबिम्बके) मुखचन्द्रादिप्रतिबिम्बके (तैलोदकादि) भेदे सति [तत्]व्यञ्जकगतश्यामादि (प्रत्यक्षं) दृश्यते इति शेषः आदर्शादिगत विकार प्रयुक्तम् प्रतिबिम्बमुखे उन्नतनिम्नत्वादि प्रियङ्गुतैल गतश्यामादि प्रतिबिम्बेऽपि श्यामत्वंजलतरङ्गादिगतसंख्याभेदप्रयुक्त श्चन्द्रप्रतिबिम्बे संख्याभेदश्च इत्यादि दृश्यते तथैव प्रकृते ध्वनि शब्दयोर्बोध्य मिति भावः १००

ननु चन्द्रादिभ्यः पदार्थान्तरमेवहि प्रतिबिम्बं आदर्शादिषु दृश्यते एवञ्च नादर्शादयोऽभिव्यञ्जकास्तत उक्तदृष्टान्ता सङ्गतिरत आह

**विरुद्ध परिमाणेषु वस्त्वा दर्शजलादिषु।**
**पर्वतादि सरूपाणां भावानां नास्तिसंभवः ॥१०१**

विरुद्धेति ( विरुद्धं ) पर्वताद्यपेक्षया लघुरूपं परिमाणं येषां तेषु(वस्त्वा दर्शजलादिषु ) स्वक्षे मणौ आदर्शे दर्पणे आदिपदेन स्वच्छलौहादे र्ग्रहणं ( पर्वतादि सरूपाणां ) गुरुपरिमाणपर्वतहस्त्यादीनां ( भावानां ) पदार्थानां ( सम्बन्धः ) तत्र सन्निवेशो नास्ति लघुनि आदर्शतले गुरु परिमाण हस्त्यादेः सन्निवेश स्यासम्भवात् न वास्तविक हस्त्यन्तरन्तत्र किन्तु आदर्श सम्बन्धेन तस्यैव हस्तिनः। आभासो व्यज्यते सएव प्रतिबिम्ब पदार्थ इति न दृष्टान्ता सङ्गतिरिति भावः १०१

नन्वेवं स्फोटस्यैकत्वात् भेदप्रयुक्तपौर्वापर्य्यव्यवहारः ? ह्रस्वदीर्घादि व्यवहारः द्रुत विलम्बितादिवृत्तिव्यवहारश्चा संगतः स्यादत आह

**तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।**
**वृत्तिकालः स्वकालश्च नादभेदाद्विभज्यते ॥ १०२**

तस्मादिति(तस्मात्)स्फोटस्यैक्यात्(अभिन्नाः कालाः)येषां तेषु काल भेद शून्येष्वित्यर्थः, वर्णवाक्यपदादिषु आदिपदेन वाक्यसमुदायमहावाक्यस्यग्रहणं (वृत्तिकालः) द्रुतादिभेदः (स्वकालः) ह्रस्वादि व्यवहारः ? चकारेण पौर्वापर्य्यादि व्यवहारस्य संग्रहः(नादभेदाद्)ध्वनिभेदाद् (विभज्यते) विविच्यते इत्यर्थः वस्तुत उक्त व्यवहारः स्फोटे नास्त्येव किन्तु ध्वनिगतपौर्वापर्य्यं प्राकृतध्वनिप्रयुक्तह्रस्वादिव्यवहारं वैकृतध्वनिकृतद्रुतादिव्यवहारश्चादाय तत्र तावद् व्यवहारः कल्प्यत इति भावः १०२

इदानीं ध्वनि स्फोटयो रनित्यत्ववादिमते स्वरूपमाह

**यः संयोगवियोगाभ्यां करणै रुपजन्यते ।**
**स स्फोटःशब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः ॥ १०३**

य इति(संयोग)स्तत्तत्स्थानेषु वायोरभिघातः (वियोगश्च उक्तस्थानान्निःसरणम् । ताभ्यां (करणैः)स्थानादिभिः(यः)प्राथमिकः(उपजन्यते)उत्पद्यते(सस्फोटः) शब्दः अस्यदेशः आकाशः सचैकोऽपि संयोगिद्रव्यान्तरकृतभेदेन भिन्नः अतो न पौर्वापर्य्यादिव्यवहारविरोधः शब्दाज्जाताः शब्दजाः प्रथमोत्पन्नात् शब्दात् शब्दान्तरं जायते ततोऽपि शब्दान्तर मेवं रूपेण श्रुति पथमारोहन्ति ? अत्र वचीचितरङ्गन्यायोद्दृष्टान्तः इत्यन्यत्र विस्तरः ते शब्दा (अन्यैः)नैयायिकैः (ध्वनयः उदाहृताः) कथिता इत्यर्थः अन्यैरित्युक्त्या नेदं स्वमत मिति सूचितं स्वमतन्तु संयोगविभागजा ध्वनय स्तदभि व्यङ्ग्यः स्फोटः शब्दो नित्य इति केषाञ्चित्तु संयोगविभागजध्वनिसम्भूतनादाभिव्यङ्ग्यः स्फोट इति मतम् तत्र ह्रस्वादि व्यवहार हेतवोध्वनयः इति पूर्वमेवोक्तत्वान्नात्र पृथगुक्त इति भावः १०३

अधुना प्राकृत वैकृतयोर्भेदम् श्लोकद्वयेनाह

**अल्पे महति वा शब्दे स्फोटकालोन भिद्यते ।**
**परस्तु शब्द संतानः प्रचयापचयात्मकः ॥ १०४॥**

अल्प इति(अल्पे महति वाशब्दे)ध्वनौ ध्वनेः अल्पत्वे महत्वेपीति यावत (स्फोट कालोनभिद्यते)नभिन्नोभवतीत्यर्थः । स्फोटस्य नित्यत्वादेकत्वात् व्यापकत्वाच्च नादाल्पत्वमहत्व कृताल्पत्व महत्वे, इति यावत् ध्वनि द्विविधिः

आद्यः उत्तरोत्तरशब्दानां कारणम् सएव प्राकृत इत्युच्यते । अस्य यादृश सामर्थ्यं तादृश एव उत्तरोत्तर शब्दोऽल्पोमहान्वा उत्पद्यते सएव प्राकृत अतएव भेरी दण्डाभिघातजशब्दो दुरंगच्छति लोहकंसाभिघातजस्तु समीपदेशमेवेतिवृत्ति भेदः (परस्तु) इतरः ध्वनिरूपः(शब्द सं तानः) प्राकृत वैकृतः प्रचयापचयात्मकः अल्पत्वमहत्वादिविशिष्टः १०४

अन्यमतमाह

दूरात् प्रभेव दीपस्य ध्वनिमात्रन्तु लक्ष्यते ।
घण्टादीनाञ्च शब्देषु व्यक्तोभेदः सदृश्यते ॥१०५॥

दूरादिति [ दीपस्य प्रभा इव]यथा एकैवा लोकः दूरादपि तथैव ध्वनि मात्रम् एकएवनादोलक्ष्यते एवञ्च प्राकृत एव वैकृत इति मतान्तरम् उभयभेद- बादि मतेनाह (घण्टेति)[घण्टादीनां]घण्टा लोह कंसानां[शब्देषु]ध्वनिषु सभेदः) कश्चित् दुरगामी कश्चित् समीपगामीतिभेदः व्यक्तःस्पष्टोदृश्यते अनेनैव दृष्टा न्तेन सर्वत्र बर्णाद्युत्पत्तिस्थले प्राकृतवैकृतनादौ मन्तव्याविति ध्येयम् पूर्व दृष्टान्तस्तु शब्दस्थलातिरिक्तस्थलीयत्वान्न सिद्धान्त संमतः इति भावः १०५

प्राकृत वैकृतयोः कार्य्यविशेषमाह

द्रव्याभिघाता त्प्रचितौ भिन्नौदीर्घप्लुतावपि ।
कम्पे तूपरते जाता नादा वृत्तो विशेषकाः ॥१०६॥

द्रव्येति द्रव्यैरभि घातः तस्मात्(प्रचितौ)विवृद्धौ ( भिन्नौ ) परस्परभि न्नौ ( दीर्घप्लुतौ ) भवत इति शेषः तत्तत्स्थानेषु यादृशोभिघातोभवति तादृशः प्राकृतो नादः एवञ्च लघुरूपाभिघातश्चेत्तदा ह्रस्वः उच्चैरभिघातात् दीर्घः उच्चैस्तरात् प्लुतश्च भवति इत्ययम् प्राकृतधर्म्मः [कम्पे)वायुनातत्तत्स्थानेषु अभिघातात् उभयोः परस्परं संघर्षस्ततश्चवर्णादिप्रस्पन्दनानुगतः कम्पोभवति तस्मिन् ( उपरतेतु ) निवृत्तेतु ( जाताः ) उत्पन्ना नादाः वैकृताख्याः प्राकृतज ध्वनयः ( वृत्तेः ) द्रुतादेः विशेषकाः परिचायकाः इति १०६

तत्रैव मतभेदमाह

अनवस्थितकम्पेऽपि करणे ध्वनयोऽपरे ।
स्फोटादेवोपजायन्ते ज्वाला ज्वालान्तरादिव ॥१०७॥

अनवस्थितेति ( अपरेध्वनयः ) वैकृताख्याः ( करणे ) ताल्वादौ (स्फोटा- देव ) प्रथमनादादेव ( नअवस्थितः कम्पः नानुवर्त्तमानकम्प इत्यर्थः तस्मिन्

अकम्पे ( उपजायन्ते ) उत्पद्यन्ते ( ज्वालान्तरादिव ) यथा इन्धनाश्रितप्रथम ज्वालातः ( ज्वाला सकम्पाद्द्वितीया ज्वाला उर्द्धंविवर्द्धते अर्थात् प्रकाशयति तथैव प्रथम नादात् उत्पन्नाः कम्पानुवर्त्तमानाः वैकृताख्गाः द्वितीयानादाः उर्द्ध विवर्धन्ते द्रुतादीन् प्रकाशयन्ति इति भावः १०७

इतः शब्द स्वरूपे मतभेदानाह

वायोरणूनां ज्ञानस्य शब्दत्वापत्ति रिष्यते ।
कैश्चिद्दर्शनभेदोहि प्रवादेष्वनवस्थितिः ॥१०८॥

वायोरिति कैश्चिदाचार्य्यैः [वायोः शब्दत्वापत्तिः] शब्दत्वम् वायुरेव शब्द इति यावत् [अणूनां] वा (ज्ञानस्य] वा अणव एव शब्दाः ज्ञानमेव वा इत्यादि [इष्यते] मन्यते [हि] यतः [प्रवादेषु] प्रवचनेषु [अनवस्थितिः] प्रत्येकं रूचीनांभिन्नत्वात् इयत्ता नास्ति अतः दर्शनभेद इति १०८

सामान्येन मतभेदानुक्त्वा प्रत्येक मुपपादयति

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्त्तिना ।
स्थानेष्वभिहतोवायुः शब्दत्वम् प्रतिपद्यते ॥१०९॥

(लब्धेति) (वक्तुः) प्रयोगकर्तुः इच्छामनुवर्त्तयतीति तेन इच्छानुसारेणेत्यर्थः प्रयत्नेनलब्धा क्रिया स्पन्दनम् यस्य सवायुः (स्थानेषु) ताल्वादिषु ( अभिहतः ) संयुक्तः सन् ( शब्दत्वं ) शब्द प्रवृत्ति निमित्तम् ( प्रतिपद्यते ) प्राप्नोतीत्यर्थः शब्दपदेन व्यवह्रियते इति यावत् १०६

ननुवायुश्चेत् कथं कत्वादिना ज्ञायतेऽतआह

तस्य कारणसामर्थ्यात् वेगप्रचयधर्म्मिणः ।
संनिपाताद् विभज्यन्ते सारवत्योपि मूर्तयः ॥११०।

[तस्येति] वेगप्रचयौधर्म्मौ यस्य वेगवत प्रचयवतश्चेत्यर्थः [तस्य] वायोः [संनिपातात्) स्थानाद्यभिघातात् [कारणसामर्थ्यात्) प्रयत्नादिकारणसम्बन्धा-दित्यर्थः (सारवत्योऽपि) कस्ले त्यादि घन रूपाः (मूर्तयः) आकाराः विभज्यन्ते विभक्ताभवन्ति इत्यर्थः सएव वायुः स्थानप्रयत्नादिकारणसम्बन्धमासाद्य ककारात् कादिवर्णरूपो भवतीति भावः ११०

अणूनां शब्दत्व मुपपादयति

अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।
च्छायातपतमःशब्दभावेन परिणामिनः ॥१११॥

( अणव इति भेदेन संसर्गेण ) सम्बधेन [ वृत्तयः ] परस्परंभिन्ना इत्यर्थः अणवः नभःस्थित सूक्ष्मशब्दाःसर्वाशक्तिर्यस्य तस्यभावस्तत्वात् यतः सर्व शक्तिमन्तः अतः इति भावः(च्छायाशब्दत्वेन आतपशब्दतया तमःशब्दत्वेन च च्छायादिसकल शब्दरूपेणेति यावत्(परिणामिनः)परिणता भवन्ति तेषामेव परिणामो यावच्छब्द इति भावः ) अणवः सर्वशक्तिमन्तः परस्परंभिन्नाश्चे त्यतः विरुद्धार्थक शब्दरूपेणाऽपि परिणामे न किञ्चिद्बाधक मुन्नेयमिति च्छायाऽऽतपदानेन सूचित मिति भावः १११

ननु अणूनां सदाविद्यमानतया सदैव कथंन परिणामः इत्यतः, आह

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥११२॥

स्वशक्ताविति ( प्रयत्नेन ) अर्थबोधनेच्छया आन्तरिकप्रयत्नेन ( समीरिताः ) उदीर्णाः अतएव ( स्वशक्तौ ) परिणामजनकताशक्तौ ( व्यज्यमानायां ) सत्यां ( शब्दाख्याःपरमाणवः ) घटेत्यादिशब्दस्वरूपाः ( प्रचीयन्ते ) संघीभवन्ति ( अभ्राणीव ) यथा आकाशे वर्षायांमेघपरमाणवः गगनतलाच्छादिनो भवन्तीत्यर्थः एवञ्च यदैव प्रयत्नप्रेरिताः तदैवशब्दपरिणामा न सदेति फलितमिति ११२

ज्ञानस्य शब्दत्वमुपपादयति

अथेद मान्तरं ज्ञानं सूक्ष्म वागात्मना स्थितम् ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥११३॥

अथेति ( अथ इदम् ) प्रत्येकं खतः सिद्धम् ( आन्तरं ज्ञानं ) प्रत्येकं प्राणिनां अन्तः अर्थविषयकज्ञानम् वर्तते तदेव (सूक्ष्मवागात्मना) इन्द्रियागोचर शब्दकारणरूपेण ( स्थितम् ) विद्यमानम् तदेव ( स्वस्यरूपस्य ) ज्ञानस्वरूपस्य [व्यक्तये] प्रकाशाय (शब्दत्वेन विवर्त्तते) वहिः शब्दरूपम् भवति इत्यर्थः ११३

तस्य निसरण प्रकारमाह

स मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथासौसमुदीर्य्यते ॥११४॥

समन इति ( सः ) ज्ञानाभिन्नः अन्तःस्थितसूक्ष्मशब्दः ( मनोभावं ) ( आपद्य ) इच्छावान् मन इति सांख्य मतानुसारेण अर्थ बोधनेच्छाविशिष्टो भूत्वा [ तेजसा ] कायाग्निना [पाकम्] आगतः तत्सम्बन्धेनोर्द्धमापन्नः [ प्राणं वायुं ] हृदयस्थवायुमाविशति, समाश्रयति [ अथ ] अनन्तरं [ समुदीर्य्यते ] उच्चार्य्यते इत्यर्थः । इदमेव भगवान् पाणिनिः स्वशिक्षायामाह आत्माबुध्या समेत्यर्थान् मनोयुङ्क्ते विवक्षया । मनः कायाग्नि माहन्ति सप्रेरयति मारुतमिति ११४

ततः कथं निःसरतीत्याह

अन्तः करणतत्वस्य वायुराश्रयतां गतः ।
तद्धर्म्मेण समाविष्टस्तेजसैव विवर्त्तते ॥११५॥

अन्तः करणेति ( अन्तःकरणतत्त्वस्य ) यावद् व्यवहारकारणस्य अद्वैत वेदान्तगेहेहि यावदन्तःकरणस्थितिः तावदेव जीवव्यवहारः तन्नाशे ब्रह्मस्वरूपत्व मिति तस्य च हृद्देशेस्थितिः तस्याश्रयतां अधिकरणतां गतः प्राप्तो वायुः प्राणवायुः । यत्रहि प्राणवायुर्नास्ति तत्र नैवान्तः करणं यथा मृतशरीरे इत्यतः तदधिकरणं अतः[तद्धर्म्मेण]अन्तःकरणस्य ज्ञानरूपशब्देन धर्म्मेण समाविष्टः पूर्व रित्या समायुक्तः सन् तेजसैव [ कायाग्निनैव विर्त्तते) वहिः समागत्य शब्दरूपो भवतीति भावः ११५

केन रूपेण वहिर्गच्छतीत्यत आह

विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।
प्राणो वर्णा नभिव्यज्य वर्णेष्वेवो पलीयते॥११६॥

विभज्येति ( प्राणः ) वायुः [ स्वात्मनः ) स्वकीयरूपस्य ग्रन्थीन् कादि वर्णरूपान् ( विभज्य )विभागं कृत्वा[पृथग्विधैः] नाना प्रकारैः [श्रुति रूपैः)कख गेत्यादिरूपैः [ वर्णान् ) (अभिव्यज्य) प्रकाशयित्वा स्वयमपि वर्णेष्वेवोऽपलीयते वर्णतः पृथक् न तिष्ठति किन्तु तद्रूपमेव भवतीति भावः ११६

मतान्तरमाह

अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वाच्चोपलभ्यते ।
व्यञ्जनाद्वायुरिव स स्वनिमित्तात् प्रतीयते ॥११७॥

अजस्रेति (अजस्रं) संततं (वृत्तिः (सत्ता) यस्य स (शब्दः) यः सूक्ष्मत्वात् अन्तर्बाह्ये सर्वत्र (उपलभ्यते) प्राप्यते हस्तादिताड़ने सर्वत्रैवशब्दो लभ्यते अतः सर्वत्र शब्दः सूक्ष्मरूपेण विद्यते इतिभावः ( स स्वनिमित्तात् ) प्रयत्नादिवशात् (प्रतीयते) प्रकाशितः सन्ज्ञायते इत्यर्थः ( व्यञ्जनात् वायुरिव ) यथा व्यञ्जनादि द्वारा वायुः प्राकाशितो भवति तथा सदा सर्वत्र सूक्ष्मरूपेण शब्दः स्थित एव निमित्तैर्विवृद्धः सन् ज्ञायते नतु नवीनो भवतीत्येतन्मतसारः ११७

पक्षान्तरमाह

**तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।**
**विवर्त्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥११८॥**

तस्येति (तस्य) शब्दस्य (प्राणे) प्राणवायौ (याशक्तिर्या) च (बुद्धौ) अन्तः करणे (व्यवस्थिता) विद्यमानाऽस्ति, शब्दाधिष्ठानम् प्राणो बुद्धिश्चेति फलितम् (साएषा) बुद्धिशक्तिः प्राणशक्तिसहकारेण(स्थानेषु)ताल्वादिषु(विवर्त्तमाना)वर्णादि रूपेण प्रतिभासमाना ( भेदं ) कादिभेदं प्रतिपद्यते प्राप्नोतीत्यर्थः तस्या एव शक्तेः कादिवर्णरूपेण अतात्त्विक अन्यथा भावो भवतीति भावः ११८

शब्द एव जगत् कारणम् इति प्रथमतः उक्तं तदेव पुनः दार्ढ्याय स्मारयतिः

**शब्देष्वेवाश्रिता शक्ति र्विश्वस्यास्य निबन्धिनी ।**
**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते ॥११९॥**

शब्द इति ( अस्यविश्वस्य ) संसारस्य [ निबन्धिनी ] कारणम् ( शक्तिः ) विवर्त्तनात्मिका शक्ति रित्यर्थः (शब्देषु एवाश्रिता) विवर्ताधिष्ठानतया शब्द एव अधिकरण मिति भावः [या] उक्तशक्तिः (नेत्रं) ज्ञापकं यस्य सः विवर्त्तवशादेव भेद व्यवहारः वस्तु तस्तु नास्तीति सूचितम् [ प्रतिभा ) तवममेत्याद्यनादि वासना (आत्मा) आश्रयो यस्य सोऽयं (भेद रूपः) सांसारिक व्यवहारः (प्रतीयते) प्रतीतिमात्रम् नतु वस्तुसत्ता भेदव्यवहारस्येति फलित मिति ११९

व्यवहारमात्रस्य शब्दाधीनत्वं प्रदर्शयति

**षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः ।**
**तस्मादर्थ विधाः सर्वाः शब्दमात्राः सुनिश्चिताः ॥१२०**

षड्जेति ( व्याख्यातः ) सङ्गीतशास्त्रेकथितः षडजादि भेदः षडजर्षभ गान्धारेत्यादि सप्त स्वर भेदः (यतः शब्देन रूप्यते) निश्चीयतेनहिकश्चिदप्यर्थः वा

चक्रमन्तराव्यव ह्रियते अज्ञशिरोमणि गोपालोऽपि स्वगोयूथे प्रत्येकं गवां हरी निलीत्यादिनाम कृत्वाआह्वानादिव्यवहारं विधत्ते तस्मात् [ सर्वा अर्थविधाः ] अर्थ प्रकाराः [ शब्दमात्राः ) शब्दनिबन्धना परिमाणे मात्रच् [ सुनिश्चताः ] निर्णिता इत्यर्थः १२०

शब्दादेव सृष्टिरित्यत्र वेदप्रामाणादि दर्शयति

शब्दस्य परिणामोय मित्याम्नायविदोविदुः ।
छन्दोभ्यः एव प्रथममेतद् विश्वमुव्यवर्तत ॥१२१॥

शब्दस्येति (अयं) संसारः (शब्दस्य) (परिणामः) शब्दादेव जात इत्यर्थः अत्रोत्पत्तितः विवर्त्तोत्पत्ति र्ग्राह्येति पूर्वोक्त मनु सन्धेयम [ इत्याम्ना यविदः ] वेदप्रामाणिकाः ( विदुः ] जानन्ति तमेव वेदमाह छ दोभ्य इति (एत द्विश्वं)संसारः[प्रथमं]सृष्ट्यादौ[छन्दोभ्यः]वेदेध्य एव व्यवर्तत अजायत इत्यर्थः वेदानां शब्दरूपत्वात् शब्दादुत्पत्तिरिति सिद्धम् अत्र प्रमाणम् ऋग्वर्णः वागेव विश्वा भुवनानि जज्ञे वाच इत्सर्वमसृजत यच्चमर्त्य मिति किञ्च एषवैछन्दस्यः साममयः प्रथमो वैराजः पुरुषोयोन्नम सृजत तस्मात् पशवोऽजायन्तपशुभ्यो वनस्पतयो वनस्पतिभ्यो दिश इत्यादि श्रुतिः स्मृतिरपि विभज्य वहुधाऽत्मानं सच्छन्दस्यः प्रजापतिः छन्दोमयीभिर्मात्राभि र्वहुधैव विवेशतम् इत्यादि किञ्च दृष्टान्तेऽपि यथा घटादौ सर्वत्र मृद्दर्शनात् मृदुपाद्यानकत्वम् सिध्यति तथैव सर्वत्र शब्दमात्रासमन्वयात् शब्दोपादानकत्वम्

सर्वत्र शब्द समन्वयमुपपादयति

इति कर्तव्यता लोके सर्वा शब्दव्यापाश्रयाः ।
यांपूर्वाहितसंस्कारो वालोऽपि प्रतिपद्यते ॥१२२

इति कर्तव्येति (लोके) सर्वा (इति कर्त्तव्यता) इदं कर्त्तव्यमिति नियोगादि सकलव्यवहाराः शब्दव्यपाश्रया शब्दनिवन्धनाः पूर्वाहितसंस्कारो जन्मान्तर सञ्चितसंस्कारः (वालोपि) यां इति कर्त्तव्यतां प्रतिपद्यते शब्देन व्यवहरतीत्यर्थः किमुवक्तव्यम् लोकेऽसदपि वस्तु शशविषाणादि वाचा व्यव ह्रियते सदपि वस्तु शब्द विना नव्यवह्रियते अतोयावद्व्यवहारे शब्द समन्वय इति भावः १२२

युक्त्यन्तरमाह

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानाना मभिघातश्च न विना शब्दभावनाम् ॥१२३॥

आद्य इति ( शब्द भावनां विना ) जन्मान्तरे शब्दभावना नासीच्चेत् तदेत्यर्थः ( आद्यः ) प्राथमिकः ( करणविन्यासः ) शब्दश्रवणार्थं श्रोत्रेन्द्रियस्य सावधानताकरणम् ( प्राणस्य ) तदाख्यवायोः ( उर्ध्वं समीरणम् ) उर्ध्वगमनं शब्दोच्चारणार्थं वायोरूर्ध्वप्रेरणमित्यर्थः ( स्थानानाम् ) तात्वादीनाम् ( अभिघातश्च ) जिह्वादिसंयोगकरणम् नस्यात् । जन्मान्तरे शब्दभावनांविना उपदेशाभावेऽपिश्रोत्रेण शब्दः श्रूयते एवंरीत्याउच्चार्य्यते इति ज्ञानस्या संभवात् इन्द्रिय विन्यासाद्य संभवः स्यात् इतिभावः अतः इन्द्रियविन्यासादिदर्शनेन श्रोत्रेण शब्दः श्रूयते इति ज्ञानकारणतया प्रतिपुरुषं पूर्व पूर्व जन्मान्तरकृत शब्दभाव नानुमीयते इति फलितम्

सर्वत्र शब्दभावनां प्रदर्शयति

न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वंशब्देन भासते ॥१२४॥

नसोस्तीति ( लोके ) व्यवहारे [ सः प्रत्ययः ] ज्ञाननास्ति [ यः ) प्रत्ययः ( शब्दानुगमात् ऋते ) शब्दमविषयीकृत्य वर्तते किन्तु [ सर्वंज्ञानं शब्देन अनुविद्धम् इव ) शब्दंविषयीकृत्यैव ( भासते ) प्रकाशते इत्यर्थः अयमाशयः गौरयम् इति प्रत्यक्षस्थलेऽपि शब्दःस्मर्य्यते अयंशब्दः एतदर्थवाचक इति सङ्केतज्ञानं शब्दार्थोभयविषयकं शब्दश्रवणानन्तरमपि उभयविषयक स्मरणं शाब्दबोधोप्युभयविषयकः, अतएव षोड़ाप्रातिपदिकार्थ इत्युद्घोषःएवञ्च सर्वत्रशब्दभावनानुगमदर्शनेन शब्दोपादानकत्वं संसारस्येति पूर्व प्रतिज्ञातार्थ सिद्धिः १२४

पुनरपि तदेवोपपादयति

वाग्रूपताचे दुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शनी ॥१२५॥

वाग्रूपेति [ अवबोधस्य ] सविकल्पकज्ञानस्य [ शाश्वती ] सदाविद्यमाना [ वाग्रूपता ] ज्ञाने यथा स्वप्रकाशत्वं स्वरूपं सदा तिष्ठति तथैव शब्दानुगतत्वमपि स्वस्वरूपं सदा तिष्ठति इति भावः [ साउत्क्रामेच्चेत् ] यदि विनश्येत् इत्यर्थः तदा ( प्रकाशः ] ज्ञानं [ न प्रकाशेत ] नविषयमवधारयेत्

[ हि ] यतः [ सा ] ज्ञाने वागानुगतता [ प्रत्यवमर्शनी ]सविकल्पकज्ञानसम्पादिका इत्यर्थः घटं दृष्ट्वा घटोऽयमिति सविकल्पकनिश्चयं करोति तत्र वाचकतया शब्दोऽपि विषयः अन्यथा वाचकशब्दाज्ञानेन कोऽयमिति सन्देहो ननिवर्त्ततेत्यतः ज्ञाने शब्दानुगतत्वं सविकल्पत्वसम्पादनम् यत्र च अस्यार्थस्य वाचकः अयंशब्दः इति वाचकविशेषस्य ज्ञानंनास्ति तत्र वस्तु इदमिति सामान्यवस्तुशब्दानुगत मेव ज्ञानं भवतीति सर्वथा शब्द विषयितां न कदाचिदपि ज्ञानं जहाति इति भावः १२५

सर्वस्य शब्दाधीनत्वेयुक्त्यन्तरमाह

**सा सर्वविद्याशिल्पानां कलानां चोपबन्धिनी ।**
**तद्वशादपि निष्पत्तौ सर्वंवस्तु विभज्यते ॥१२६॥**

सासर्वेति)सर्वाश्चता विद्या वेदादयस्ताश्च शिल्पाश्च शरादिनिर्माणविधय स्तेषां(कलानां)सङ्गीतादीनां चकारेण एवंरित्या पटो वातव्य इत्यादि उपदेशग्रहणं (उपनिबन्धिनो) ज्ञापिका[सा)वाक् किञ्च (निष्पत्तौ )घटाद्युत्पत्त्यनन्तर मित्यर्थः। शब्दवशात् सर्वं वस्तु विभज्यते घटोऽयं पटोऽय मिति विभागोभवतीत्यर्थः। अयमाशयःलोके विद्यादिभिरेव व्यवहारो भवति विद्यादयश्च शब्दे एव निबद्धाः किञ्च घटादावुत्पन्नेऽपि घटोऽयं पटोऽय मिति शब्देनैव विभागो भवतीत्यतः सर्व व्यवहारः शब्दाधीनएवेति १२६

तदेव प्रपञ्चयति

**सैषा संसारिणां संज्ञा वहिरन्तश्च वर्तते ।**
**तन्मात्रामप्यतिक्रान्ते चैतन्यं सर्वजन्तुषु ॥१२७॥**

सैषेति[ सा एषा] वाक्[संसारिणां]प्राणिनां[वहिः)व्यवहारे(संज्ञा )वाचिका (तन्मात्रां)तद्व्यवहारम्(अतिक्रान्तेऽपि)अतीतेऽपि (सर्वजन्तुषु) सर्वप्राणिषु(चैतन्यं)एतदुपलक्षकं सुखदुःखादीनाम् अन्तस्संज्ञा वर्तते सर्वत्र संज्ञादिद्वाराशब्द समन्वय इति भावः १२७

अपि च

**अर्थक्रियासु वाक् सर्वा समीहयति देहिनः ।**
**तदुत्क्रान्तौ विसंज्ञोऽयम् दृश्यते काष्ठकुड्यवत् ॥१२८**

अर्थेति)(सर्वा वाक्) अर्थक्रियासु सिद्धोगधादिरर्थपदार्थः साध्यमानधनादि क्रिया० तेषु(देहिनः)प्राणिनः समीहयति प्रवर्तयति तदुत्क्रान्तौ

वागुत्क्रमणे सति (काष्ठकुड्यवत्) काष्ठभित्त्यादि तुल्यम् (अयं) चेतनः (विसंज्ञः) चैतन्य शून्यः (दृश्यते) व्यवह्रियते शब्दानुगतं चैतन्यं शब्द व्यापाराभावे तदपि न व्यवह्रियते इति भावः १२८

लोके कुलालादिकारणरूपं घटादिकार्य्यरूपञ्चेति सर्वं शब्दब्रह्मणो विवर्त्तमहिम्नैव विभज्यते इत्युपपादयति

**प्रविभागे यथा कर्त्ता तथा कार्य्ये प्रवर्त्तते ।**
**अविभागे तथा सैव कार्य्यत्वेना वतिष्ठते ॥१२९॥**

प्रविभाग इति (प्रविभागे) शब्दब्रह्मणः कुलालः कर्त्ता घटः कार्य्यमित्यादि विभागात्मकविवर्त्ते सति (यथा] येन प्रकारेण (कर्त्ता) कुलालादिः (तथा) तेन प्रकारेण (कार्य्ये) घटादौ (प्रवर्त्तते अविभागे) उक्तविभागशून्ये विवर्त्ते सति सा वाक् तथा (कार्य्यत्वेन) घटाद्यर्थ रूपेण (अवतिष्ठते) स्थितो भवतीत्यर्थः विभागाविभागरूपेण शब्द ब्रह्मणः विवर्त्ता देव सांसारिक पदार्थ इति भावः १२९

पुनरपि जगत्कारणत्वं शब्दस्योपपादयति

**स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते यथा ।**
**तथैव रूढतामेति तया ह्यर्थो विधीयते ॥१३०॥**

स्वमात्रेति (स्वमात्रा] आत्मातिरिक्तं किमपि नास्ति तस्यैवाभासः प्रतिबिम्बरूपः प्रत्येकं पुरुषे जीव इति व्यवह्रियते प्रतिबिम्बप्रतिबिम्बितोः वस्तुतः पार्थक्याभावात् जीवब्रह्मणोरैक्यम् एतदेव बोधयति तत्वमसीत्यादि वाक्यम् संसारश्चासत्यः अत्रोपोद्वलिका यत्र हि द्वैतमिव भवति यत्र वा अन्यदिवस्यात् तत्रान्योन्यत्पश्यति अन्योऽन्यत् विजानीयात् यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात् इति श्रुतिः इत्यद्वैतमतम् (परमात्रा) यथाग्नेर्विस्फुलिङ्गा तथा ब्रह्मणोऽवयवाजीवा इति द्वैतमतम् (वाश्रुत्या) नेह ना नास्ति किञ्चनेत्यादि श्रुत्या द्वासुपर्णा सयुज्येत्यादि श्रुत्या वा यथा प्रक्रम्यते) यथा प्रदर्श्यते तथैव सा श्रुतिः तस्मिन्नर्थे रूढतामेति प्राप्नोति (हि] यतः श्रुत्या सोऽर्थो विविधीयते] निश्चीयत इत्यर्थः तत्तत्प्रवादानुसारेण तत्तच्छब्दस्य तत्तदर्थे संकेतः कृतः, अतएव तच्छब्देन स एवार्थः नत्वन्यः, इति व्यवहार नियमः एवञ्च यावद् व्यवहारस्य शब्दमूलत्वात् शब्दमूलकोऽयं संसार इति ध्वनिः १३०

पुनस्तदेव युक्त्यन्तरेणोपपादयति

**अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात् ।**
**दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा ॥१३१॥**

[ अत्यन्तेति निमित्ते ] कारणे [ अत्यन्तम् अतथा भूते] असत्ये सत्यपि (अलातचक्रादौ) उल्कोत्पातशशविषाणादौ [ श्रुत्युपाश्रयात् ] शब्दबलात् [ वस्त्वाकारनिरूपणा ] इदं वस्त्वित्याभासप्रतीतिः दृश्यते बाह्यसत्ताविहीनोऽप्यर्थः शशविषाणादिः शब्दबलेन बुद्धौ सन्निपतति शब्दसत्ताविहीनस्तु अर्थः न कुत्रापि प्रतीयतेऽतः शब्दमूलिकैवार्थसृष्टिरिति भावः १३१

अन्तर्यामिण एव शब्दत्वे युक्त्यन्तरमाह

अपि प्रयोक्तुरात्मानं शब्द मन्तरबस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥१३२॥

[ अपीति प्रयोक्तुः ] उच्चारयितुः [ आत्मानं ] अन्तः करणम् (अन्तरवस्थितम्)हृदयस्थितं(महान्तम् ऋषभम्)श्रेष्टम् [शब्दं प्राहुः]येन शब्देन[सायुज्यम् ] तद्भावापन्नः मोक्षः (इष्यते)इष्टोऽस्ति अयमाशयः शब्दो द्विविधः नित्योऽनित्यश्च नित्यः स्फोटः स एवान्तर्यामी सर्वशक्तियुक्तः सर्वेश्वरः प्रतिपुरुषम् अन्तरवस्थितम् एतद्भावनावशादेव एतद्भावापन्नो मोक्षःसायुज्याख्यः सर्वेषामिष्टोऽस्ति अनित्यश्च लोके उच्चार्य्यमाणः व्यावहारिकः इति एतदेव महाभाष्ये चत्वारि शृङ्गा त्रयोऽस्य पदा इत्यादि प्रतिपादितम् १३२

शब्दसंस्कारस्य सायुज्योपायतां प्रदर्शयति

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य प्रवृतितत्वज्ञस्तद् ब्रह्मामृत मश्नुते ॥१३३॥

तस्मेति [ तस्मात् ] शब्दब्रह्मणोवैक्यात् ( शब्द संस्कारः ) अयं शब्दः साधुः अयं शब्दोऽसाधुः इत्यादि प्रक्रिया[सा]परमात्मनः परब्रह्मणः [ सिद्धिः ) प्राप्त्युपायः कथमित्यत आह । ( तस्य ) शब्दब्रह्मणः ( प्रवृत्तितत्वज्ञः ) वर्णादिव्यवहारः ध्वनिकृतः शब्दब्रह्म तु तदभिव्यङ्ग्योऽखण्डः एकः इत्यादि रूपेण यावत्व्यावहारिकधर्म्माणां नेति नेतीत्यादि श्रुति रीत्या निषेधमुखेन शुद्धाखण्डब्रह्मज्ञानवान् पुरुषः तद् ( ब्रह्मामृतम् ] अजरामरादिभावं (अश्नुते) ब्रह्मरूपो भवतीत्यर्थः संस्कृतेन ध्वनिना विशुद्धान्तः करणे विशुद्धं ब्रह्माभिव्यज्यते इति ध्वनिसंस्कारः परम्परया ब्रह्मप्राप्त्युपाय इति भावः १३३

इदानीं स्मृतीनां प्रवाहानादित्वव्यवस्थापनेन प्रामाण्यं स्थापयति

न जात्वकर्तृकं कञ्चिदागमं प्रतिपद्यते ।
वीजं सर्वागमापाये त्रय्येवादौ व्यवस्थिता ॥१३४॥

नजात्विति(कंचित् आगमम्)स्मृतिम् [ जातु ] कदाचिदपि [ अकर्तृकं ] अपौरुषेयं(न प्रतिपद्यते)न विजानाति अपि तु पौरुषेयं एव जानाति केवलं वेद

वोक्तान्येवापौरुषेयाणि नन्वेवम् पूर्वस्मृतिषु विनष्टासु पुनः कथं भविष्यन्तीत्यत आह ( बीजं ] स्मृतेः कारणरूपं [ सर्वागमापाये ) सर्वस्मृतिविनाशेऽपि सति ( त्रयी ] एव श्रुतिरेव ( आदौ व्यवस्थिता ) वेदे एव कारणरूपेण तिष्ठतीत्यर्थः पूर्वस्मृतिषु विनष्टास्वपि पुनः प्रणेतारः तद्वेदबीजमादाय प्रणयिष्यन्तीत्यतः स्मृतीनां प्रवाहविच्छेदाभावेन प्रवाहनित्यतया प्रामाण्यम् इति भावः १३४

उक्तार्थमेव युक्त्यन्तरेणोपपादयति

**अस्तं यातेषु वादेषु कर्त्तृष्वन्येष्वसत्स्वपि ।**
**श्रुतिस्मृतिगतं धर्म्मं लोको न व्यतिवर्त्तते ॥१३५॥**

अस्तमिति [ वादेषु ] भक्ष्याभक्ष्यादितत्तद्विषयनियमनिबन्धेषु अस्तं यातेषु विनष्टेषु सत्स्वपि ,अन्येषु ( कर्त्तृषु ) ग्रन्थ निर्म्मापकाचार्येषु ( असत्स्वपि ) अविद्यमानेष्वपि ( श्रुतिस्मृतिगतं ) तत्प्रतिपाद्यं ( धर्म्मम् ) भक्ष्याभक्ष्यादिनियमं ( लोकः)साधुजनः (न व्यतिवर्तते) न व्यतिक्राम्यतीत्यर्थः पूर्वाचार्यकृतग्रन्थाः विनष्टाः पुनर्नवीनाचार्य्याः निबन्धनग्रन्थान् नाकार्षुः एतादृशावस्थायामपि साधुजनाः परम्परागतशिष्टाचारं न त्यजन्तीत्यतः श्रुतिस्मृतिकथितधर्म्मस्य कदापि विच्छेदो नास्तीति प्रवाहनित्यतेति भावः १३५

नन्वेवं स्मृतिमन्तरापि लोको धर्म्ममाचरिष्यन्त्येव किमर्थं स्मृति प्रणयनेनेत्यत आह ।

**ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यते ।**
**धर्म्मो ज्ञानस्य हेतुश्चेत्तत्राम्नायो निबन्धनम् ॥१३६**

( ज्ञान इति ) ( स्वाभाविके ) प्राक् कृतधर्म्मवशात् शास्त्रमन्तरापि उत्पन्ने ज्ञाने (शास्त्रैः) (कश्चन) अर्थः ) प्रयोजनं न ( विद्यते ) यदि (ज्ञानस्य) हेतुः कारणं धर्म्मश्चेत् किन्तु [तत्र] धर्म्मे [ आम्नायः ( निबन्धनं ) ज्ञापक कस्यचित् पुरुषस्य प्राक्तनधर्म्मवशात् ज्ञानोत्पत्तौ तत्र शास्त्राणां प्रयोजन विरहेऽपि आपामर अतिधर्म्मव्यवस्थापनेन शास्त्राणां चारितार्थ्यमितिभावः१३६

आगमस्यैव प्रामाणत्वे तर्कस्य सर्वथा अप्रामाण्यमेवस्यादत आह

**वेद शास्त्राविरोधी च तर्कश्चक्षुर पश्यताम् ।**
**रूपमात्राद्धि वाक्यार्थः केवलान्नाव तिष्ठते ॥१३७॥**

वेद शास्त्रेति[अपश्यताम्]साक्षात् कर्त्तुमसमर्थानाम् जनानां ( वेदशास्त्रा विरोधी] आगमाविरुद्धः ( तर्कश्चक्षुः ] अर्थप्रकाशकः (हि) यतः [केवलात्) प्रकरणादितर्क रहितात्[रूपमात्रात्]केवलवाक्यस्वरूपात्[वाक्यार्थः]निश्चयात्मकं वाक्यार्थो (नावतिष्ठते) न व्यवस्थितो भवतीत्यर्थः प्रकरणादिज्ञान पुरःसरं यो वाक्यार्थः स एव निश्चयात्मकः प्रकरणादि ज्ञानं तर्कमन्तरा न भवेदतो वेद वाक्यार्थे सहकारि तर्क प्रमाणम् नतु शुष्क तर्कः इति भावः १३७

तदेवोपपादयति

**यतो विवक्षा पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी ।**
**इति न्यायो वहुविधस्तर्केण प्रविभज्यते ॥१३८॥**

यत इति ) यतः यस्मात् (विवक्षा)पशुना यजेतेत्यत्र कत्वस्य विवक्षा अतएवैकपशुकरणकयागादहृष्टसिद्धिः नतु अनेकपशुकरणकयागात् ग्रह समार्ष्टि + इत्यत्र अविवक्षा अतोनवसोमरसपात्रसम्मार्जनं एवञ्च विधेयगत संख्या विवक्ष्यते नतूद्देशगतसंख्या इत्यनुगमः (पारार्थ्यम्) नक्षत्रं दृष्ट्वा वाच विसृजेत् इत्यादौ नक्षत्रपदस्य तदुदयकाले लक्षणा अत एव सत्यपि नक्षत्रदर्शने दिवा न वाग् विसर्गः रात्रौ च असत्यपि दर्शने विसृज्यते वाक् इति(लैङ्गिकी)अर्थस्य व्यक्ति र्यथा अक्ताः शर्करा इत्यत्र तेजो वैघृतमित्यन्यत्र घृतस्य स्तुति रूप लिङ्गात् घृतेनाक्ता इत्यर्थस्य प्रकाशः(इति वहुविधः न्यायः) अनुगमः(तर्केण प्रविभज्यते) विविच्यते तस्मात् वेदार्थवोधे सहकारितया तर्कस्य प्रामाण्यमिति भावः १३८

ननु यथा वेद वाक्यार्थं तर्को निश्चिनोति तथा स्वतन्त्रार्थमपि कथन्न निश्चिनुयात् अतआह

**शब्दानामेव सा शक्ति स्तर्को यः पुरुषाश्रयः ।**
**स शब्दानुगतो न्यायोऽनागमेष्वनिबन्धनः ॥१३९॥**

शब्दानामिति)[यः पुरुषाश्रयः]पुरुषवृत्तिः तर्कः उक्तविवक्षादिविषयकः [सा शब्दानामेव शक्तिः]सामर्थ्यं (सन्यायः ) अनुगमः (शब्दानुगतः ) शब्दसहकृतोभवती त्यर्थः शब्दानां नियतविषयकशक्तिमत्वे सत्येव विवक्षादयो भवंति नतु शब्दशक्तिमन्तरापि अतएव हरिशब्दस्थले प्रकरणादिनापि विष्ण्वाद्यन्यतमार्थ एव नियम्यते नतु कदाचिदपि घटादयः इति सारः तस्मात्(अनागमेषु)अशब्दस्थले शुष्क तर्कः(अनिवन्धनः)अनिश्चायक इत्यर्थः १३९

तत्रैवं शब्दस्य सर्वसामर्थ्ये सर्वकार्य प्रसंगोऽत आह

रूपादयो यथा दृष्टाः प्रत्यर्थं यत शक्तयः ।
शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ॥ १४० ॥

रूपेति[(यथा रूपादयः)रूप रस गन्ध स्पर्शादयः (प्रत्यर्थम्) अर्थमर्थम् प्रति (यत शक्तयः) नियतसामर्थ्यका [दृष्टाः]स्फटिकरूपम् अन्यप्रतिबिम्बमादधाति नत्वन्यत् ओषधिविशेषरसः विषं शमयति नान्यत्र चम्पकगन्धः भ्रमरम् नाशयति अयस्कान्तस्पर्शः स्वर्णयति इत्यादिदृष्टफलनियमः ) शालिग्रामरूप तीर्थादिकस्पर्शादिः अदृष्टजनक इत्यदृष्टफलनियमश्चेति भावः तथैव शब्दा तत्तद्ध्वनिवर्णाद्यभिव्यङ्ग्या विषापहरणादिषु यतशक्तयो दृश्यन्ते केन चित् शब्देन विषहरण दृष्टफलं कस्य चिन्मन्त्रस्य पारायणेन अदृष्टार्थसिद्धि रितिनियम इति भावः १४०

यथा तुलस्यादि रसस्यदृष्टिफलं रोगनिवृत्तिः अदृष्टफलं भगवत्प्रसादः इत्युभयफलं एवं साधुशब्दाना मुभयफल मुपपादयति

यथैषां तत्र सामर्थ्यं धर्म्मेप्येवं प्रतीयते ।
साधूनां साधुभिस्तस्माद्द् बाच्य मभ्युदयार्थिभिः ॥ १४१ ॥

यथैषामिति (यथा) साधूनाम्) तेषां शब्दानाम् (तत्र) विषहरणादिदृष्टिफले [सामर्थ्यं] शक्तिः एवं धर्म्मेपि सामर्थ्यं प्रतीयते एकः शब्दः सम्यक् ज्ञातः इत्यादि श्रुत्या ज्ञायते इत्यर्थः तस्माद् [ अभ्युदयार्थिभिः ] इहामुत्रफलकांक्षिभिः जनैः कर्तृपदं[साधुभिः]संस्कृतशब्दैः करणे तृतीया वाच्यम् व्यवहर्तव्यमित्यर्थः १४१

ननु यस्य दृष्टफलजननसामर्थ्यं तस्याद्दष्टफलजननसामर्थ्यं कथं न यस्य चादृष्टफलं तस्या दृष्टफलदृष्टान्तबलेन दृष्टफलं कुतो नेत्या शंकां परिहरति

सर्वो दृष्टफलानर्थां नागमात्प्रतिपद्यते ।
विपरीतञ्च सर्वत्र शक्यते वक्तुमागमे ॥ १४२ ॥

सर्व इति] [सर्वः]शब्दः [आगमात्]आगमप्रामाण्यात् दृष्टफलान् अर्थान् प्रतिपद्यते कथयति यदि तदा [आगमे] वेदे सर्वत्र विपरीत फलं दृष्टफलस्थले अदृष्टफलं अदृष्टफलस्थले दृष्ट फलं [वक्तुं] शक्यते अपितु आगमप्रामाण्यं नास्ति यत् सर्वेषामेकरूपमेव फलं कल्पनीयम् किन्तु कस्यचित् दृष्टमेव फलं

कस्यचित् अदृष्टमेव कस्यचित् तूभयमेवेति आगमप्रमाणसहकृतयुक्त्या कल्पनीयमिति सारः

न चैतावता प्रकृते व्याकरणे किमायातमत आह

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम् ॥१४३॥**

साधुत्वेति ) साधुत्वज्ञानं ) इदं साधु इत्याकारकसाधुत्वप्रकारकज्ञानं विषयः) प्रतिपाद्यः यस्याः ( यथा साधु शब्दज्ञानं भवेत् + इति फलितम् ) सा एषा (व्याकरणस्मृतिः ) व्याकरणशास्त्रम् । ननु पाणिनेः पूर्वं व्याकरणं नासीत् इति कथं नित्यरूपेयं स्मृतिरत आह (शिष्टानां) आचार्य्याणां (अविच्छेदेन)सातत्येन (इदं स्मृतिनिबन्धनम्)शास्त्र प्रणयनम्)आचार्य्याणां विच्छेदेऽपि व्याकरण स्वरूपस्य विच्छेदाभाव इति भावः १४३

व्याकरणेन वास्तविकशब्दस्वरूपज्ञानात् मोक्षफलं स्तौति

**वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भूतम् ।**
**अनेकतीर्थभेदाया स्त्रय्यावाचः परंपदम् ॥१४४॥**

वैखर्य्या इति [वैखर्य्या)वैखरीवाचः श्रोत्रेन्द्रियेण यत् श्रूयते सा वैखरी इयमनेकधा घटः इत्यादि संस्कृता घटा इत्यादि भ्रष्ट संस्कारा भाषा दुन्दुभिवेणुवीणादिजन्यध्वनिमात्ररूपा इत्यादयः ( मध्यमायाः ) हृदयस्थवाचः इयं हि जपादौ बुद्धि निर्ग्राह्या सूक्ष्मा प्राणवृत्यनुगता [पश्यन्त्याः)नाभीस्थवाचः इयं हि नाभिदेशे वायुनाऽभिव्यक्ता मनोगोचरीभूता योगिना समाधौ साक्षात्क्रियमाणा(।एतस्याः ) त्रय्याः अनेकतीर्थभेदायाः तत्तत्स्थानभेदप्रयुक्त भिन्नायाः वस्तुतः एकस्या एवेति फलितम्(वाचः परं)श्रेष्टं(पदम्)मूलाधारस्थ पराख्यम् एतद् (अद्भुतम्)विलक्षणम् योगिनामपि समाधौ निर्विकल्पकज्ञान विषयः ब्रह्मरूपम् एतत्साक्षात्कारेणैव मोक्षो भवतीति ध्वनितम् अतएव महाभाष्ये चत्वारि वाक् परिमितानि पदानीत्यादि प्रयोजन निरूपणे प्रथमाह्निके प्रतिपादितम् किञ्च परा वाक् मूल चक्रस्था पश्यन्ती नाभि संस्थिता हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगेत्यन्यत्र स्वरूपं निर्द्धारितम् १४४

ननु इदं साधुमसाध्विति व्यवस्थां अस्मदादयः स्वयमेव करिष्यामः किं व्याकरणेनेति परिहरति ।

**तद्विभागा विभागाभ्या ङ्क्रियमाणमवस्थितम् ।**
**स्वभावज्ञैश्च भावानां दृश्यन्ते शब्दशक्तयः ॥१४५॥**

तद्विभागेति(भावानां)वस्तूनां( स्वभावज्ञैः) एतावन्तोऽर्थाः एतावन्तः शब्दाः इति यथार्थ स्वरूपज्ञानिभिः पाणिन्यादिभिः (शब्दशक्तयः] शब्दसामर्थ्यानि

(दृश्यन्ते) योगजधर्म्मवलात् प्रत्यक्षीक्रियन्ते यतः तत इतिशेषः तैः[विभागाविभाभ्यां)भू धातु ति प्रत्यय इति प्रकृत्यादि विभागेन पङ्क्ति विंशति, दाधर्ति दाधर्षीत्यादि रूपेण अविभागेन साक्षात् पदोपदेशेनेति फलितम् (क्रियमाणं) निर्म्मीयमाणम् ( तद्) व्याकरणम् साधुत्वबोधकतयानियतम् अस्मदादीनां तादृश ज्ञानाभावात् साधुत्व ज्ञापनार्थं व्याकरणमिति भावः १४५

श्रुतिस्मृत्यो र्नित्यत्व बोधन द्वारा ताभ्यामेव धर्म्मो व्यवस्थापनीय इति प्रतिपादयति ।

अनादि मप्यवच्छिन्नां श्रुतिमाहुरकर्त्तृकाम् ।
शिष्टै र्निवध्यमाना तु न व्यवच्छिद्यते स्मृतिः॥१४६

अनादीति)(अवच्छिन्नामपि)प्रलयेतिरोहितभूतामपि ( अनादिम् ) प्रलयेनिरोभावे तादृशस्वरवर्णानुपूर्वीणां नाशाभावात् युगादौ आविर्भावेऽपि पूर्वं नासीत् अधुना जात इति व्यवहाररहितामिति भावः ( अकर्त्तृकाम् ) कर्त्तृरहिताम् ( आहुः )"धाता यथा पूर्व मकल्पयत्"इति श्रुतिवलात् हिरण्यगर्भादेः सृष्ट्यादौ प्रचारकर्त्तृत्वेऽपि स्वातन्त्र्येण रचनाकर्त्तृत्वाभावात् अपौरषेयैव श्रुतिरिति भावः [ स्मृतिस्तु ) ( शिष्टैः ) आचार्य्यैः व्यासादिभिः ( निवध्यमाना ) श्रुत्यर्थप्रकाशार्थं विरच्यमाना ( न व्यवच्छिद्यते ) प्रवाहरूपेण न विनश्यति स्मृतेः पौरषेयत्वेऽपि तदुक्तविषयप्रवाहस्य सदा विद्यमानतया नित्यत्वमिति भावः एवञ्च शास्त्र प्रतिपादितविषयानुष्ठाने धर्म्मः तदतिक्रमणे अधर्म्मः सामान्यतो यो गोवधोऽधर्म्मः स एव गोमेधयागे धर्म्म इति शास्त्रेणैवोच्यते इति विना शास्त्रं न धर्म्मादिज्ञान मिति एतेषां शब्दानां प्रयोगे धर्म्मइति ज्ञापनार्थं व्याकरणशास्त्रमिति तात्पर्य्यम् १४६

प्रकारान्तरमाह

अविघाता द्विवृत्तानामभिख्या स्वप्नवच्छ्रुतौ ।
भावतत्त्वन्तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः॥१४७॥

अविघातेति [ श्रुतौ ) वेदे ( विवृत्तानां ] प्रकाशितानां पदार्थानां [ अविघातात् ] अविघातं कृत्वा याथातथ्येनेति यावत् [ भावतत्वं ) वस्तुतत्वं [ विज्ञाय ] ज्ञात्वा [ लिङ्गेभ्यः ) नाना हेतुभ्यः ( विहिता ] प्रकाशिता [ स्मृतिः ] ( अभिख्या ] संज्ञा यथा स्वप्ने दृष्टानां भावतत्वं जाग्रदवस्थायां स्मृत्वा स्मृत्वा वागादिनाना हेतुभ्यः प्रकाश्यते तथैव वेदेस्थितं वस्तु स्मारं स्मारं नानाहेतुभ्यः प्रकाश्यते सैवस्मृतिरिति भावः १४७

व्याकरणफलमाह

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।**
**चिकित्सा लक्षणाध्यात्म शास्त्रैस्तेषां विशुद्धयः ॥१४८**

कायेति ( कायवाग्बुद्धिविषया ) [ येमलाः ) कायगतमलं रोगादि वाग्मलं अपभ्रंशत्वम् बुद्धिमलं विषयरागद्वेषादि एते [ समवस्थिताः ) वर्त्तमानाः ( तेषाम् ] [ चिकित्सालक्षणाध्यात्म शास्त्रैः)(विशुद्धयः)संस्काराः भवन्तीत्यर्थः चिकित्सा शास्त्रं आयुर्वेदः तेन औषधादि द्वारा रोग निवृत्तिः, लक्षणेन व्याकरणशास्त्रेण इकोयण चीत्यादि सामान्यविशेषलक्षणादि द्वारा अपभ्रंश निवृतिः अध्यात्मशास्त्रेण वेदान्तेन रागद्वेषादिनिवृतिः भवतीत्यतः अपभ्रंश परिहारः व्याकरणफलमिति भावः १४८

अर्थनिमित्ता साधुत्वासाधुत्वव्यवस्था नतु शब्दस्वरूप निमित्तेत्युपपादयति

**अस्व गोण्यादयः शब्दाः साधवो विषयान्तरे ।**
**निमित्तभेदात्सर्वत्र साधुत्वन्तु व्यवस्थितम् ॥१४९॥**

अस्वेति ( अस्वगोण्यादयः ) शब्दाः ) वाज्यर्थे अस्वशब्दः गवार्थे गोणीशब्दः इत्यादयः असाधवोऽपि ( विषयान्तरे ) धनाभावे आवपने चार्थे ( साधवः ) दृश्यन्ते यतः अतः इतिशेषः ( साधुत्वम् ) तुशब्दात् असाधुत्वं ( निमित्तभेदात् ) अर्थप्रवृत्तिनिमित्तादिविशेषप्रयुक्तं ( सर्वत्र व्यवस्थितम् ) नियतम् अनुमेयमिति भावः ----॥१४९॥

साधुशब्दानामेव वाचकत्वात् अपभ्रंसस्थलेऽपि साधुस्मरणद्वारा शाब्द बोध इति नैयायिकमत मनुवदति

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ॥**
**तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ॥१५०॥**

ते साध्विति(तेऽपभ्रंशाः ( अनुमानेन ) सादृश्यादिना ज्ञातेषु इति शेषः अत एव साधु पदे स्व वोध्य क्रियायाः स्वाधारकालानन्तरकालेन प्रत्ययोत्पत्ति रूपक्रिया व्यवच्छेदकतया ज्ञापक क्रियाश्रय वोधकत्वात् " यस्य च भावेनेति सप्तमी " ( साधुषु ) संस्कृतेषु [प्रत्ययोत्पत्ति हेतवः] शाब्दबोधकारणानि [तादात्म्यमुपगम्येव ] साधुभिः सहतादात्म्यं प्राप्येव स्वसादृश्येन साधून् स्मारयित्वा इति फलितोऽर्थः ( शब्दार्थस्य प्रकाशकाः ) वोधकाः भवन्तीत्यर्थः १५०

ननु घट शब्दादय इव घड़ा शब्दादयोऽपि साक्षात् वाचका भवन्तु किञ्च कलशादिवत् पर्य्याया अपि भवन्त्वत आह

न शिष्टैनुगम्यन्ते पर्य्यायो इव साधवः ।
न यतः स्मृतिशास्त्रेण तस्मात्साक्षाद वाचकाः १५१

नशिष्टैरिति [ यतः शिष्टैः ] आचार्य्यैः [ स्मृति शास्त्रेण ) व्याकरण कोशादिना [ साधव इव ) अपभ्रंशाः इति शेषः ( न अनुगम्यंते ) अत इत्याध्याहारः ( न पर्य्यायाः ) घट पर्य्याय कलशादीनां कोशादौ अनुगमा दिव घड़ादि शब्दानां तद्विरहात् पर्य्यायता विरह इति भावः यस्मात् न पर्य्यायाः ( तस्मात् साक्षात् अवाचकाः ] एकप्रवृत्तिनिमित्तावच्छिन्नवाचकत्व मेव पर्य्यायत्व मिति भावः १५१

असाधूनां साधुस्मरणद्वारावाचकत्वे दृष्टांत मुपपादयति

अम्बाम्बेति यदा वालः शिक्ष्यमाणोऽपभाषते ।
अव्यक्तन्तद्विदां तेन व्यक्ते भवति निश्चयः ॥१५२॥

अम्बेति [ अम्बाम्बेति शिक्ष्यमाणः ) वृद्धैः अम्बा अम्बा इति वदेत्युपदिश्यमानः ( वालः ) द्विहायनोवटुः ( यदा अव्यक्तं ) अमामेति ( अपभाषते ] अशक्त्या अपभ्रंशमुच्चारयति तदा ( तद्विदां ) साधुज्ञानां वृद्धानां ( तेन ) अव्यक्त कथनेन ( व्यक्ते ] साधुशब्दे अनुमितेसति ( निश्चयोभवति ) अयमिदं कथयतीति निश्चीयते इत्यर्थः वालेन दुधू इत्युक्ते वृद्धः साधु शब्दानुमानेन दुग्धमित्युच्चारयतीति निश्चिनोतीति भावः १५२

प्रकृते निगमयति

एवं साधौ प्रयोक्तव्ये योऽपशब्दः प्रयुज्यते ।
तेन साधुव्यहितः कश्चिदर्थोऽभिधीयते ॥१५३॥

एवमिति]तथैवजनेन ( साधौ प्रयोक्तव्ये ) सति अशक्त्यादिनेति शेषः ( यःअपशब्दः ) अपभ्रंशः ( प्रयुज्यते ) तेन ) अपशब्देन ( साधुव्यवहितः ) साधुस्मरणानन्तर मित्यर्थः [ कश्चित् अर्थः ) स्मृत साधु सङ्केतितार्थः [ अभिधीयते ] वोध्यते इत्यर्थः अपभ्रंशेषु शक्तिर्नास्तीति भावः १५३

अन्यमत मुक्त्वा तत्खण्डन पुरस्सरं स्वमत माह

पारम्पर्य्यादपभ्रंशा निर्गुणेष्वभिधातृषु ।
प्रसिद्धि मागता ये तु तेषां साधुर वाचकः ॥१५४॥

पारम्पर्य्येति [ निर्गुणेषु ] स्त्रीशुद्रवालादिषु ( अभिधातृषु ) प्रयोग कर्तृषु विषयेषु ( पारम्पर्य्यात् ] अनादिकालतः [ प्रसिद्धि मागताः ] कम्बु ग्रीवादिमति गगरी शब्दः सास्नादिमतिच गावी शब्दः एवं रूपेण व्यवहृताः [ ये अपभ्रंशाः भाषाशब्दाः [ तेषां ] समुच्चारणे इति शेषः [ साधुः अवाचकः] स्त्रीशूद्रादीनां साधु स्मरण द्वारा नार्थ वोधो भवति प्रत्युत साधूच्चारणेऽपि भाषाशब्दैनै वार्थवोधो भवतीति शक्तिग्राहकव्यवहारस्योभयत्र तौल्यात् भाषा शब्देष्वपि शक्तिः केवल धर्म्म जनकता साधावेव नत्वसाधाविति भावः

तदेवाह

**दैवी वाग् व्यवकीर्णो य मशक्तैरभि धातृभिः ।**
**अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्य्ययः ॥१५५॥**

दैवीति [ अशक्तैः ] असमर्थैः [ अभिधातृभिः ] उच्चारकैः इयं ( दैवी-वाग् ] देववाणी ( व्यवकीर्णा ) ।संकीर्णा संस्कृतेन व्यवहर्त्तव्ये भाषयापि व्यवह्रियते इति तयोः साङ्कर्य्यमिति साधुविवेकाभावात् व्यवहारोपपत्यै भाषास्वपि शक्तिः कल्पनीयै वेति भावः ( अस्मिन्वादे ( अनित्यदर्शिनान्तु ] नैयायिका दीनाम्( बुद्धिविपर्य्ययः) भाषासु नास्ति शक्तिरिति भ्रम इत्यर्थः १५५

तत्रैव युक्त्यन्तर माह

**उभयेषामविच्छेदेऽन्य न्यशब्दविवक्षया ।**
**योऽन्यःप्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः ॥१५६**

**इति वाक्य पदीये ब्रह्मकाण्डः**

उभयेषामिति ( उभयेषाम् ) साध्वसा धूनां ( अविच्छेदे ) अविनाशे सत्येव एवार्थकोऽपि ( अन्य शब्द विवक्षया ) गो शब्द प्रयोगेच्छया ( यः अन्यः ] शब्दः परः [ प्रयुज्यते ) प्रयुक्तो भवति ( स अर्थस्य ] गवार्थस्य ( न अभिधायकः ) न वोधको भवतीत्यर्थः वालप्रलापवत् अन्यशब्द विवक्षया अन्यःप्रयुक्तः साधु रसाधुश्च नार्थवाचको भवतीत्यतः उभयत्र शक्ति रिति सिद्धम्

इति महा वैयाकरण श्रीहरि वृषभाचार्य्य विरचित वाक्य पदीय प्रकाशे प्रथमस्य व्रह्मकाण्डस्य व्याकरणन्यायवेदान्तसांख्याद्यध्यापक झोपाह्व मैथिल पण्डित श्री दुर्ग्येश शास्त्रि प्रणीत प्रत्येकार्थ प्रकाशिका टीका समाप्ति मगात् शुभमभूयात्

———

## ❀ प्रणेतृ परिचय ❀



गुणाष्टाङ्केन्दु १९८३ दृष्नेऽब्दे वैक्रमेकुज वासरे ।
माधवाऽसित सप्तम्यां काण्डोयम् पूरितोऽनया ॥ १ ॥
एनां दुर्व्येशझा शर्म्मा पित्रोः परफलाप्तये ।
विनिर्म्माऽर्पिप च् श्रीम च् श्यामाङ्घ्रिसरसीरूहे ॥ २ ॥
तातः श्रीहरि केशवाभिधबुध श्रीकान्त चिन्ताचणः ।
आनन्दा जननी च यं जनयति स्मोल्लासित श्रीपदा ।
श्रीराधारमणः पितु स्त्ववरजः सम्पत् सुताद्यन्वितः ।
ख्यातः सर्वगुणान्वित स्तदनुजः श्रीरेवती रामणः [ रेवतीरमण ) ॥ ३ ॥
एते श्री ठीठरा ख्यस्य पञ्जीवद्धस्य धीमतः । ( शशिपुर शूलपाणिझा पांजि ]
पगौली मूलका विप्राः सुताख्याताश्च मण्डले [पगुलवार बढ़िआम मैथिल परिचय
यद्द भूमौजनकोऽभवज्जन पतिर्लक्ष्मीः स्वयंजानकी ।
यस्याः सम्प्रति शाशको निज भूजैः प्रख्यात कीर्त्तिर्भूवि ॥
नेपालेश्वर चन्द्र शेरनृपति धर्म्मात्मदानीश्वरः ।( राणा श्री ३ चन्द्र समसेर )
तस्या वाग् वतिकातटे वसत पूराख्यं पुरंजन्म भूः ॥ ५ ॥
विद्यालयान् कति पयान् कृतवान् स्वभूपैः ।
अस्माविधान् निजबुधान् भृतवान् गुणाद्रैः ।
षट् शास्त्रसार रस रञ्जित मानसालिः
नेपाल राजगुरु रिन्दतिहेम राजः ( श्री हेमराज उपाध्यायः ] ॥ ६ ॥
स्वग्रामे प्रथमं मनीषिमहित श्रीकर्म्मदत्ताख्यतः ।
भीठायां जननी जनुर्भुविमहाविद्वन्नथुन्याख्यतः [श्रीनथुनीझा ) ।
कौमुद्यन्तमधीत्य साधु निखिलं ग्रन्थं तदाशीर्वृतः ।
काश्यां श्री भुवनेश्वरस्यचरणाम्भोजं शरण्यं श्रितः ॥ ७ ॥
तत्र श्री राम कृष्णः सुरगुरु निभया ख्याति माप्तः स्वकीर्त्या ।
तात्या शास्त्रिप्रसिद्धो बुधजन निकरे भूतिटीका प्रकर्त्ता ।
सम्राजो लब्धवान् वै महदुभयपदप्रागुपाध्याय शस्तिम् ।
टीकाग्रन्थार्थचिन्तामणिममलमदः पादपद्मादलब्ध ॥ ८ ॥

शेषश्चषट् शास्त्र विचारदक्ष श्री बालबोधादुपनाममिश्रात् ( कोकनवासीमैथिल अध्यापकात् काशिकराजकीयविद्यालये दर्शन शास्त्र माप्त् ॥ ६ ॥
वृन्दावने शरण संश्रित सज्जनाना मन्नादि दाननिचयैः प्रथितः पृथिव्याम् ।
श्रीकान्तकान्त पद पद्म समाश्रितो यो वेदान्तवादविधिवादविचारदक्षः ॥ १० ॥
गोपालाचार्य्यवर्येण महता तेन निर्मिते ( श्रीस्वामी महन्त गोपालाचारी ।
श्रीहयग्रीव रामानुजविद्याधाम्नि पाठकः

प्राप्तिस्थान
पं० द्रव्येश झा व्या० आ० वे० शास्त्री प्रधानाध्यापक
श्री १०८ स्वामी महन्त गोपालाचार्य्य संस्थापित श्री हयग्रीव रामानुज-पाठशाला वृन्दावन ( मथुरा )

निवेदकः—
प्राप्तिस्थान—
पं० श्री वरशर्मा चतुर्वेद गतश्रम टीला मथुरा

---

## ❀ वाक्यपदीय ब्रह्मकाण्डस्य शुद्धयशुद्धि पत्रम् ❀

| पृ० सं० | पं० सं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | ६ | यतम् | यम् |
| ,, | ८ | दात्स्यात् | दात्म्यात् |
| ,, | १० | व्यापक | व्यापकम् |
| ,, | १२ | पट | पटा |
| ,, | २७ | अज्ञाज | अज्ञानज |
| ,, | ३० | मर्य्यन | मर्थन |
| ,, | ३२ | रूपेणय | रूपेणाच |
| ३ | ३ | ब्रह्मे दम् | ब्रह्मे दम् |
| ३ | १६ | बाधातू | बाधात् |
| ,, | २४ | ताशक्त | ताःशक्त |
| ,, | २७ | पाश्रितः | पाश्रिताः |
| ४ | ३ | पेक्ष्पै | पेक्ष्यै |
| ,, | ८ | स्थियव | स्थित्यव |
| ,, | १० | व्यवहार | व्यवहार |
| ,, | ११ | श्रोखने | जोखने |
| ,, | २६ | निर्विः | निर्वि |
| ,, | | | |

| अंकपृष्ट | पांक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५ | २२ | गगनः | गगनम् |
| ६ | ३ | सहसम् | सहस्रम् |
| ,, | ४ | थर्व | थर्व |
| ,, | १२ | सभावे | समावे |
| ७ | १० | कर्म्मीका | कर्म्मका |
| ८ | ११ | कणम् | करणम् |
| ,, | १६ | स्वाध्यादी | स्वाध्यायादी |
| ,, | २६ | गोत्वशि | गोत्वविशि |
| १० | ५ | मध्यामा | मध्यमा |
| ,, | ७ | द्रुतारा | द्रुतरा |
| ११ | १० | यावतू | यावत् |
| ,, | २५ | पासेत | पासते |
| १२ | १४ | परियहाः | परिग्रहा |
| १३ | २ | नियेषु | नित्येषु |
| १५ | २८ | श्रुत्यनुकुल | श्रुत्यनुकूल |
| १७ | २० | किचनुमान | किंचानुमान |
| ,, | २५ | देशभेदत् | देशभेदात् |
| १८ | १३ | व्यासादमः | व्यासादयः |
| ,, | ,, | अनयेक्षस्यान् | अनपेक्षः स्यात् |
| ,, | ,, | ह्मनुमान | ह्यनुमान |
| १८ | २६ | अनीन्द्रिय | अतीन्द्रिय |
| १६ | ६ | विश्रनीय | विश्वसनीय |
| २० | २६ | रूपकेनह | रूपकेणाह |
| २१ | ८ | शुन्यदे | शून्यदे |
| २२ | ५ | वाग्र् पः | वागूपः |
| २३ | ११ | शंकेत | संकेत |
| ,, | २५ | प्राप्नोति | प्राप्नोति |
| २४ | ३ | आमेति | आत्मेति |
| २८ | १७ | तस्यवंस्य | तस्यतस्य |
| ,, | १८ | शेषधमः | शेषधर्मः |
| ३३ | ३० | इन्दिय | इन्द्रिय |
| ३४ | ११ | अन्यस्च | अन्यस्व |
| ३५ | ६ | सम्पक्तपा | सम्यक्तया |
| ३६ | १० | स्योपल्यवो | स्योपप्लवो |

| | | | |
|---|---|---|---|
| ३६ | ३१ | व्यज्जका | व्यऽजका |
| ३७ | ४ | संतभसे | संतमसे |
| ३९ | ३ | मनुमृत्य | मनुस्मृत्य |
| ४० | १ | गेहातर | गेहान्तर |
| ,, | १७ | कदयः | कादयः |
| ,, | २५ | अभिधात | अभिघात |
| ,, | ,, | कादोनिति | कादीनिति |
| ४१ | १ | येषा तेषा | येषां तेषां |
| ,, | २ | कुम् कुम् | कुङ्कुम |
| ,, | १७ | मुखचन्दा | मुखचन्द्रा |
| ३३ | १२ | दुरगामो | दूरगामी |
| ,, | ,, | व्यक्ताः | व्यक्तैः |
| ४५ | २५ | स्वस्परूस्य | स्वस्यरूपस्य |
| ४५ | २७ | निसरण | निःसरण |
| ४६ | १६ | रित्या | रीत्या |
| ४७ | ६ | पतमत | एतन्मत |
| ४८ | ९ | सन्धेयम | सन्धेयम् |
| ४८ | ११ | वेदेध्य | वेदेभ्य |
| ,, | १७ | मृदुपाद्या | मृदुपादा |
| ,, | २३ | व्यपाश्रया | व्यपाश्रयाः |
| ,, | २६ | यावद्व्यव | यावत्द्व्यव्यव |
| ५० | ०९ | वत्तुतः | वस्तुतः |
| ,, | ०० | न्यश्यति | न्यत्पश्यति |
| ,, | ०० | व्रिनानी | विजानी |
| ५० | २५ | पदा | पादा |
| ५३ | ३ | रिसति | पिसति |
| ५४ | २७ | धृते | घृते |
| ,, | २९ | कंस्य | कंस्य |
| ५६ | २६ | घटा | घड़ा |
| ,, | २४ | माहि | मान्हि |

प्रमादस्या तिलघीयस्त्वेन सूक्ष्म दृष्टयाऽपि दर्शने शिष्यन्त एवाशुद्धयः किन्त्र यन्त्रालपा घातादि दोषाणां जागरूकता इत्यत इतः परं स्वयमपि संशोध्या मत्सरतां विहायेति प्रार्थयते।

सप्रश्रयप्रणतः



# श्राद्धकाशिकास्थ विषयाणां निर्घण्टपत्रम् ॥

इति श्री गौड़वंशावतंसेन घनश्याम शर्म्मणा मात्मजेन श्री प्रभुदत्तशर्म्मणा श्राद्ध कार्शिकायाः सूचन पत्रँव्विरच्यमुद्रितम् ।



# कात्यायन विरचितं श्राद्धसूत्रम्।

## काशिकाव्याख्यासंवलितम्।

प्रथमाकण्डिका।

श्रीगणेशाय नमः।

यस्य प्रसादपयसा क्रतुपादपास्तं कात्यायनं मुनिवरं शिरसाभिवन्दे॥ सिक्ता:फलन्ति यजुषामिह याजकानां स्वर्गोद्भवानि विविधानि फलान्यजस्रम्॥१॥कर्कोऽव्याख्यदिदं(१)गभीरवचनैःसूत्रं यतोस्मादभू दुर्बोधस्त ततोहलायुधइति व्याख्यातथाप्यस्फुटम्॥ भूयोपिप्रतिषेधकारिबचनैः स्मार्तैर्मयाकाशिका सूत्रस्योपरिसंशयौघतिमिरध्वंसाय तंतन्यते॥२॥ सूत्रार्थव्यञ्जनाद्वाक्यै र्विशेषोक्तिप्रकाशनात्॥ अस्यान्वर्थमिदंनाम ग्रन्थस्यश्राद्धकाशिका॥३॥ नित्यानन्दइतीहयाज्ञिकवरो जातस्तदीयःसुतः स्मार्त्ताग्नौविदितक्रियोतिसुख इत्याख्योजगत्यद्भुतः॥ तत्पुत्रोप्यभवत्स्मृतिज्ञचतुरः शास्त्रे ष्वधीतीश्रुतौ विष्णुर्मिश्रइमन्निबन्धमकरोत्कृष्णाःकृतीतत्सुतः॥४॥ तत्रपूर्वां पौर्णमासीमुत्तरांवोपवसेदित्यादिना श्रौतकर्माण्युपदिश्य अथातोगृह्यस्थालीपाकानामित्यादिना स्मार्तान्यथाख्यायावशिष्टम् श्राद्धकर्मवक्तव्यमिति सूत्रमारभते॥

### * अपरपक्षेश्राद्धङ्कुर्वीत॥१॥

॥ अपरपक्षः। कृष्णपक्षः चांद्रमासेशुक्लकृष्णपक्षयोः पूर्वापरत्वसंभवात्॥ श्राद्धमितिपिंडप्रदानंकर्म। कुर्वीतेतिविधा-

(१) गभीर इति खपुस्तक पाठः निम्न गभीरं गभीर मित्यमरोक्तेः

यत्कंपदं ननु त्रिपदमिदंसूत्रं तत्रपदत्रयैर्थ्यै कत्वमनुपपन्नं तथाहि प्रौष्ठपद्यामपरपक्षे मासिमासिचैवमिति शौनकः॥ अनेनविधिनाश्राद्धं त्रिरब्दस्येहनिर्वपेत् । हेमंतग्रीष्मवर्षासु पांच याज्ञियमन्वहमिति मनुः ॥ कन्याकुम्भवृषस्थेर्के कृष्णपक्षेषु सर्वदेति मात्स्यं । यत्तु वचनेसर्वापरपक्षेषु कर्त्तव्यतोपदेशात् ॥ तथाश्वयुक्कृष्णपक्षेतु श्राद्धं कुर्याद्दिनेदिनइतिवचनात् प्रतिदिनकर्तव्यतया श्राद्धानीतिवक्तुमुचितत्त्वात् । ब्राह्मणादि चातुर्वर्ण्यापिच्छया कुर्वीरन्निति वक्तुमौचित्याच्चेति अतस्त्वापरपक्षेषु श्राद्धानिकुर्वीरन्नितिसूत्रम्प्रणेतव्यम् अत्रोच्यते अपरपक्षेष्वितिबहुत्वमुपपन्नमितियदुक्तं तन्न तथासति सर्वसामान्येनास्यापरपक्षस्यवैशिष्ट्यानुपपत्तेः। तथाच पुराणसमुच्चये। पक्षैः शुक्लपदैःषण्णां षट्पक्षा अपरेस्मृताः । तेषां पुण्यतमःपक्षः आषाढ्याःपंचमस्तुयइत्यादि । यदपि श्राद्धानीतिवक्तुमुचितमिति तन्न तथासत्यैकोद्दिष्ट पार्वण नित्यश्राद्धादीनि प्राप्नुयुस्तन्माभूदिति पार्वणरूपत्वेनै क्यमुक्तम् ॥ तथाचोक्तम् । कन्यागते सवितरि दिनानि दश पंचच ॥ पार्वणेनैवविधिना तत्रश्राद्धंविधीयतइति नन्वेतदैक्ये पार्वणत्वे चतुर्दश्यादौपार्वणादिनिषेधस्य कागतिरितिचेन्न तस्यश्राद्ध पक्षव्यतिरिक्तश्राद्धेषु त्रिभागादिपक्षविभागेषु चतुर्दश्यांपार्वण निषेधस्यपर्यवसानात् मनुरपि कृष्णपक्षेदशम्यादौ वर्जयित्वाचतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयो यथैतानतथेतराः । पक्षश्राद्धे तु कृष्णाजिनिः नभस्यस्यापरेपक्षे श्राद्धंकार्यंदिनेदिने नैवनन्दादिवर्जंस्या न्नैववर्ज्या चतुर्दशीति यदपि चातुर्वर्ण्यापिच्छयाकुर्वीरन्निति तदपिन तथासत्यकृतानधिकृतानामधिकारःस्यात्तन्माभूदितिकुर्वीतेत्यधि कारि

विशेषणेनैक्यमुक्तम्। ततश्च सर्वापरपक्षेषु हेमन्तग्रीष्मवर्षापरपक्षास्तेषु कन्याकुम्भदृषस्थेर्कोचय: तत्रापिभाद्रपदापरपक्ष: पुण्यतम: कालस्तत्रपार्वणमधिकारीकुर्यादितिसिद्धम्। एवंसतिकालान्तरानुपदेशादमावास्यादौ श्राद्धन्नस्यादितिचेत्। अपरपक्षशब्दस्योपलक्षणतया तत्संग्रहोपपत्ते:। नन्वेवमपिकृष्णपक्षइतिवाच्येऽपरपक्षइतिगौरवंकिमर्थम्॥ पित्र्यकर्मणिप्रतिज्ञादौ चान्द्रमसोच्चारणज्ञापनार्थमित्यदोष: तथाचोक्तं। आब्दिकेपितृकृत्येच मासश्चान्द्र:प्रशस्यते। तथा सौरमासोविवाहादौ यज्ञादौसावन:स्मृत:। पार्वणेचाष्टकाश्राद्धे चान्द्रोमासोमहालयइति। बृहस्पतिरपि रवेरभ्युदयेमानं चन्द्रस्यपितृकर्मणि। तथा तथैवपितृकृत्यादौ मासश्चान्द्रमस:स्मृत:। अपिच विवाहादौस्मृत:सौरो यज्ञादौसावन: स्मृत: शेषकर्मसु चान्द्र:स्यादेषमासविधि:स्मृतइति। अत्रैतच्चिन्त्यते। किम्पक्षश्राद्धं नित्यं काम्यंवेति। तत्रकाम्यमित्येके। नाश्नन्ति पितरश्चेति कृत्वामनसियोनर:। पक्षश्राद्धं नकुरुते तस्यरक्तम्पिबंतिते इत्यकरणेप्रत्यवायश्रवणात्। शाकेनापि नापरपक्षमतिक्रामेदितिसूत्राच्च नित्यमित्यन्ये। नोभयं। पितृगाथा सदैवात्र गीयते ब्रह्मवादिभि:॥ कदान:संततावग्र्य: सकश्चिज्जवितासुत:। पितृपक्षे सदाश्राद्धं पूर्णपक्षं प्रदास्यतीत्यादिना तम्प्रतीक्षामहेसर्वे सुवृष्टिमिवकर्षका:। काम्यदायीभवेत्कश्चित्कुलेस्मच्छ्राद्धदोनरइत्यादिना काम्यत्वस्यचप्रतीते:। तस्मादुभयरूपत्वंयुक्तम्। तत्रनित्यकाम्ययो: सङ्कटेकाम्यस्यवलवत्वान्नित्यप्रसङ्गात्सिध्यतीति न्यायाच्च काम्यानुष्ठानेनैव नित्यस्यापिसिद्धि:। तथाचसङ्ग्रहकृत्। काम्यं तच्चेणनित्यस्यतन्त्रंश्राद्ध-

मत्र सिध्यतीति। एवंच सतिकाम्ये सर्वांगोपसंहारनियमाद्भर णी मघा युगादि रविवारादि निषिद्धकालेपि पिण्डदानं महालयेभवतीति तथाचपाद्मे। वारेपातेचसंक्रांतौयुगादौचमहालये तर्पणेपिंडदानेच तीर्थेदोषोनविद्यते तर्पणेतिलानांच ब्रह्माण्डेपि ऋक्षयोगादिविद्धेपि तद्दिने पिण्डपातनं प्रचेताअपि। आभ्युदयिके संप्राप्ते मघावापित्रयोदशी॥ क्षयाहेचापिसंप्राप्ते पिण्डनिर्वपणंस्मृतं वृद्धमनुरपि महालये चतुर्दश्यां मघायां पुत्रवानपि पिण्डनिर्वपणं कुर्याद्यस्यशस्त्रहतःपिता कृष्णपक्षेचतुर्दश्यां मघायुक्तं दिनंयदि पिण्डनिर्वपणंकुर्यात् तृप्त्यर्थं शस्त्रघातिनः। अपिच तीर्थेसांवत्सरेश्राद्धे पितृपक्षे महालये पिण्डदानंप्रकुर्वंतियुगादिभरणीमघे॥ तथा महालयेक्षयाहेच दर्शेपुत्रस्यजन्मनि तीर्थेषु निर्वपेत् पिण्डान् रविवारादिकेष्वपीति नन्वेवं भरणी मघायुगादि रविवारादिषु पिण्डनिषेधकानि अयने विषुवेचैव मघायांच युगादिषु श्राद्धंकुर्वीतयत्नेनपिण्डनिर्वपणंविना मघायुगादौ भरण्यामयने विषुवेतथा पिण्डदानन्नकुर्वीत यदीच्छेत्सुतजीवितं याम्यंवापैतृकंवापि पितृपक्षेविशेषतः। तत्रसंकल्पनंकुर्यात् पितृणांपुष्टिदःसदा मन्वादिश्च युगादिश्च मघाचभरणीतथा श्राद्धंतत्रप्रकुर्वीत पिंडनिर्वपणंविना तथामघाभरण्योश्च त्रयोदश्यांविशेषतः प्रौष्ठपदस्यद्वादश्यां मघार्क्षंनिपतेत् यदि। तत्रसंकल्पनं श्राद्धंपिंडनिर्वापवर्जितं। मघायुगादौभरण्याम् संक्रांतौ रविवासरे॥ पिण्डदानम् प्रकुर्वीत यदीच्छेज्जीवितान्सुतान् सुतश्च मघायां पिण्डदानेन ज्येष्ठपुत्रोविनश्यति कनीयांस्तु त्रयोदश्याम् क्षयाहेभ्यु दयादृते। मघायुगादौभरण्यां

श्राद्धं कुर्यादतन्द्रितः पिण्डदानन्नकुर्वीत तच्चसप्तम्यवासरे॥ वैशाखस्यतृतीयायां नवम्यांकार्त्तिकस्यच श्राद्धं संक्रांतिवत्कुर्यात् पिंडनिर्वपणम्विना। युगादौपितृनक्षत्रे तथाम न्वन्तरादिषु। अर्घपिंडन्नकुर्वीत वैशाखंश्राद्धमाचरेदित्यादीनि वाक्यान्यनर्थकानि स्युरितिचेत्सत्यं एतानिवाक्यानि तिथिवारनक्षत्रसंक्राति युगादिनिमित्तक्रियमाणेषु काम्यश्राद्धेषुपिण्डदानंनिषेधन्ति। नपुनः पक्षश्राद्धतिथ्याश्रयादिनिमित्तश्राद्धेष्वित्यविरोधः। अन्यथावारेपातेच सङ्क्रान्तावित्यादिभिर्विरोधात् (१) अथ पार्वणेनैवविधिनेत्युक्तं॥ तत्रैकम्पार्वणं किंवाद्विपार्वणम् उतचतुःपार्वणञ्चेति पक्षश्राद्धे त्रिपार्वणैकोद्दिष्टयोरप्राप्तत्वात् सर्वत्रापिपार्वणधर्मत्वात्त्रयाणांविहितत्वाच्चेति। तथाह्येकपार्वणे मात्स्यं। ततः प्रभृतिसंक्रातावुपरागादिकर्मसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टंमृतेऽहनि। प्रजापतिरपि। संक्रांतावुपरागेच वर्षोत्सवमहालये निर्वपेत् पिण्डत्रितयमितिप्राहप्रजापतिरिति। द्विपार्वणेतु कात्यायनः कर्षूसमन्वितंभुक्त्वा तथाद्यंश्राद्धषोडशं प्रत्याब्दिकंविशेषेषु पिण्डाःस्युःषडितिस्थितिरिति। चतुः पार्वणेतु कात्यायनः। कुर्याद्दादशदैवत्यम् प्रेतपक्षेतु सर्वदा। यथातीर्थेगयायाञ्चएषधर्मः सनातनः। आदौपितातततोमातातततोमातामहस्तथा। मातामह्यस्ततोदद्यात्प्रेतपक्षेतुसर्वदा॥ सुमंतुः। पितृभ्यःप्रथमन्दद्यान्मातृभ्य-

(१) किंश्राद्धं साग्निकस्यैवाधिकारःउतनिरग्निकस्यापीत्यत्रकर्काचार्येणनिर्णीतंअग्नौकरणरूपस्यांगस्याग्न्यधिकरणत्वातदुपसंहारेशाग्निकस्यैवशक्तिर्नैतरस्य नपैतृयज्ञियोहोमौलौकिकेग्नौविधीयतइतिनिषेधात् ततचदारसंग्रहपूर्वकंकर्मावसथ्याधानंतत्पूर्विकाञ्चकर्मान्तरेप्रवृत्तिरित्यतोपिनानग्निमतोधिकारइतियतूक्तं अग्न्यभावेतुविप्रस्यपाणःवेवोपपादयेदिति तदप्यकृतावसथ्याभ्युदयिकविषयं अनग्निमतोपिश्राद्धे धि-

स्तदनन्तरम् ॥ ततोमातामहेभ्यश्चतत्पत्नीभ्यस्तथैवच ॥ गया-याञ्चतथातीर्थेप्रेतपक्षेविशेषतः । कुर्याद्दादशदैवत्यमेकोद्दिष्टमतः परं । एवंचनविप्रतिपत्तावुच्यते । तत्रैकपार्वणचतुःपार्वणयोर्यथाक्रममाहनवमीविषयत्वेनपरिशेष्या द्विपार्वणमेवपक्षश्राद्धेष्ववतिष्ठते । तथाच वृद्धयाज्ञवल्क्यः । पितापितामहश्चैवतथैवप्रपितामहः ॥ समीहन्तेसुतान्सर्वे मातृपक्षेविशेषतः ॥ भुंजन्तिविप्रकायेषुपितरोन्तर्हिताःसदा ॥ तस्माद्विप्रान्पितॄन्विद्यात्पितृवत्ताःप्रपूजयेत् । द्विपार्वणम्प्रकर्त्तव्यंविनाश्राद्धंक्षयेहनि । पितरोयत्रपूज्यन्तेतत्रमातामहादयः ॥ अविशेषेणकर्त्तव्यं विशेषान्नरकम्ब्रजेदितिवृद्धवृद्धवचनात् । व्यासोपि ॥ पितृमातामहाश्चैव द्विजश्राद्धे नतर्पयेदिति । पुलस्त्यः। मातुःपितरमारभ्य त्रयोमातामहाःस्मृताः । तेषांतु पितृवच्छ्राद्धंकुर्युर्दुहितृसूनवइति । स्कान्दे। पार्वणङ्कुरुते यस्तुकेवलम् पितृहेतुतः । मातामह्यन्नकुरुते पितृहासोपिजायत इति। सूत्रकारोपि । त्रींस्त्रीन्पिण्डानिति । एकचतुःपार्वणे क्षयाहनवमीविषये । तथाचपाराशरः ।। पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्वत्रानेकगोत्राणा मेकस्यैवम्मृतेहनि ॥ नवम्यान्तु वृद्धयाज्ञवल्क्यः । गयायां पुष्करेचैवतथैवान्वष्टकासुच ॥ पितृमुख्ये नकर्त्तव्यम् पार्वणानाञ्च-

कारइत्येवं विधाप्रसिद्धिस्तुइहवटेयच्चो वसतोतिवदननिश्चितेतिनानग्निमतः श्राद्धाधिकारेप्रमाणमिति तदिदमनुपपन्नं नित्यनैमित्तिकेषुहि यथाशक्त्यात्तथाकुर्यादितिन्यायात्सर्वांगोपहारा शक्तस्याप्यधिकारात् अग्न्यभावेतुपाणौहोमविधानात् अस्यविधानस्यचोक्तविषयविशेषव्यवस्थायाः प्रमाणशून्यत्वात् संतिचाग्नौकरणरहितानिश्राद्धानितैर्व्वधिकारानिवृत्तेश्च स्त्रीशूद्रानुपनीतानामपिश्राद्धोपदेशात्साग्निकानग्निकोभयाधिकारेणविहितंश्राद्धमितिसिद्धम् ॥

तुष्टयमिति । नन्वेवमन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ।। पित्रादि मातृमध्यन्तु त्ततोमातामहान्तकमित्यादि वचनविहितम् नवदैवत्यम्विरुध्येत । नैवं । अन्वष्टकास्विति बहुत्वस्यत्रित्वेपर्यवसानात् साग्निकर्त्तृकन्नवदैवत्यमन्वष्टकात्रये तद्वचनम्बिहितुमर्हति नापरपक्षनवमीविषयम् । अतोद्वादशदैवत्यमपरपक्षनवमीविषयमितिसिद्धम् ।। अन्यथा नवदैवत्ये मातृणां पृथक्त्वेन मातामह्यादीनामपृथक्त्वे नार्द्धजरतीयापत्तेः । तथाच पुराणसमुच्चये । सर्वासामेवमातॄणां श्राद्धं कन्यागते रवौ ।। नवम्याञ्चप्रदातव्यम् ब्रह्मलब्धवरायतः । पितृमातृकुलेनार्यो याःकाश्चित्प्रमृतास्त्रियः ।। श्राद्धार्हा मातरो ज्ञेया स्तासांश्राद्धम् प्रदापयेत् । वृद्धौतुमातृपूर्वं हि श्राद्धङ्कुर्वीत बुद्धिमान् । अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत् ।। तामिस्रपक्षे नवमी यापुण्यातुनभस्यके । चत्वारःपार्वणाःकार्याः पितृपूर्वामनीषिभिः ।। पितृणांतु त्रयः पिण्डा मातृपूर्वास्तथात्रयः । मातामहानामप्येवं त्रयोमातामहीषुच । एवंकुर्वन् ततः श्राद्धम् मातृणाञ्चनदोषभाक् ।। भवत्येवनरोविप्रा इति ब्रह्मानुशासनमिति । कात्यायनोपि । नवानांनवकंवृद्धौ तथैवान्वष्टकेविदुः ।। कुर्याद्द्वादशदेवत्यम् प्रेतेतीर्थेगयासुच । तथा उपप्लवेचन्द्रमसोरवे र्वृद्धौगयायां गमनागमेषु । अन्वष्टकायांच महोत्सवेषु श्राद्धंक्रियाद्वादशदैवतास्यात् ।। वृद्धयाज्ञवल्क्योपि ।। गयायांच कुरुक्षेत्रे राहुग्रस्तेदिवाकरे ।। कुर्याद्द्वादशदैवत्यं पार्वणानां चतुष्टयमिति । ननु दिनानिदशपञ्चचेत्यत्र तिथिषोडशकंप्रतिविरोधः । तथाच शाटायनः । नभस्यस्यापरेपक्षे तिथिषोडशकन्तुयत्।कन्यागतान्वि

तं चेत्स्या त्सकालःपितृकर्मसु। ब्रह्माण्डेपि। कन्यागते सवितरि यान्यहानितु षोडश। क्रतुभिस्तानितुल्यानि तेषुदत्तमथाक्षयं। कन्यागतएकदेशेपि। तथाच कार्ष्णाजिनिः। आदौमध्येवसानेवा यत्रकन्यांव्रजेद्रविः॥ सपक्षःसकलः पूज्यो श्राद्धषोडशकंप्रतीति- चेत्। उच्यते। द्वादशकपालेऽष्टाकपालवत्। षोडशदिनेषु पंच- दशदिनानुवाद इत्यविरोधः। श्राद्धषोडशकेतु सन्देहः। तत्रैके शुक्लप्रतिपदोसह तिथिषोडशकमाहुः। तथाच देवलः। अहः षोडशकं यत्तु शुक्लप्रतिपदासह। चन्द्रक्षयाविशेषेण सापिद र्शात्मिकास्मृतेति। तन्न शुक्लप्रतिपदो दौहित्रकर्तृक मातामह श्राद्धविषयत्वात्। तथाच मातॄणांनवमीयद्वद्वतानांच च- तुर्दशी तद्वन्मातामहानांच शुक्लेथप्रतिपन्मतेति। अन्ये तु ति- थिवृद्धिविषयं। श्राद्धषोडशकमिति। तदपिन तथासति वृद्धिक्षयोः पंचदश सप्तदश श्राद्धसंभवा त्षोडशकविधिवाधा- पत्तेः। तथाचैवंपठन्ति। तिथयःपंचदशस्युः प्रेतपक्षेतुषोडश। अनुमत्यादिकंकुर्यात् पितृणां दत्तमक्षयं॥ नातः पञ्चद- शेकुर्यान् नातः सप्तदशेतथा। ऊनेतु नरकं यान्ति ह्यधि केसग्राद्धनक्षय इति। तस्माद्वृद्धिक्षयोर भावे षोडशश्राद्धवि- धिरितिचेत्। तथासति श्राद्धषोडकस्य कदाचित्कर्त्तृत्वेन नित्यत्वानुपपत्तेः। अतः प्रौष्ठपदीमारभ्य वृद्धौप्रतिपदमभि व्याप्य द्वयोर्वहिःकृत्य श्राद्धषोडशकं कर्त्तव्यमितिव्यवस्था युक्ता। एवंतर्हि प्रतिपदो दौहित्रविषयत्वमित्युक्ति विरुध्येत। तत्र वृद्धिविषयत्वात् तयाषोडशपूरणोपपत्तेः यद्वा एकाहे तिथि द्वयसंबन्धे श्राद्धद्वयकरणा त्षोडशपूरणम्। ततस्तोभयथा पि प्रौष्ठपद्यामारभ्यः। तथाचसूतः॥ पूर्णिमाप्रभृति श्राद्धम्

न्तस्मा त्कुर्याद्विचक्षणः। दिनेदिने यज्ञफलं लभते श्राद्धदोनरः॥ ब्रह्मांडेपि॥ श्राद्धञ्च पूर्णि मायांचकृत्वापूर्ण फलं लभेत्। प्रतिपदा-र्थलाभाय द्वितीयार्थायचापरे॥ पुराणसमुच्चयेपि। प्रशस्ता पौ-र्णिमा मुख्या स्तिथयः षोडशैवताः। यथातिलानांतैलञ्च तुल्यंवै प्रतेतक्कषायोः। पौर्णिमाया ममायाञ्च सममपुण्यफलंद्वयोः। पूर्ण पक्षे नभस्यस्यतिथिः पूर्णाप्रशस्यते। अस्यांदत्ते पितॄणांवै तृप्तिः सांवत्सरीभवेत्। अमायांश्राद्ध कृच्चैव सर्वान्‌कामानवाप्नु-यात्। पूर्वापराह्णयोः रक्तेयः श्राद्धं कुरुतेनरः। नभस्यस्यद्विजश्रे-ष्ठाः पितरस्तेनपूजिताः। पौर्वाह्णिकी पौर्ण मासीह्यमाचैवापरा-ह्णिकीति। वृद्धयाज्ञ वल्क्योपि। कामिकन्तिथिकर्त्तव्यं श्राद्धक-र्मद्विजादिभिः। पूर्णि माश्राद्धदानेन सम्पूर्ण फलमश्नुते। कुर्वन्वै प्रतिपच्छ्राद्ध म्धनमाप्नोसमश्नुते। इत्यादिषोडशकम्। वायुपुरा णेपि। पुष्टि म्प्रजां स्मृतिंमेधामित्याद्यु पक्रम्य पौर्ण मासप्रा द्यमा वास्यांतं तिथिषोडशकमुक्तमित्यलं। ननु श्राद्धम् पिंडप्रदानं क-र्मेति कथमुक्तं स्मृतिष्वनेकधाश्राद्धशब्दप्रयोगात् तथाहि। श्राद्ध-भुगष्टवर्जयेत्। श्राद्धभुक् प्रातरुत्थाय यपिस्नात् सकलिजत्तु भोज-येद्यस्तुयोगिन इत्यादिनाभोजने। श्रद्धास्ति यस्मिंस्तच्छ्राद्धम्। प्रज्ञा-श्रद्धार्चा वृत्तिभ्योणः। श्रद्धयादीयते यस्माच्छ्राद्धन्तेन निगद्यतइति पाणिन्यादिवचनाच्छ्रद्धायोगे। कौस्तीभ्पिएडानवनेज्यदद्यात्। नन्दायांभार्गवदिने त्रयोदश्यां त्रिजन्मनि तेषुश्राद्धं नकुर्वीते त्यादि वचना त्पिण्डदानेवा। अथैतन्मनुः श्राद्धशब्दः कर्मप्रोवा वाचेत्यादिनाकर्मणि। एवंविप्रतिपत्तौ पिण्डदानस्य प्राधा न्यात्तद्दानेशन्तनोर्हस्तोत्थानाच्च गयादौ पिंडदानंश्राद्धम्। ब्राह्मणपरीक्षायत्नादपाङ्क्तेय भोजने दोषश्रवणात् पिण्डरा

हित्येपि श्राद्धसम्भवाच्च युगादौब्राह्मणभोजनमेवश्राद्धं दर्शा दौतूभयसमुच्चयःश्राद्धमित्येके तदन्येनचमंते । अव्याप्त्यादि दोषपराहतेः श्रद्धयादीयत इत्यादावव्यापकत्वाच्च । तदपिन । तथासति हैतुकत्वसंभवे कल्पनागौरवकल्पेः । अथैतन्मनुः । श्राद्धरूदकर्मेतिस्मृतिवैयर्थ्यं । तथाचोक्तं । पुराणंमानवोधर्मः सांगोवेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि नहंतव्यानिहेतुभिरिति । तस्मात्सर्वत्रकर्मत्वाविशेषा दाम्नायभेदेन कर्मव्यवस्थायुक्ता । तथाच धर्मप्रदीपे यजुषां पिण्डदानन्तु वह्वृचांद्विजतर्पणम्। श्राद्धशब्दाभिधेयंस्यादुभयंसाम वेदिनामिति। आपस्तंबोपि । श्राद्धशब्दः कर्मप्रोवाच पितरो देवता ब्राह्मणस्त्वाहवनीयार्थमिति । देवतोद्देशेनयथाहवनीयेहोमस्तथापित्रुद्देशेन ब्राह्मणे दत्तंश्राद्धमित्यर्थः । ततश्च कर्मैवोपपन्नमिति । तथाच ब्रह्माण्डे । देशेकालेचपात्रेच श्रद्धयाविधानाचयत् । पितॄनुद्दिश्य विप्रेभ्योदत्तं श्राद्धमुदाहृतमिति । मरीचिरपि । प्रेतंपितॄंश्च उद्दिश्य भोज्यं यत्प्रियमात्मनः। श्रद्धया दीयते यच्च तच्छ्राद्धं संप्रकीर्त्तितमिति। वृद्धयाज्ञवल्क्योपि। पात्रं पत्नी विधिः श्रद्धा देशः कालः क्षमा दया । एतद्वेवोच्यतेश्राद्धं हविः कर्तृसमन्वितमिति । यद्वैकत्र पारिभाषिक मितरत्रौपचारिकम्। तथाच श्रीधर पद्धतौ। होमश्च पिंडदानंच तथाब्राह्मणभोजनम् । श्राद्धशब्दाभिधानंस्या देकस्मिन्नौपचारिकम्। प्रयोगोदृश्यतेलोके नियमस्त्त्रयेसतीति । प्राधान्यप्रयोजनं यदकरणेभ्यावृत्तिः । प्रधानस्याक्रियायत्र सांगंतत्क्रियते पुनरितिवचनात्। यदुक्तं प्रतिपदि दौहित्तृकर्तृकश्राद्धविषयत्वमिति । तत्रकिंजीवत्पि-

तृको दौहित्रः उतमृतपितृकइति उभयथाप्रतिक्रमः। तथाच। जातमात्रस्तुदौहित्रो विद्यमानेपि मातुले। कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते। नन्वेवं त्रिपिण्डं षट्पिण्डं वा उच्यते। पित्रादित्रिके जीवति त्रिपिण्डं मृतेतूत्तरमिति। तथाचकात्यायनः। मातामहानांदातव्यं प्रतिपद्येवमुख्यकं। त्रिकंहित्वाप्रयत्नेन श्राद्धं कुर्यात्सपिंडकम्। गौतमोपि। मातृपक्षे मृतानाञ्च देयंभक्त्या तु मुख्यकम्। सर्वेषां पावनं कुर्यात् यथाशक्त्यातु पिंडदः। जातमात्रस्तु दौहित्रो विद्यमानेषु पार्वणम्। कुर्यान्मातामहश्राद्धं प्रतिपदेत्रवसर्व देति। मृतपित्रादि त्रिकेतु गोभिलः। मातामहानां प्रतिपद्दौहित्रः स्वयमाचरेत्। तत्रपित्रे स्वयन्देयं विशेषात्प्रीतिरिष्यते। प्रतिपत्प्रतिपच्छ्राद्धं पित्रइति पितामहाद्युपलक्षणम्। प्रत्यक्षपितरन्त्यक्त्वा ह्यन्यथातु ददातियः। सयाति नरकं घोरं यावद्भूसागरानगा इति। मृते पित्रादित्रिके पितृपङ्क्तिपरित्यागेन। प्रत्यवायजनकत्वात्। पञ्चमीपर्यन्तं श्राद्धकालत्वाच्च। तथाच यमः। हंसे वर्षासुकन्यस्थे शाकेनापि गृहेवसन्। पञ्चम्योरन्तरेदद्या दुभयोरपिपक्षयोः॥ एकादशी चतुर्दश्यादि तिथिश्राद्धानि क्षयाहश्राद्धानितूत्तरत्रप्रपञ्चयिष्यन्ते। इहत्वपरपक्षादि प्रपञ्चेनालम्। एवंपक्षश्राद्धमुक्त्वा पक्षान्तरमाह॥

## * ऊर्ध्वं वा चतुर्थ्याः॥ २॥

वाशब्दउत्तरोत्तरप्राशस्त्यं सूचयन्स्मृत्यन्तरोक्तपक्षा न्द्योतयति। ततश्च शक्ततमेन शक्ततरेणशक्तेनचपूर्णिमांपञ्चमीमष्टमी मेकादशीमारभ्य शेषदिनेषु यथाक्रमं शक्त्याश्राद्धं कर्तव्यमित्यर्थः। तथाच ब्राह्मे। अश्वयुक्कृष्णपक्षेतु श्राद्धङ्कुर्याद्दिने दिने॥ वि-

भागहीनम्पक्षंवा त्रिभागं त्वर्धमेववा विष्णुधर्मोत्तरेपि। उत्तरायनाच्छ्राद्धे श्रेष्ठंस्याद्दक्षिणायनम् । चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवेधिकम् । प्रौष्ठपद्यापरपक्ष स्तत्रादिचविशेषतः । तच्चैवंपक्षमूर्ध्वं ततोप्यतीत्याष्टमूर्ध्वं ततोप्यतीत्यैकादशीमारभ्य श्राद्धं विदधता वाक्येन । कृष्णपक्षे दशम्यादि वर्जयित्वा चतुर्दशीमिति । दशमीप्रभृतिश्राद्धविधायकं मनुवाक्यम् विरुध्येत । पितुः शवहतत्वे दशमीप्रभृतित्रिभागत्वं पक्षस्येतरस्यैकादशीप्रभृतीत्यविरोधः । अतएव प्रतिपत्प्रभृतिष्वेकांवर्जयित्वा चतुर्दशीमिति चतुर्दश्यांपार्वणनिषेधस्य त्रिभागादिपक्षेष्वेवपर्यवसानमित्युक्तम् । तिथिविषये पक्षान्तरमाह ।

## * यदहःसम्पद्येत तदहर्ब्राह्मणानामन्त्र्यपूर्वेद्युर्वा ॥ ३ ॥

यदहरिति विभक्त्यर्थेव्ययीभावे । नपुंसकादन्यतरस्यामितिटज्भावः । क्षत्रियादिप्रतिषेधार्थम् ब्राह्मणानिति । पूर्वेद्युरिति निपातः । ततश्च यद्दिने मृताहसंज्ञकतिथिरपरपक्षे स्यात्तदहे पूर्वाह्णेवा ब्राह्मणानामन्त्र्य श्राद्धंकुर्यादितिशेषः । पूर्वेद्युरसम्भवे तदहर्निमन्त्रयेदितिवाशब्दार्थः । तथाचकूर्मे श्वोभविष्यतिमेश्राद्धम्पूर्वेद्युरभिपूजयेत् । असम्भवे परेद्युर्वा यथोक्तं लक्षणैर्युतान् । देवलोपि । श्वःकर्त्तास्मीति निश्चित्य दाताविप्रान्निमन्त्रयेत् । असम्भवेपरेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेदिति । अथवा वाशब्दो व्यवस्थायां । योषित्प्रसङ्गिनः पूर्वेद्युरितरांस्तदह इत्यर्थः । तथाच मार्कंडेयः । निमन्त्रयेतपूर्वेद्युः पूर्वोक्तांस्तुद्विजोत्तमान् ।

अप्राप्तौ तद्दिने वापि हित्वायोषित्प्रसङ्गिनं । कात्यायनोपि। नविना ब्रह्मचर्येण ब्राह्मणः श्राद्धमर्हति। ब्रह्मचारी यतिश्चैव तद्दिनेच निमन्त्रयेदिति । दिनद्वयेपि निमन्त्रयेदिति समुच्चयार्थोवा। तथाचवृद्धयाज्ञवल्क्यः । चरणक्षालनादूर्ध्वं पुनर्विप्रनिमन्त्रणम्। आसनार्चनसंयुक्तम मर्घञ्च प्रतिपादयेत इति। अन्येके । यदहः सम्पद्येतेति सम्पत्त्यर्थवाचकत्वाद्यदह र्यथोक्तद्विजद्रव्यादि लाभस्तदह एवश्राद्धं नतुमृताहमिति । तन्न। तस्यालाभयोगत्वेनानिश्चयत्वात् मृताहोवाचनिकत्वात् सदाचरितत्वाच्च। नच संयतः पुरुषप्रयत्नसाध्यत्वादन्यपरत्वस्या । तस्मान्मृताह एवसर्वं सम्पाद्य श्राद्धंकर्तव्यमित्युक्तं । अतएवगोभिलसूत्रे यदहउपपद्येतेतीत्युपपन्नार्थमुक्तं । तथाच पुराणसमुच्चये । यातिथिर्यस्य मासस्य मृताहेतु प्रवर्त्तते । सातिथिः प्रेतपक्षस्य पूजनीयाप्रयत्नतः । तिथिच्छेदोनकर्त्तव्यो विनाशौचं यदृच्छया। पिंडश्राद्धञ्च दातव्यंयत्किञ्चित्तन्नैवकारयेदिति मृताहविषयस्यापि ऋष्यशृङ्गवचनस्यात्रापि सदाचारेणसङ्कुतत्वात्तिथिविषयत्वमप्यविरुद्धं । एतच्च पुत्रभ्रातृपत्न्यादि व्यतिरिक्तविषयं। तेषा मेकादशी द्वादश्योः श्राद्धविधानात्। तथाच वायुपुराणे संन्यासिनोप्याब्दिकादि पुत्रं कुर्याद्यथातिथिः। महालयेतु यच्छ्राद्धं द्वादश्यां पार्वणेनत्विति। पिण्डश्राद्धंच दातव्यमिति निषिद्धदिनेपीत्यर्थः तथाचकात्यायनः। अशक्तः पक्षमध्येतु करोत्येकदिनेयदि। निषिद्धेपि दिने कुर्या त्पिण्डदानं यथाविधिरिति। नन्वेवं पौर्णमास्यां मृतस्य कुत्रतिथाविति। तत्रामावास्यायामित्येके। तन्न । तिथ्याश्रयाभावात् ॥ दर्शमृतस्यैव तत्रोचितत्वाच्च। अतोभाद्रपद्यामेवयुक्तं तथाच वृद्धया-

ज्ञवल्क्यः । पूर्णिमायाममायांवा सदाकन्यागतेरवौ । एकोद्दिष्टं तु मातुःस्या त्पितुःपार्वणमुच्यते । नान्यकाले प्रशंसंति त्रयेहनितु पार्वणमिति पूर्णिमादर्शयोर्मृतस्य कन्यागतेरवौ तयोः । त्रयाहसंज्ञकतिथित्वात् प्रौष्ठपदग्रामपरपक्षेच दर्शेच पार्वणंकर्त्तव्यमित्यर्थः । तथाच प्रौष्ठपद्याममायांच कन्याप्राप्ते रवौसदा । सर्वस्वेनापि कर्त्तव्यं श्राद्धंवा इन्दुलोचनइति । एकोद्दिष्टन्तु मातुःस्यादित्यैव मुपरिष्टाद्वच्यामइत्युक्तम् । अत्रकेचिद्दैवपूर्वं निमंत्रयेदिति । तन्न । पितृपूर्वस्यविहितत्वात् । (१) तथाच देवलः । श्वःकर्त्तास्मीत्ति निश्चित्य दाताविप्रान्निमंत्रयेत् । कृतापसव्यं पूर्वेद्युः पितृपूर्वंनिमंत्रयेत् । प्रचेताअपि । कृतापसव्यः पूर्वेद्युः पितृपूर्वंनिमंत्रयेदिति स्मृत्यन्तरेपि प्रार्थयीतप्रदोषांते भुक्तानशयितान्द्विजान् । अयुग्मानपसव्येन पितृपूर्वंनिमंत्रयेदिति यत्तु बृहस्पतिवचनं । उपवीतीततोभूत्वा देवतार्थं द्विजोत्तमान् । अपसव्येनपित्र्ये च स्वयंशिष्योथवासुत इति । तत्पूर्वं पश्चाद्भावयोरश्रवणादस्मिन्नेव क्रमेयोज्यमित्यविरोधः । एतच्च पूर्वेद्युर्निमंत्रणं गृहलेपाद्युपलक्षणं । तथाच वाराहे । वस्त्रशौचादि कर्त्तव्यं श्वःकर्त्तास्मीतिजानता । स्थानोपलेपनंभूमेः कृत्वाविप्रान्निमंत्रयेदित्यादि । एवं निमंत्र्य ब्राह्मणानाह ॥

## * स्नातकान् ॥ ४ ॥

स्नातकास्त्रिविधास्तान्निमंत्रये दितिशेषः । तथाचयमः । विद्याव्रतोभयस्नातो ब्राह्मणःपंक्तिपावनइति । अयंचापत्नीकनिमंत्रणप्रतिषेधप्रसंगः विभार्योवृषलीपतिरित्यत्रिणानिषेधात् ।

## * एकैयतीन् ॥ ५ ॥

निमंत्रयेयुः नकात्यायनादयइतिविकल्पः ॥ तथाच वायवीये ।

(१) वस्तुतस्तु पितृपूर्वंनिमन्त्रणन्त्वन्यशाखाविषयम् दैवपूर्वं छं० श्राद्धमिति वक्ष्यमाणत्वात् ॥

गृहस्थानांसहस्रेण वानप्रस्थशतेनच। ब्रह्मचारीसहस्रेण एकोयोगीविशिष्यते। विष्णुरपि। अपिनःस्वकुलेजायाद्योजयेदास्तुयोगिनः। विप्राञ्छ्राद्धे प्रयत्नेन तेनतृप्यामहेवयमिति। इतरेकात्यायनादयोनेत्याहुः। तथाच गृह्यसंग्रहः॥ आचार्यानुमतंवाक्यमेकीयंगृह्यतेक्वचित्। शेषाण्येकीयवाक्यानि आचार्योनप्रशंसति। वसिष्ठोपि। श्रुतिस्मृतौअतिक्रम्य यंसमश्नातिमूढधीः। नतंतु। ब्राह्मणंप्राज्ञः श्राद्धार्थमुपवेशयेत्॥ योदद्यादन्नमस्माकं तत्सर्वंमधुनासह॥ आमिषेणसमायुक्तं शस्तानांमृगपक्षिणां। जातूकर्ण्यः। दारवान्योद्विजःश्राद्धे दद्यान्नोमांसमध्वरे सदुरात्मा दुराचार्यो वेदमार्गस्यदूषकः। तर्पणंतिलहीनंय च्छ्राद्धंयच्चनिरामिषं। विनादर्भैश्चयासंध्या त्रयंशशविषाणवत्। यत्र मातुलजोद्वाही यत्रवावृषलीपतिः। श्राद्धंधिनोतितत्प्रेता न्कृतं यच्चनिरामिषं। विश्वामित्रः। निमंत्रितस्तुयःश्राद्धे यज्ञेवापिद्विजाधमः। मांसंनाश्नातिनिरयं यातित्रैपशुतांनरः। इत्यादंगवाधया यतिपक्षः कात्यायनेन निरस्तइत्यकेइत्युक्तम्। त्रिदण्डिनामेवविहितत्वात्। तथाचवायौ। सन्तिवेदविरोधेन केचिद्विज्ञानमानिनः। अयज्ञयतयोनाम वेदसंतियथारजः। मुण्डान् जटिलकषायान् श्राद्धेयत्नेनवर्जयेत्। ब्रह्मांडेपि। एभिर्निर्धूतदुष्टस्य श्राद्धंगच्छतिदानवान्। शिखिभ्योधातुरक्तेभ्य स्त्रिदण्डिभ्यः प्रदापयेदिति। मुण्डोविशिखः। जटिलोभस्मांगः। श्रुतिरपि। अशुचिर्वा एषयन्मुंडस्तस्मै तदपिधानंयच्छिखेति। उभावप्यज्ञातकुलशीलत्वा न्ननिमंत्रयेदित्यन्ये। तथाचकात्यायनः। यस्यशीलंनजानीयात् स्थानन्त्रिपुरुषंकुलम्॥ कन्यादानेतथाश्राद्धे नवृणीयात्कदाचन। मनुः। नस्वगोत्रेहविर्दद्या त्समानप्रवरे-

तथा। नाविज्ञातकुलेचैव यथाकन्यातथाहविः। पुराणसमुच्चयेपि। येषांनज्ञायतेस्थानं नष्टस्थानाश्चयेद्विजाः। नज्ञातिर्ज्ञायतेयेषां नसंबंधीनवांधवः॥ कुधर्माचरणायेतु नतांछ्राद्धे निवेशयेदिति। तदपिन। विज्ञातकुलशीलादीनां विधानोपपत्ते मांस मधु दक्षिणादानपंक्तिभेदादिदोषोपपत्तेः। तस्मादुभयोरप्यातिथि-रूपेणभोज्यत्वं नपंक्तौनिवेशइतियुक्तं।तथाचवाराहे। वैश्वदेवेनियुञ्जीत ब्रह्मचारिंशुचिंसदा। भिक्षुकान्देवतार्थेषु पूजयेदतिथिं यथा। अतिथ्यादिवृत्तौ छागलेयोपि। गंधमाल्यैः फलैश्चैव भोजनैःक्षीरसंस्कृतैः। पूजयेदतिथिंश्राद्धे पितॄणांतुष्टिकारकं। ब्रह्मचारीयतिश्चैव पूजनीयोहिनित्यशः। तत्कृतंसुकृतंयत्स्या स-म्यषड्भागमाप्नुयात्। मार्कंडेयोपि। भिक्षार्थमागतान्वापि। कालेसंयमिनोयतीन्। भोजयेत्प्रणिपाताद्यैः प्रसादोद्यतमानसः। कल्पतरावपि। पूजयेच्छ्राद्धकालेपि यतिंसब्रह्मचारिणं। गृह्णंतिपितरोदेवाः सचयातिपरांगतिम्। तारयंतिचदातारं पुत्रान्दारान्पितॄंस्तथा। तस्मात्सर्वप्रयत्नेन पूजयेदाश्रमागतं। अलाभेध्यानभिक्षूणांपूजयेत् ब्रह्मचारिणं॥ तदलाभेप्युदासीनं गृहस्थमपिभोजयेत्। विश्वामित्रोपि। यतिर्वाब्रह्मचारीवा भुञ्जानांद्विजन्मनो। श्राद्धे यत्रभवेत्साक्षी महालयसमंहितत्। महालयेगयायांच यतिधर्मेष्वविः। पित्रर्थं कल्पितंपूर्वं मन्त्रदेवादिकारणात्। वर्जयेत्तादृशीभिक्षां परवाधाकरींतथा। यमोपि। भिक्षुकोब्रह्मचारीवा भोजनार्थमुपस्थितः। उपविष्टेषुतुप्राप्तः कामंतमपिभोजयेदित्येवमादिवचनपर्यालोचनया यतीनांसाक्षित्वयोरेवप्राप्तिर्नंपङ्क्तौनिवेशइति। तथाचस्मृतिः। भुक्तशेषंनभुञ्जीत पीतशेषंनसंपिबेत्। नचैवोपविशेत्पङ्क्तौ यतेर्वातापसस्य

वेति। यतिस्तुसर्वविप्राणां सर्वेषामग्रभुग्भवेदिति। वायुपुरा- णोक्तेः। किञ्च यदिवंत्यपरेषः स्या त्तदाद्विजेभ्योमांसादिदाने न तेषांतदभावे पङ्क्तिवैषम्यान्नयुक्तम्। नपङ्क्तौविषमंदद्यादिति वाक्यात्। वृद्धहारीतोपि। पंक्तिभेदी वृथापाकी नरकंप्रतिपद्य- ते। कामाल्लोभाद्भयाद्वापि यःपङ्क्तिन्दूषयेत्द्विजः। नरकादव तीर्णस्तु जायते ग्रामसूकरइति। अपिच। दक्षिणायामपिवै षम्यं। तथाचविश्वामित्रः। हेमंवारजतंवापि यतयेब्रह्मचारिणे। योददातिकृतेवस्त्रं सभवेद्ब्रह्मघातकइति। अतएकइत्युक्तं त- त्सूतम् बहेकग्रहणं व्यवस्थितविकल्पार्थं देवश्राद्धे यतयः पित्रे गृ- हस्थाइति। तथाचहद्धवशिष्ठः। चत्वारः आश्रमापूज्या देवश्राद्धे- नसर्वदा॥ चतुराश्रमबाह्येभ्यः श्राद्धं नैवप्रदापयेत्। मार्कण्डे योपि। ब्राह्मणानांसहस्रेभ्यो योगीत्वग्रासनोयदि॥ यजमानञ्च- भोक्तॄंश्च नौरिवांभसितारयेत्। यमोपि। न ब्राह्मणम्परीक्षेत दैवेकर्मणिसर्वदा। पित्र्ये कर्मणिसंप्राप्ते परीक्षेतप्रयत्नतः। वैश्वदेवे नियुञ्जीतेति वाराहवाक्याच्चेत्यलंबहुना।

## * गृहस्थान्साधून्वा॥ ६॥

वाशब्दः पाक्षिक यतिनिमंत्रणनिषेधार्थः। तथाचजाबालः। अश्नंतियेनमांसानि भार्याहीनाश्चयेद्विजाः॥ येचमातुलसंबंधा नतान्श्राद्धे निवेशयेत्। ऋष्यशृंगोपि। नाश्नातियोद्विजोमांसं य- स्यनोदार संग्रहः तावेतौमुनिभिः प्रोक्तौ वनहोमखदूषकाविति। ननु। वाशब्दःगृहस्थनिषेधार्थःकिंनस्यात्। मैवं साधुशब्देनेवत- न्निषेधसिद्धेः। नचात्रवाशब्दाभावःशङ्क्यः। शाखांतरेदृश्यमान- त्वात्॥ तथाचगोभिलः। गृहस्थान्साधून्वेति। वसिष्ठोपि। य-

तीन्गृहस्थान्साधून्वेति । अतश्चगृहं पत्नी तत्सहिताग्गृहस्था-न्नरान्निमन्त्रयेदित्यर्थः । नचविभार्यनिमन्त्रणमनुज्ञातं ॥ विभा-र्योवृषलीपतिरित्यविणाप्रतिषेधात् । साधूनाहादित्यपुराणे । साधून्वक्ष्यामिसंयतमित्यु पक्रम्यगङ्गायमुनयोर्मध्ये मध्यदेशः प्र-कीर्त्तितः । तत्रोत्पन्नाद्विजायेवैसाधवस्तेप्रशस्तइति । यद्वादेश-व्यतिरिक्तदेशस्थाः सद्वृत्ताः म्लेच्छदेशनिवासिनो वर्जयेदिति-मात्स्योक्तेः ।

## * श्रोत्रियान् ॥ ७॥

निमन्त्रयेदितिशेषः । श्रोत्रियमाहदेवलः । एकशाखाचस-कलां षड्भिरङ्गैरधीत्यच । षट्कर्मनिरतोविप्रः श्रोत्रियोनाम-धर्मवित् । जन्मनाब्राह्मणोज्ञेयः संस्कारैर्द्विजउच्यते । विद्यया यातिविप्रत्वन्त्रिभिः श्रोत्रियउच्यतइतिवा ।

## * वृद्धाननवद्यान् ॥ ८ ॥

विकलेन्द्रियदुराचारादि दोषराहित्यमनवद्यशब्देनोच्यते । ततश्चायाः सर्वेषुवेदेषुश्रोत्रियो ब्रह्मविद्युवेति युवत्वेन वृद्ध-निषेधेवृद्धानिति प्रतिप्रसवः । यद्वायुग्वृद्धविधिब्यान्तद्व्यति रिक्तस्याल्पवयस्कस्य भोक्तृनियमात्तमस्यनिषेधः । अनवद्यपद मत्तरत्रानुषज्यस्वकर्मस्थद्विजविशेषणंकृत्वा केवलवृद्धशब्देनज्ञान-वयस्तपोवृद्धांस्त्रिविधानितिहलायुधः ।

## * स्वकर्मस्थान् ॥ ९ ॥

स्वजात्युक्तकर्मानुष्ठानरतान्विप्रानित्यर्थः । अतश्चश्रोत्रिया-दिवैलक्षण्यमनेनोक्तमित्यपुनरुक्तिः । तथाचपुराणसमुच्चये । गृहस्थाः कुलसम्पन्नाः प्रख्याताकुलगोत्रतः । स्वाचारनिरताः शान्ताः

विज्ञेयाः पङ्क्तिपावनाइति। मुख्यकल्पंप्रदर्श्यानुकल्पमाह।

* अभावेपिशिष्यान्स्वाचारान् ॥ १०॥

अपिशब्दः स्मृत्यंतरोक्तानुकल्पसमुच्चयेतत्रपूर्वोक्तमुख्यकल्पाभावेसदृत्तान् शिष्यादीनपिनिमन्त्रयेदित्यर्थः। तथाचयाज्ञवल्क्यः॥ स्वस्त्रीयऋत्विक्जामातृयाज्यश्वशुरमातुलाः। त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाइति। अनुकल्पस्त्वयंज्ञेयः सदासद्भिरनुष्ठितः। मातामहंमातुलञ्च स्वस्त्रीयंश्वसुरंगुरुं। दौहित्रंविट्पतिंबंधुंऋत्विग्याज्यौचभोजयेदितिमनुः। आपस्तंबोपि। गुणवदलाभेसोदर्योप्यमावन्तेवासिनोख्याताइति। अयमनुकल्पोदैवएवनपित्र्ये। तथाचात्रिः। पितापितामहोभ्राताशिष्योवाथसपिंडकाः। नपरस्परमर्घ्याः स्युर्नश्राद्धेऋत्विजस्तथा॥ ऋत्विक्पुत्रादयोह्येतेसकुल्याब्राह्मणाद्विजाःवैश्वदेवेनियोक्तव्यायदोतेगुणवत्तराइति। अपिभिन्नक्रमइतिहलायुधः। स्वाचारानित्यनेनाचार्यधनहारित्वाभावउक्तः। तेहिकदाचिद्धनहारिणोविहिताःदद्यात्पिंडंहरेद्धनमित्यादिना। अतस्तथात्वेशिष्यदौहित्रादयोनाभिमन्त्रणीयाःपिंडदोंशहरइतिपिंडदातृत्वहरंसम्भवात्। वर्ज्यानाह।

* द्विर्नग्नशुक्लविक्लिधःश्यावदन्तविद्धप्रजननव्याधितव्यंगिश्वित्रिकुष्ठिकुनखिवर्जम्॥ ११॥

द्विरितिपित्रोर्वंशेत्रिपुरुषंवेदाग्न्योर्विच्छेदीद्विर्नग्नः। तथाचसुमंतुः। यत्रत्रिपुरुषादासीदुभयोर्गोत्रयोरपि। वेदस्याग्नेश्चविच्छेदोद्विर्नग्नःपरिकीर्तितः। दुश्चर्मेतिच। शुक्लोतिकपिलांग-

केशः । तथाचकात्यायनः ॥ द्विर्नग्नः किलदुश्चर्मा शुक्लोतिकपिलःस्मृतः । विचर्चिकादिरवन्दोषोविक्लिधःपरिकीर्तितः सङ्ग्रहकारोपि । खल्वाटकश्चदुःशीलः कपिलाश्चंडएवचेति । विक्लिधश्रोष्ठः भ्रामनाद्युतदन्तः । तथाच । यस्यनैवाधरोष्ठाभ्यांछाद्यतेदशनावली । विक्लिधःसतुविज्ञेयोब्राह्मणः पंक्तिदूषकः पूतिगन्धप्राणइतिकश्चित् । श्यावदन्तः । स्वभावात्कपिलदन्तः । विद्धप्रजननः छिन्नलिंगचर्मादक्षिणात्येप्रसिद्धः । तथाच कल्पलतायां । विद्धप्रजननश्चैव छिन्नांशिश्नविकारवान् । तेहि कामार्थंभोगार्थं दक्षिणात्याःप्रकुर्वते । वन्ध्यवीजोवा । मृतापत्यइत्यन्ये । व्याधितोरोगी महारोगोपसृष्ट इतिकश्चित् । व्यङ्गो विगतस्त्रिविधवांगंयस्येतिसमास । हीनांगोधिकांगश्च । हीनातिरिक्तांगइतिस्मृतेः । श्वित्री । श्वेतकुष्ठी । कुष्ठीकुत्सितगलितांगः । व्याधितग्रहणादेवतन्निषेधेसिद्धे तद्ग्रहणदोषाधिक्य द्योतनार्थं । अजीर्णादिरल्परोगिदोषाल्पत्वज्ञापनार्थञ्च । कुनखी स्वभावात्कुत्सितनखी । एतान्वर्जयित्वा निमंत्रयेदित्यर्थः । अस्नातकादिविहितग्रहणादेवतन्निषेधेसिद्धे द्विर्नग्नादिनिषेधो मुन्यन्तरोक्तआंतरालिकाद्विजोपवेशनार्थः । तेचग्रन्थगौरवान्नेहलिखिताः । अन्यथाद्विर्नग्नादि वर्जनमनर्थकंस्यात् ।

## * अनिन्द्येनामंत्रितोनापक्रामेत् ॥१२॥

अनिन्द्योनिर्दोषस्तेनामन्त्रितोनव्यतिक्रमेत् । तथाचश्रुतिः । (१) सहोवाचानिंद्याविमा इषतपसोनिन्द्यो इत्तानशकमपक्रमितुमितितस्मादुहानिंद्यस्य इतोनापक्रामेदिति । आग्निवेश्योपि । नैकदापि परान्नं यो भुङ्क्ते मूढमतिर्द्विजः ॥ वत्सराभ्यन्तरे वत्सरं भवेदिति । निर्दोषस्येतिशेषः ।

(१) अग्निष्टोमप्रकरणेऽध्वरकांडे

## *आमन्त्रितोवान्यदन्नप्रतिगृह्णीयात्॥१३॥

निमन्त्रितोविप्रोन्यदन्नं सिद्धमामम्वा परस्यनगृह्णीयादित्यर्थः॥ यद्वान्यस्यात्तमन्यदन्नम् अन्यस्य दगागमश्छान्दसः। वाशब्दो निमन्त्रिते दातृभोक्त्रोः परस्परत्यागनिषेधन्द्योतयति। तथाच यमः। आमन्त्रितश्चयोविप्रो भोक्तुमन्यत्रगच्छति। नरकाणांशतंगत्वा चाण्डालेष्वभिजायते। केतनं कारयित्वातु निवारयतिदुर्मतिः। ब्रह्महत्यामवाप्नोति शूद्रयोनौचजायते। आदित्यपुराणे आमन्त्रितश्चिरंनैव कुर्याद्विप्रःकदाचन॥ देवतानांपितॄणांच दातुरन्नस्यचैवहि चिरकारीभवेद्द्रोगी पच्यतेनरकाग्निनेति॥

## * स्नातांकुचीनाचांतान्॥१४॥

ईदृशान्उपवेश्य। श्राद्धंकुर्वीतेति वक्ष्यमाणेनसंबधः। स्नानशौचाचमनानि स्मृतिप्राप्तान्येवात्रसार्थकत्वेनानुवदति। तेनस्नानशौचाच मनेष्वत्रविशिष्टविधिरित्यर्थः। तथाच देवलः। ततोनिवृत्तेमध्याह्ने कृतलोमनखान्द्विजान्। अभिगम्ययथापूर्वं प्रयच्छेद्दन्तधावनम्। तैलमुद्वर्त्तनंस्नानं स्नानीयंचपृथग्विधम्। पात्रे (१) उदुम्बरेदद्या द्वैश्वदेवस्यपूर्वकम्। ततः स्नात्वानिवृत्तेभ्यः प्रत्युत्थायकृताञ्जलिः। पाद्यमाचमनीयंच संप्रयच्छेद्यथाक्रममिति। अत्रामन्त्रितानांस्निग्ध स्नान दन्तधावन विधिर्नकर्तुः। तथाच। दन्तधावनतांबूलम् स्निग्धस्नानमभोजनम्। रत्यौषधंपरान्नानि श्राद्धकृत्सप्तवर्जयेदिति। अत्रकेचिदनिषिद्धविधिविषयन्तैलादिप्रेषणमिति। तन्न। श्राद्धीयेन्हि विशिष्टविधित्वात्। तथाच कात्यायनः। तैलमुद्वर्तनन्देयम ब्राह्मणेभ्यः प्रयत्नतः। तैरभ्यङ्गःप्रकर्त्तव्यो वर्ज्यकालन्नचिन्तयेत्। अभ्यङ्गो-

(१) ताम्रपात्रे

सुरेश्वरोपि। पुत्रजन्मनिसंक्रान्तौ श्राद्धे जन्मदिनेतथा नित्यस्त्रा नेचकर्त्तव्यो तिथिदोषोनविद्यतइति। निषेधस्यमलापकर्षविषयत्वा च्च। एवंव्रणादिव्याधौ रक्तस्रावादौच सत्यशुद्धत्वाच्छुचौनितिशेषः। तथाचपुराणसमुच्चये। कृत्वातुरुधिरस्रावान्नविद्वान् श्राद्धमाचरेत्। एकाहं वौणिवाविद्वान्दिनानिपरिवर्जयेत्। वमनेवाविरेकेवातद्दिनं परिवर्जयेत्॥ यथारजस्वलानारी ह्यशुचिस्त्रिदिनम्भवेत्। रक्तस्रावेतथानॄणा मशुचित्वंप्रजायतइति एवमाचमनेपि विशेषः। तथाच विष्णुपुराणे। उपस्पर्शस्तुकर्त्तव्यो मण्डलस्योत्तरे दिशि। कर्त्तार्थंत्राह्मिजैर्वापि विधिवद्भाग्यतैःसदा। मण्डलस्योत्तरेदेशे कुर्यादाचमनन्द्विजः। सोमपानफलम्प्राहुर्गर्गकाश्यपगौतमाः। आपस्तंबोपि। कुर्यु राचमनं विप्राश्शौचार्थंमण्डलाद्वहिः। अन्यदिक्षुयदाकुर्यान्निराशाः पितरोगताइति। तथा। विप्रपादोदकस्थानेकुर्यादाचमनन्द्विजः। रुधिरन्तद्भवेतोयन्निराशाः पितरोगताः। पादोदकोच्छिष्टवारिद्वयोश्चेत्सङ्गतिर्भवेत्। उच्छिष्टाः पितरोयान्तिशुध्यन्तिच गयाशिरइति। मण्डलादिकरणञ्चोमूत्रेणाहस्मृतिः। गोमूत्रमंडलंकृत्वादक्षिणे चोत्तरे उभे। श्राद्धीयाह्नसंप्राप्ते रेणुभिर्नजलेनच। गृहकुड्यादिलिपेषुगोमूत्रेणुरुच्यत इति॥

## मू० प्राङ्मुखानुपवेश्यदैवेयुग्मानयुग्मान्यथाशक्तिपित्र्यएकैकस्योदङ्मुखान्॥ १५॥

यथाशक्त्यैकैकस्येति पदेउभयत्रसम्बध्यते। युग्माद्विचतुरादयः। अयुग्मास्त्रिपञ्चादयः। ततश्चैकैकस्यपित्रादेर्दैवश्राद्धे यथाशक्तियुग्मान्प्राङ्मुखान्। पित्र्येप्येकैकस्यपित्रादेरयुग्मान्यथाश-

न्युदङ्मुखाभ्यांप्राग्भ्यां मकरेणासनंस्पृष्ट्वादक्षिणकरेणद्विजकरं धृत्वा ॐभूर्भुवःस्वः इदमासनमास्यतामित्युक्त्वोपवेश्यश्राद्धं कुर्यादितिशेषः। तथाचकात्यायनः। सव्येनैवासनं धृत्वादक्षिणेदक्षिणंकरं। ॐभूर्भुवः स्वरित्युक्त्वाआसनेषूपवेशयेदिति। एवञ्चप्रतिपुरुषं दैवश्राद्धं भवतीतिचगम्यते। यथाशक्त्योत्यस्यानियततयाचकत्वात्। अयुग्मत्वंच नवभ्योर्वाग्वेद्यं। नवावरान्भोजयेदयुजोयथोत्साहंवेति। ब्रह्माण्डेपि सामर्थ्येपिनवभ्योऽर्वाग्भोजयीतसतिद्विजान्। नोर्ध्वं कर्त्तव्यमित्याहुः केचिद्दोषस्यदर्शनादिति। एवंबहुतराप्राप्तौसंख्यामाह॥

## * द्वौवादैवेत्रीन्पित्रे॥ १६॥

वाशब्दः प्रतिपुरुषंदैवश्राद्धंनिषेध्यदैवेद्वौपित्रेत्रीनितिपितृपङ्क्तौ दैवेद्वावेवपित्रेप्रतिपुरुषंत्रिकत्रिकभेदेनवा। एवमुभयत्राप्येकादशैवेत्यर्थः। अतएवप्रतिपंक्तौदैवश्राद्धंनप्रतिपुरुषमितिपूर्वसूत्रापवादः। तथाचवृद्धयाज्ञवल्क्यः। दशैकंपंचवाविप्रापार्वणेविनियोजयेत्। द्वौदैवेप्रागुदक्पित्रे एकैकादशपंचवेति।। पक्षद्वयावधारणार्थोवाशब्दः। विस्तरनिषेधात्। तथाचसएवद्वौदैवेपितृकृत्ये त्रीन्पंचचैवंप्रकल्पयेदिति। मनुरपि सत्क्रियान्देशकालौचद्रव्यंब्राह्मणसंपदः। पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरं। बृहस्पतिरपि। एकैकमथवाद्वौत्रीन्दैवेपित्र्येचभोजयेत्। सत्क्रियाकालपात्रादिर्नसंपद्येतविस्तरं। ब्राह्मेपि। यस्माद्ब्राह्मणबाहुल्याद्दोषोबहुतरोभवेत्। श्राद्धनाशोमौननाशः श्राद्धतत्त्वस्यविस्मृतिः। उच्छिष्टोच्छिष्टसंसर्गो निन्दादातृषुभोक्तृषु। वितंडावापवादोवाजल्पन्त्वेतेपृथग्विधा॥ * ॥ * ॥

## मु० एकैकमुभयत्रवा ॥ १७ ॥

वाशब्दोऽभावे। ततश्चदेशकालधनाद्यभावेदैवेपित्र्ये चैकैकंब्रा ह्मणद्वयमेवोपवेशयेदित्यर्थः। तथाचहृद्धयाज्ञवल्क्यः। एकंदैवेतथा-पित्र्येधनविप्राद्यभावतः। योजयेत्श्राद्धदासेवपितृपक्षंनलोपयेदि-ति। नन्वेवंनत्वेवैकंसर्वेषामितिनिषेधोनुपपन्नः। मैवं। तस्य सं-भवविषयत्वात्। तथाच। ब्राह्मणाविप्रसंपन्नावेकैकत्वत्रयस्त्रयः। एकोवैकस्यभोक्ताव्यस्त्रयाणामेकएववेति। अत्रदैवेपित्र्ये चेत्यनुवृत्तौउ भयत्रे तिग्रहणंसर्वत्रविभागार्थं। समंस्यादश्रुतत्वादितिन्यायात् ॥

## मु० मातामहानांचैवम् ॥ १८ ॥

मातामहानामप्ये वं सर्वं पक्षाभवे युरित्यर्थः। अतश्चमाता-महश्राद्धमपिपितृश्राद्धवन्नित्यमित्युक्तम्। मातामहादिभिर्मातुः सापिंड्यएवमातामहश्राद्धनित्यमितिविज्ञानेश्वरः। अतएवातिदे-शान्नपृथक्कार्यमित्यन्ये। तदेतत्कर्कादिभिरनादृतमित्युपेक्षित्तं। तथाचस्कन्दपुराणे। पार्वणंकुरुतेयस्तुकेवलंपितृहेतुतः माताम-ह्यं नकुरुतेपितृहाचोपजायते। चकारोनवद्धादशदैवत्ये मातृमाता मह्योरतिदेशार्थः। वैश्वदेवेविशेषमाह ॥

## मु० तत्त्वावैश्वदेविकम् ॥ १९ ॥

विश्वेदेवाः संत्यत्रेतिवैश्वदेविकं। श्राद्धं तंचमुभयपंक्त्योरेक देवं भवे दितिशेषः। अतइमिठमौसाधारणं भवे त्तं त्वमितिवच नात्। अयञ्चपक्षोन्यपक्षेष्वविकल्प्यते। ततश्चैकप्रयोगपूर्वं साधक-त्वं भिन्नप्रयोगापूर्वसाधकत्त्वञ्चवैश्वदेवश्राद्धस्य भवतीत्यर्थः। एत-त्कालेचमसं पूरयित्वाभिमन्त्रयेत्। तथाचकात्यायनः॥ कूष्मांडमंत्र

सूक्तेनकुर्यात्तोयाभिमंत्रणम्। अन्नानिप्रोक्षयेत्तेनतेनैवश्राद्धमाच-
रेदिति। कूष्मांडमन्त्रा (१) यद्देवादेवेत्यादयस्त्रयः॥

## * श्रद्धान्वितःश्राद्धंकुर्वीत॥२०॥

श्रद्धाधर्मकार्येषुसफलत्वनिश्चयः। तथाचमनुः। प्रत्ययोधर्मकार्येषु सद्भिःश्रद्धेत्युदाहृतेति। साच स्मृत्युक्तधर्मोपलक्षणं। अतस्तद्युक्तःश्राद्धङ्कुर्वीतेत्यर्थः।तथाचविधिहीनमनुष्ठानम्मन्त्रहीनमदक्षिणंअश्रद्धयाकृतं दत्तंतद्वैरक्षांसिभुञ्जते। तथा।विभक्तिभिस्तुयत्किंचिद्दीयतेपितृदैवते। तत्सर्वंसफलंश्राद्धंविपरीतंनिरर्थकमिति। अत्रश्रद्धास्ति यत्रतच्छ्राद्धमितिश्राद्धग्रहणेनैवतदन्वितत्वेलब्धे श्रद्धान्वितग्रहणंपितृकार्येषुस्मृत्युक्तधर्मादरज्ञापनार्थं। तथाचमनुः। देवकार्याद्द्विजातीनां पितृकार्यंविशिष्यतइति। अतःपितृकार्येस्मृत्युक्तधर्मादरेणप्रयोगकुशलःस्यादिति। एतदुक्तम्भवति संबन्धनामगोत्ररूपाणांयथावत्प्रयोगेणमुखादिदत्तं हविः पितृणांतृप्तिकरंभवतीति। तथाच। नामगोत्रं स्वधर्मश्चापकं हव्यकव्ययोरिति। ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोग कुशलोनरइतिच। नामादिप्रयोगोधर्मप्रदीपे। आवाहनार्घसंकल्पे पिंडदानेतिलोदके। अक्षय्यासनयोः पादेनामगोत्रे प्रकाशयेत्। अत्रचिंत्यते। संबन्धादिक्रमोस्तिनवेति। केचित्तु संबन्धादीनांहविः प्रापकत्त्वमेवनोच्चारक्रमइति। अन्येत्वमुकगोत्रा अस्मत्पितरमुकशर्मणिनति क्रमइति। वसुरुद्रादीध्यानमेवनोच्चारइत्यन्ये। तत्रनाद्यः। स्मृत्युक्तक्रमवैयर्थ्यात्। नद्वितीयःगोत्रप्रयोगस्यादावविहितत्वात्। नतृतीयः। वस्वाद्युच्चारस्यैवोक्तत्त्वात्। तथाच। संबन्धम्प्रथमंब्रूया न्नामगोत्रेततःपरम्। रूपन्ततोविजानीया देषधर्मःसनातनः। अन्यच्च।

(१) २० अध्याये।१४।१५।१६। मन्त्राः।

मृतनामसमुच्चार्य तस्यगोत्रमुदीरयेत्। इतस्मृतिरपि। आस-
नेचार्घ्यदानेच पिण्डदानेऽवनेजने। संबन्धनामगोत्राणि यथार्ह-
मनुकीर्तयेत्। वसुरुद्रस्तथादित्यः पित्रादित्रितयेक्रमात्। माता-
महादिमातादि त्रयेचस्मृतिमर्हतीति। तथा। वसुरुद्रादित्य-
रूपा ज्ञातार्थंतर्पयेत्पितॄन्। नामगोत्रे समुच्चार्य तिलैस्तीर्थेषु-
संयतइति। तीर्थंपितृतीर्थं। ततश्चास्मत्पितरमुकशर्मन्नमुकगोत्र-
वसुरूपेतिप्रयोगः। पाद्येतुविरोधोभासते। विधिनिषेधयोर्दर्शना-
त्। तथाच। पाद्येनामगोत्रेप्रकाशयेदित्युक्तम्। तथा। आस-
नावाहनेपाद्ये अन्नदानेतिलोदके। अर्घ्येपिण्डदानेचनामगो-
त्रेप्रकीर्त्तयेदिति(१)मनुस्तुनिषेधति।[1]हविर्मण्डलभूमौतुगोत्र-
मुच्चरतेयदि। अक्षत्तं तद्भवेदर्घंम्पितॄणांनोपतिष्ठतइति। अत्रव्य-
वस्था। स्वागतार्घेगोत्रादिनिषेधः। पादार्घ्येत्तु विधिरित्यविरो-
धः। अस्तिचस्वागतार्घ्य विधिः पादार्घपूर्वभावी। तथाचहेमाद्रौ ब्रह्मा-
ण्डः। दत्वार्घंचालयेत्पादावाचम्यचालयेत्पुनः। पूजयेत्पुनरा-
चम्यविप्रानभ्यन्तरेनयेत्। पुराणोच्चयेपि। दत्त्वार्घंचालयेत्पादौ-
विष्टरेषुनिवेशयेत्। पूर्वंयःचालयेत्पादौपादार्घंस्ततोनयेत्। वि-
प्रपादोदकोद्भूताम् पितृतृप्तिन्निहन्तिसइति। तस्माद्विप्रानाहूय-
सव्येन तूष्णींस्वागतार्घं दत्वा पादौप्रक्षाल्याचम्यमण्डलेउपवेश्य
यथाविधिपुनःप्रक्षाल्याचम्य पादार्घंगोत्राद्युच्चार्यंदद्यादिति। ना-
मगोत्रादिकंकयाविभक्त्याकुत्रप्रकाश्यते त्यतआह। संबन्धेचभवे-
त्षष्ठीचतुर्थीसंप्रदानतइति सामान्येनषष्ठीचतुर्थ्योःप्राप्तयोर्विशेष-
माहस्मृतिः। अर्घ्यासनयोःषष्ठीचतुर्थीचैवकल्पने आवाहनेद्वि-
तीयाच शेषाःसंबुद्धयःस्मृताइति। कल्पने संकल्पे। एतच्चान्नसं-

(१) मध्येपल्लीविषुस्थानेविप्राणाम्पादशौचने। रथस्यारोहणेचैवऋतुकालेतुमैथुने।

कल्पादन्यत्र। तथाचब्रह्माण्डपुराणे पितृभ्यस्ततोदद्यादन्नमामन्त्रणेनतु। अमुकामुकगोत्रैत तुभ्यमन्नं स्वधानमइति। शांखायनोपि। अन्नं चासावेतत्त इत्युद्दिश्य भोजयेदिति। पठंतिच। आमंत्रणेप्रतिज्ञाया मर्घ्ये दक्षिणाविधौ। संपूर्णपृच्छासनयोः षष्ठींकुर्यात्सदैवहीति। आसनेचतुर्थीविकल्पिता। तथा। पृच्छाक्षय्यासनेषष्ठी चतुर्थींचासनेमता। अर्घावनेजनं पिण्ड मन्नं प्रत्यवनेजनं। संबुध्यैतानिकुर्वीत शब्दशास्त्रविशारदः। व्यासोपि। चतुर्थींचासनेनित्यं संकल्पेचविधीयते॥ प्रथमातर्पणेप्रोक्ता संबुद्धिमपरेजगुरिति। देशभेदेनचतुर्थीव्यवस्थितेतिरत्नावलीकारः। यत्तुसंग्रहकृद्वाक्यं। अक्षय्यासनयोःषष्ठी द्वितीयावाहनेस्मृता। अन्नदानेचतुर्थीस्या च्छेषाःसंबुद्धयःस्मृता इत्यन्नदानेचतुर्थी विधायकन्तच्छेषादानविषयं। शेषाःसंकल्पव्यतिरिक्ता ऽर्घदानावनेजनादयः। संकल्पेचतुर्थ्याएवविधिः। तथाचधर्मप्रदीपे। गोत्राणामासनेक्षय्ये गोत्रानावाहनेतथा। अर्घे गोत्रे पितुस्तद्व त्पिण्डदानेवनेजने। अन्नसंकल्पनेगोत्र महाशर्माणएवच। त्यागेदानेचगोत्रेभ्यो दैवेप्येतदुदाहृतमिति। त्यागेसंकल्पे। दाने। दक्षिणायाः। एतदग्रे वक्ष्यामः। अन्यत्स्मृतिभिरनुसन्धेयमतःश्रद्धान्वितइत्युक्तम्।

## मू० शाकेनापिनापरपक्षमतिक्रामेत् ॥२१॥

अनेनावश्यंश्राद्धमपरपक्षेकुर्यादित्यर्थः। तथाचपुराणसमुच्चये। नहिपिंडप्रदानेन श्राद्धं भवतिकेवलम्। पुष्पंपत्रं फलन्तोयं यच्चान्यदपिकिंचन। पितॄनुद्दिश्यकर्तव्यं श्रद्धयापितत्परैः। तत्सर्वंश्राद्धमित्युक्तं श्रद्धयाश्राद्धमुच्यतइति॥ ननु पक्षश्राद्धं सूत

काद्यौकर्तव्यमुतनेति। तत्वेकेनेति। प्रतिज्ञातत्वा त्कर्त्तव्यमि त्यन्ये। अत्रविचार्यते। यदिनेति तदाऽरम्भान्नियमो दोषश्चा समाप्तावितरस्य वैयर्थ्यमुपक्रमभंगःस्यात्। यदिकुर्यात्तदाद्रव्याद्य-शुद्धो द्विजभुक्त्यादिवैषम्यापत्ते नैत्रारम्भ स्तेनैवसमाप्तिरितिन्यायवा धश्चस्यात्। तस्मात्सूतकादिव्यतिरेकेण मयापक्षश्राद्धं कर्तव्य-मिति प्रतिज्ञातेन सूतकाद्यन्तेकर्तव्यम्। अथगृहसाधारणद्रव्येभ्यः पक्षश्राद्धपर्याप्तद्रव्यमुद्धृत्यप्रतिज्ञा कृता नियमेनमयाकर्तव्यमेवेति प्रति-ज्ञातेन सूतकादिमध्येश्राद्धङ्कर्तव्यमितियुक्तं। यथाहपाराशरः। पाकेनिमन्त्रितेषुचकरणं यथानवरात्रे कृतप्रतिज्ञेन सूतकम-ध्येऽपि कर्तव्यमेवमिहापीति। तथाच पुराणसमुच्चये। पक्षश्राद्धे-समारब्धे सूतकन्निपतेद्यदि। समाहूताहिपितरः सूतकांतेवि-सर्जयेत्। अथत्राकेचनेच्छन्ति श्राद्धंतुमृतसूतके। जन्मसूतक-मासाद्य पश्चाच्छ्राद्धंसमाचरेत्। यदिनैवन्नरःकुर्यात्सूतकान्तेच-मापनं। प्राग्दत्तानिननुष्येण श्राद्धेत्त्रासुरत्वमयदृति। इदञ्चा-शौचांते तन्मध्येऽवा समापनं। पूर्वोक्तविषयकल्पनेन व्यवस्थेय-मित्यविरोधः। अवश्यकहेतुमाह॥

## मू० मासिमासिवोशनमितिश्रुतेः॥२२॥

प्रजापतिः पितृणामाहस्म वोयुष्माकम्पूतिमासमशनं दत्तमतोऽप-रपक्षेऽवश्यमेवकर्तव्यमित्यर्थः। तथाचश्रुतिः। अथैनम्पितरःप्राचीनावीतिनइति अनेनचश्रुत्युक्तहेतुनाऽपरपक्षेऽमावास्यायामवश्य-कर्तव्यत्वं युक्तं। तेनाबहिःकुर्यादपरपक्षातिक्रमोमेत्यर्थादुक्तं। त-दतिक्रमेचोभयातिक्रमात् प्रत्यवायस्मृतेः तथाचएतान्येववहिः स न्तिपक्षमंयोव्यतिक्रमेत्। तस्मान्नातिक्रमे द्विद्वान्पक्षमं पैतृमेधिकं।

एतानिपुत्रायु र्धनधान्यादिफलानि । पञ्चममपरंपक्षपैतृकं-श्राद्धकन्तथा। ननिर्वपति यःश्राद्धं प्रमीतपितृकोद्विजः। इन्दुक्ष-येमासिमासि प्रायश्चित्तीयतेतुसः। नियममाह॥

मू० तदहःशुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादीस्यादध्वमैथुनश्रमस्वाध्याया-न्वर्जयेत् ॥२३॥

तदहरितिपूर्ववद्वज्भावः। श्राद्धदिनेऽमुंसूत्रोक्तंनियममनुति-ष्ठेदित्यर्थः। शुचिःवाह्याभ्यंतर वमन विरेकरक्तस्रावादपशुद्धि-रहितः। अथवाशुक्लवासःशुचिः शुक्लवासःस्यादितअनेन कषायादि-निषेधात्। तथाचहारीतः। शुचयःशुचिवाससःस्युरिति। शंखोपि। शुचिःशुक्लवासा दर्भहस्तःस्वागतमितिब्रूयात्। श्राद्धकृच्छुक्लवासा-स्यादितिच। पुराणसमुच्चयेपि। एकवासास्तुयःकुर्यात्पिण्डनिर्वपनप-न्नरः। कषायवस्त्रसम्बीतः तद्वैरक्षांसिभुंजते। धर्मप्रदीपेपि। कषायंखण्डवस्त्रंच रक्तवस्त्रंतथैवच। एवंविधानिवस्त्राणि वर्ज-येच्छ्राद्धकर्मणि। अप्रमत्तः स्मृत्युक्तकालादौ सावधानः। तथा-च। कालहीनंक्रियाहीनं मन्त्रहीनंच यद्भवेत्। पात्रहीनंचयच्छ्रा-द्धं भागन्तंरक्षसांविदुरिति। स्वाध्यायः श्राद्धमंत्रजपाद्यतिरिक्तः पाठः मैथुने पूर्वदिनेपि। शेषंस्पष्टं। नेयंविधिनिषेधयत्ता अपितूद्दि-ष्टावम्। अतोन्यदपिविधिनिषेधरूपं स्मृत्युक्तंग्राह्यं॥ तथाचदा-त्रभोक्त्रोर्नियमाः॥ नचाश्रुपातयेज्जातुनशुष्कांगिरमीरयेत्। नचो-द्वीक्षेतभुञ्जानं नचकुर्वीतमत्सरं। नदीनोपिनवाक्क्रुद्धो नचैवान्यम-नानरः। एकाग्रमाधायमनः श्राद्धंकुर्यात्सदाबुधइत्यादि। अत्रचि-न्त्यते। विधवापरस्त्र्यादीनां श्राद्धपाकेकर्तृत्वे तिलकेकिमधिकार-

उतनेति । अत्र केसमाचारादधिकारइति । तन्न । स्मृतिविरुद्धाचा चारस्याप्रामाण्यात् । तथाचव्यासः । गृहिणीचैवसुस्नाता पाकंकुर्यात्प्रयत्नतः । निष्पन्नेषु च पाकेषु पुनः स्नानंसमाचरेत् । रजस्वलांच्चपाखण्डीं पुंश्चलीं पतितां तथा । त्यजेच्छूद्रांतथावंध्यां विधवामन्यातथैवच रजस्वलांविदिनादूर्ध्वमनिवृत्तरजस्कां । यत्तु ब्रह्मपुराणे । व्यंगकर्णीचतुर्थाहस्नातामपिरजस्वलां । वर्जयेच्छ्राद्धपाकार्थंस्वमातृपितृवंशजामित्यन्यस्त्रीविधायकं । तत्पत्न्याअसंभवविषयं । अतएवपठंति । मातृस्वसावधुःकंन्याशूद्रानग्नौचपरस्त्रियः । पितृपाकन्नकुर्वीतनिराशाःपितरोगताः । तथा । श्राद्धस्यपाकोविधवापरस्त्रीनदृत्प्रिमंतःपितरोनदेवाइत्यादि । व्यंगकर्णी त्रुटितकर्णी ।तिलकेत्वापस्तंबः । ललाटेपुंड्रकंदृष्ट्वा स्कंधेमालांतथैवच निराशाःपितरोयांतिशापंदत्वासु दारुणमिति । एवंचसकलशिष्टाचारविरोधमालोक्यपुंड्रकनिषेधस्यवर्तुलतिलकविषयत्वमितिकेचित् । तदन्येनक्षमंते त्त्रआतुर्तिर्यक्पुंड्रं तथादृष्ट्वास्कंधेमालांतथैवच निराशाः पितरोयांतिदृष्ट्वाचरृषलीपतिमितिवाक्यात् । अतोनतिर्यपुण्ड्रः । तदपिन । सामान्येनतिलकमात्रनिषेधात् । तथाचपठंति । वामहस्तेषु येभांगृहेरंगवलिस्तथा । ललाटेतिलकंदृष्ट्वानिराशाःपितरोगताइति । रंगवलिस्वतुष्कं । स्मृत्यंतरं । ललाटेतिलकंदृष्ट्वास्कंधमालाङ्कितंतथा । कांस्यपात्रे हविर्दृष्ट्वानिराशाःपितरोगताः । सत्यव्रतोपि । वर्जयेत्तिलकंभालेश्राद्धकालेकदाचन तिर्यग्वाप्यूर्ध्वं पुण्ड्रं वाधारयन्श्राद्धकर्मणीति । एवञ्चश्राद्धाहेतिलकमात्रनिषेधोयुक्तः । प्रयोगे त्वाशीःप्रार्थनानन्तरन्तिलकविधानात् तथाच वृद्धयाज्ञवल्क्यः ।याचितारश्चनःसन्तु माचयाचिष्मकञ्चन । ततस्तुतिलकङ्कुर्यान्मन्त्रेणानेनभक्तितः । नित्यानुष्ठानसन्निष्ठाः सर्वदायज्ञबुद्धयः । पितृमातृप-

रा: सन्त. सम्लस्य सत्कुलजानराइति । न वानालोचितपरम्परानुष्ठा नंग्राह्यं । चतुर्विंशतिमतेपि । श्रुतिवेदविरोधेनपरित्याज्यायथा भवेत् । तथैवलौकिकम्वाक्यं स्मृतिबाध्यंपरित्यजेत् । पठन्तिच । ऊर्ध्वपुण्ड्रन्त्रिपुण्ड्रम्वाचन्द्राकारमथापिवा । श्राद्धकर्तानकर्तव्यं यावत्पिण्डान्ननिर्वपेदिति । यच्च भस्मोभवतित्तत्सर्वमूर्ध्वपुण्ड्रम्बिनाकृतमिति । तत्संध्यादिकर्मविषयतिलकपरमित्यविरोधः ॥

## * आवाहनादिवाग्यत आपस्पर्शनात् ॥२३॥

आउपस्पर्शनादितिच्छेदः ॥ ततश्चावाहनमारभ्यचुलुकदानपर्यंतस्य त्वबजा श्राद्धकृन्मौनमाचरेदित्यर्थः । तल्लोपेतुवैष्णवमन्त्रजपोविष्णुस्मरणम्वाप्रायश्चित्तम् ॥

## मू० आमन्त्रिताश्चैवम् ॥२४ ॥१॥

तेप्येवमक्रोधादिस्मृत्युक्तविधिनिषेधानाचरेयुरित्यर्थः। तथाचशंखः। हुंकारेणापियोब्रूयाद्धस्ताद्वापिगुणान्वदेत् । भूतलाच्चोद्धरेत्पात्रं मुंचेद्धस्तेनवापितत् । प्रौढपादोवहिः कच्छो वहिर्जानुकरोप्यथ। अंगुष्ठेनविनाश्नातिमुखशब्देनवापुनः । पीतावशिष्टंतोयादि पुनरुद्धृत्यवापिवेत् । खादितार्धंपुनः खादेन्मोदकानिफलानिच । मुखेनवाधमेदन्नं निष्ठीवन्भोजनेपिवा ॥ इत्थमश्नंद्विजः श्राद्धे दत्वागच्छत्यधोगतिम् । पवित्रपाणयः सर्वे तेचमौनव्रतान्विताः॥ उच्छिष्टोच्छिष्टसंसर्गं वर्जयंतः परस्परं । नस्पृशेद्वामहस्तेन भुंजानोन्नङ्कदाचन । पादयोर्मशिरोन्यस्तिनपदाभाजनंस्पृशेदित्यादि । एवमित्यतिदेशेनभोक्तृणामपिकर्तव्यस्य वोच्चारेप्राप्ते तन्निषेधाद्गनौकरणादिकुरुष्वेत्यादिप्रतिवचनमननुज्ञातम् ॥

इति श्री श्राद्धकाशिकायां प्रथमाकण्डिका समाप्ता ।

इदानीम्प्रयोगमुपक्रममाणः परिभाषते

## * दैवपूर्वं श्राद्धम् ॥ १ ॥

परिभाषेयमपवादव्यतिरिक्तेष्ववतिष्ठते ॥ श्राद्धमितिपित्र्यङ्कर्म ॥ दैवपूर्वमितिपदार्थानुसमयोक्तिः। ननुसूत्यन्तरोक्त काण्डानुसमयो नर्थकः स्यादितिचेत् ॥ पदार्थानुसमयानुक्तिविषयत्वेन सार्थकत्वात् । आह च । सकलोगुणकाण्डस्त्वेकैकस्यप्रयुज्यते । सहत्वा प्रापकोनैव प्रयोगवचनोभवेदिति। अतश्चावापवादवर्जमपादप्रक्षालनादिसर्वकर्मदैवपूर्वंभवतीत्यर्थः । तथा । दैवपूर्वंभवेच्छ्राद्धम्वर्जयित्वा।विसर्जनम् । प्रश्नञ्चदक्षिणांचैव भुक्तेचाचमनन्विना ॥ तथा हस्तोच्छिष्टापनयनमाह्वानञ्चविसर्जनम् । दक्षिणासौमनस्यञ्च विनान्यद्दैवपूर्वकम् ।धर्मप्रदीपेपि । विसर्गश्चुलुकश्चाग्नौ करणम्पङ्क्तिवारणम् । करशुद्धिरपोशानम्पितृपूर्वाणिषट्सदेति। देवलोपि । यद्वयत्क्रियते कर्म पैतृकं ब्राह्मणान्प्रति। तत्सर्वंतत्र कर्तव्यम्वैश्वदेवस्यपूर्वकमिति।

## सू० पिण्डपितृयज्ञवदुपचारःपित्र्ये ॥२॥

पितरोदेवत्तास्येतिपित्र्यं ॥ वाय्वृतुपित्रुषसोयदिति(१)यत्प्रत्ययः। ततश्चपितृकर्मपिंडयज्ञवत्कार्यमित्यर्थः।अनेनापसव्यं दक्षिणाभिमुखवामजानुपाताद्यतिदिष्टं ॥ अतोनीविवंधनादिपिंडोत्थापनांतं पिंडपितृयज्ञधर्माभवंति । अत्रसंदेहः । किंनीविवंधनंवामभागे दक्षिणेवेति । तत्रोभययाचारदर्शनाद्यथासंप्रदायंव्यवस्थेतिपारि

(१) रीङ् ऋतइतिरीङादेशःयस्येतिचेतीकारलोपेरूपम् ।

जातः । तत्रविचार्यं । किंनीविर्दैवंकर्मपित्र्यंवेति । आद्ये पिंडपितृयज्ञेऽनुष्ठानविरोधः । अंत्ये उपवीतिनदपसव्यांगउपनीतेति । तथाचमनुः । प्राचीनावीतिनासम्यगपसव्यमतंद्रिणा । पित्र्यमानिधनात्कार्यंविधिवद्दर्भपाणिनेति । अत्रप्राचीनावीतिनेत्यपसव्ये- प्राप्ते ऽपसव्यग्रहणंनीवीबंधनं वामजानुपातादिप्राप्त्यर्थं । किंच सर्वंकर्मापसव्ये नदक्षिणाहानवर्जमितिस्मृतिः । पिण्डपितृयज्ञ वदित्यतिदेशोपि । यत्तुकात्यायनवाक्यं । नीवीकार्यादशागुप्ति र्यमकुर्वीकुशैः सदा।पितृकर्मणिचैवोक्ता वेदवेदांगवेदिभिरिति । तदाभ्युदयिकविषयं । पठंतिच । दशा संगोपनंनीवीसाचाग्रे मा नुषीस्मृता । पितृणांदक्षिणे पार्श्वे विपरीताचदैविकी । इदयाज्ञ वल्क्योपि । दक्षिणे कटिदेशेतु तिलैः सहकुशत्रयं । तर्जयंतीहदैत्यानां यथान्नृणांयमस्तथेति नन्वेवंनीवीकार्येतिवाक्ये सदाशब्दान्नैवंविषयइतिचेत् । नीवीबंधनस्यरक्षोघ्नत्वाद्दैवपित्र्यमानुषक र्मसुयथोचितं । दशागोपनस्यविहितत्वेन सदाशब्दस्यैव सर्थत्वात् । तथाचश्रुतिः । दक्षिणतद्रुवहियन्नीविरितिलिंगं । लिङ्गादपिविधिर्ज्ञेयइतिवाक्यात् । नचश्रुतिविरुद्धास्मृतिःप्रमाणं श्रुतिस्मृतिविरोधेतुश्रुतिरेवबलीयसीतिवाक्यात् । तस्माद्दक्षिणाङ्गएवनीविबंधः । पिंडब्राह्मणभाष्येपि । अथनीविस्रुद्रस्य नमस्करोतीति कंण्डिकाव्याख्याने नाभेर्दक्षिणतएवनीविस्थानमुक्तम्।तद्बन्धमन्त्रः पराशरोक्तः । यथा । निहन्मिसर्वंयदमे ध्यवद्भवेद्दताश्चसर्वेसुरदानवामया । यक्षाश्चरक्षांसिपिशाचगुह्यका हतामयायातुधानाश्चसर्वे ॥

## मू० द्विगुणास्तुदर्भाः ॥ ३ ॥

सामग्र्युपलक्षणमिदम् । तथाचपुराणे । उपमूलसकृल्लूनकु-

थांस्तत्रोपकल्पयेत्। यवांस्तिलान्दर्भांश्च सयः शुद्धोसमाहृताः। पार्णरजततामाणि पात्राणिस्युः समिन्मधु। पुष्पधूपसुगन्धादि चौमसूत्रञ्चमेक्षणमिति। इत्थी दासनानि एतदाहरणमाह। उद्पात्रं चकासञ्चमेक्षणं स्रुक्स्रुवादिकं।आहरेदपसव्येनसर्वंदक्षिणात:शनैरिति दर्भाः। समूलकुशाः। तथाचयमः। समूलास्तुभवेद्दर्भाः पितृणांश्राद्धकर्मणि मूलेनलोकान्जयति शक्रस्यतुमहात्मनः।हारीतोपि। दक्षिणदिशातः समूलकुशानाहरेदिति। तुशब्दोविशेषार्थः। तेनपिण्डाधस्तनकुशवर्जं समूलाद्विगुणाः पित्र्ये। दैवेतथाद्वयोस्तुऋजवोभवन्तीत्यर्थः तथाचस्मृतिः॥ अथसकृदाच्छिन्नान्युपमूल(१)च्छिन्नानिभवन्ति। स्मृतिरपि। उपमूलंसकृच्छिन्ने वर्हिः पिण्डेषुशस्यते। कात्यायनोपि। सपिंडीकरणं यावदृजुदर्भैः पितृक्रिया॥ सपिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत्। देवानामृजवोदर्भाः पितृणांद्विगुणाःस्मृताइति॥

## सू० पवित्रपाणिर्दद्यादासीनःसर्वत्र ॥ ४ ॥

पवित्रमुपग्रहोपलक्षणं। सर्वत्र दैवेपित्र्ये च। तेनोभयत्रपवित्रोपग्रहपाणिरासीनश्चदद्यादित्यर्थः। तथाचमनुः। पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिनेति। अथवापवित्रपाणित्वमासीनत्वञ्चस्मृतिप्राप्तमेवात्र सार्थकत्वेनानुवदति। तेनवामहस्तेकुशादानत्वमावाहनेचासीनत्वंनिषेधतीत्यर्थः।तथाच पठन्ति। वामहस्तेप्रदादर्भान्गृहे दक्षस्तोस्तथा। ललाटेतिलकंदृष्ट्वानिराशाः पितरोगताइति। किञ्चावाहनेनागच्छत्सुपितृषु कर्त्तुरासीनत्वं नयुक्तं तथाचपिंडदानेपुराणोक्तंलिङ्गं। अथप्राञ्जलिरुपस्थायस्थित्वा चावाहयेत्पितॄनिति। मन्त्रार्थानुग्रहोपि। आयन्तुनः पितरः

(१) सकृद् छिन्नानि। एकयत्नकृदो निर्वाहेङ्क। कुत्तकृदितानि। उपमूलाद् नानिभवंतिउपमूलसमीपेदिनानिकर्त्तितानीत्यर्थः। दात्रकर्दनेनयम्॥

सोऽस्मामोऽग्निष्वात्ताः पथिभिर्देवयानैरिति। किञ्चासीनोदद्यादिति दानेआसीनत्वं नपुनरावाहनादुत्प्रस्थाने पीतिसूत्रार्थः॥

## प्रश्नेषुपङ्क्तिमूर्द्धन्यंपृच्छतिसर्व्वान्वा॥ ५॥

पङ्क्तिमूर्द्धन्यः पिच्छे प्रथमोविप्रः। लिङर्थेलट्। वाशब्दोव्यवस्थितविकल्पस्तुल्य विकल्पस्याष्टदोषत्वात्। इच्छास्याशीः प्रार्थनादिषु सर्वेभ्यवपंक्तिमूर्द्धन्यद्रत्यर्थः। तथाचपुराणे। हौहस्तौयुग्मतः कृत्वाजानुभ्यामन्तरेस्थितौ। सप्रश्रयस्योपविष्टः सर्वान्पृच्छेद्द्विजोत्तमानिति। तुल्यविकल्पोयमिति कर्कादयः। नचप्रश्नेषु पङ्क्तिमूर्द्धन्यं सर्वान्वैतावतिवाच्येपृच्छतीति गौरवंस्मृत्यन्तरोक्तमविघ्यर्थम्। प्रश्नेनैवतत्सिद्धेः। तथाचवृद्धयाज्ञवल्क्यः। इच्छादासनमर्घपूरणमत स्थावाहनार्घक्रमो न्युब्जंवार्चनभोजनाग्निहवनं शेषोजपःकल्पनम्। दत्वान्नं जपतृप्तिपिंडयजने सुप्रोक्षिताक्षय्यके आशीःपुंड्रकवाचनार्थ चअनन्दानंविसर्गस्तुतिरिति। आदिना देशकालगोत्रादिस्मरणविकिरादि पिंडार्चनान्तंगृहीतम्। अतान्योपिस्मृत्युक्तःक्रमः। तथाच। श्राद्धारम्भेगयांध्यात्वा ध्यात्वादेवञ्जनार्दनम्। स्वपितॄन्मनसाध्यात्वाततःश्राद्धंसमारभेत्। अग्निष्वात्ताःपितृगणाः प्राचीरक्षन्तु मेदिशम्। तथावर्हिषदःपान्तु याम्यांयेपितरस्थिताः। प्रतीचीमाज्यपास्तद्व दुदीचीमपिसोमपाः। ऊर्ध्वतस्त्वर्यमारक्षे त्कव्यवालो नलोप्यधः। रक्षोभूतपिशाचेभ्यस्तथैवासुरदूषकः। सर्वतश्चाधिपस्तेषां यमोरक्षांकरोतुमे। प्राणायामन्ततःकुर्या द्गायत्र्याःस्मरणन्तथा। श्राद्धकर्तास्मीतिवदे द्विप्रैर्वाच्यङ्कुरुष्वय। देवताभ्यःपितृभ्यश्चेत्यादे रादिमध्यावसानेषुजपः आदिमध्यावसानेषु त्रिरावृत्तञ्जपेद्बुध इतिवाक्यात्। एवंपरिभाष्य कर्मोपक्रमते॥

## सू० आसनेषु दर्भानास्तीर्य ॥ ६ ॥

पादासनन्दीपोपलक्षणम् । तथाचकात्यायनः ।विष्टरार्थंकु-शान्दद्या द्विप्राणाम्पादमूलतः । ब्राह्मश्च । पृथक्पृथक्त्वासनेषु तिलतैलेनदीपकाः । अविच्छिन्नार्चिषोदेया स्तेतुरक्षाद्विजोत्तमै-रिति । आसनान्याहस्मृतिः । शमीकाश्मर्य्यशल्लीस कदम्बोवार-णस्तथा । पञ्चासनानिशस्तानि श्राद्धे देवार्चनेतथा ॥ श्रीपर्णीवा-रुणक्षीरोजम्बूकाम्रकदम्बजम् । सप्तमंबाकुलंपीठं पितॄणांदत्तमक्ष-यमिति । ततश्च सदीपासनेषु पादासनंदत्वासनेषु दर्भान्दद्यादि-त्यर्थः । द्वितीयमेतदास्तरणमतोऽस्मात्पूर्वमपि दर्भानास्तीर्योपवेश-येदिति । तथादेवीपुराणे । कुशोत्तरे तिलाकीर्णे आसनेलोहव-र्जिते । दाताचस्वासनेपूते विप्रानावेशयेत्सुधीरिति । नन्वास्तृतेषु पुनरास्तरणंकुतः । पूर्वास्तरणस्यधर्ममात्रत्वादितिप्रके।विप्रानुत्था प्योत्थाप्यकर्तव्यमित्यन्ये द्वितीये उपवेशितानामुत्थानानुपपत्तिः । तस्मात्पूर्वमास्तरणमात्रमिह तद्दानमित्यपौनरुक्त्यं । अतश्चास्ती-र्यदत्त्वेत्यर्थः । संकल्पत्वात् । तथाचसाम्बपुराणे । कृताङ्घ्रिःशौचा-नाचम्य सूपविष्टान्यथाविधिः । दद्याद्दर्भासनंतेभ्यो वैश्वदैवत्यपू-र्वकं आसनेष्विति । हस्तेकुशान्नदद्यादितिसप्तम्यर्थः । दर्भाश्चैवा-सनेदद्या न्नतुपाणौकदाचनेत्युक्तेः । एतद्दैवेदक्षिणतःपित्र्येवाम-तः । पितॄणामासनंदद्यात् वामपार्श्वेकुशान्सुधीः । दक्षिणे चैव-देवानांसर्वदाश्राद्धकर्मणीतिवाक्यात् । अत्रैकेआसनदाने स्वधा-प्रयुंजंति । स्वधाशब्दप्राप्तेः तन्न तस्यासनादौनिषेधात् । तथाच-हेमाद्रिपद्धतौ । पितृभ्योनिखिलंदद्या त्स्वधाकारेणधर्मवित् । अ-र्घ्यमासनंचैव वर्जयित्वार्घमेवच । धर्मप्रदीपेपि । आसनाद्वा-

नयोरर्घे तथाग्नश्च वर्जने। तथ स्वाहास्वधावाणीं नकुर्यादत्र-वीन्मनुः। तेनास्मित्पितुरमुकशर्मगोमुकसगोत्रस्य वसुरूपस्येदमा-सनमस्त्विति प्रयोगः। केचि त्वकारवर्जं गोत्रमुच्चरन्ते। तन्नतत्व-हितस्यैवोक्तत्वात्। तथा। सकारेणहिवक्तव्यं गोत्रं सर्वत्रधीमता। सकारःकुतपोज्ञेय स्तस्मादत्नेनतम्बदेदिति॥

## * विश्वान्देवानावाहयिष्यइतिपृच्छति॥७॥

स्पष्टं। यवानादायोंकृत्यनिरंगुष्टं द्विजस्तंधृत्वेदंकार्यं। तथाचय-मः। यवहस्तस्ततोदेवा न्विज्ञाप्यावाहनंप्रति। शाकटायनोपि। आवाहनञ्चकर्त्तव्यं द्विजैरोंकारपूर्वकं। गोभिलोपि। यवाना-दायोंकारंकृत्वेति। अंगुष्ठंगृहीत्वावाहयंत्येके। तन्न। निर-ङ्गुष्ठंगृहीत्वातु विश्वान्देवान्समाह्वयेदितिब्रह्मांडोक्तेः। ततः सव्योदङ्मुखं दक्षिणञ्जान्वाच्य ऋजुकुशानादायोमित्युक्त्वा पु-रूरवार्द्रवादिप्रयोगंकुर्यादित्यर्थः। नन्वर्घान्पूरयित्वा वाहये द-ताबात्तत्रपूरयेदिति। उभयथावाक्यदृष्टेः। तथाहि। उमामहे-श्वरसंवादे। कुशांबुनाभुग्नंगृह्य दत्वासनमनुक्रमात्। निवेश्य-तत्रविप्रान्वै कुर्यादर्घाभिपूरणम्। शन्नोदेव्यापयःक्षिप्त्वा यवोसी-तियवानपि। गंधंपुष्पंचतूष्णींस्या दथदेवान्समाह्वयेदिति। पुरा-णोच्चयेप्यर्घं सम्पूर्यावाहनमुक्तम्। याज्ञवल्क्यास्त्वावाहत्र पूर-यति। पाणिप्रक्षालनन्दत्त्वा विष्टरार्थान्कुशानपि। आवाहये-त्यनुज्ञातो विश्वेदेवासइत्यृचा॥ यवैरन्ववकीर्याथ भाजनेसपवि-त्रके। शन्नोदेव्यापयःक्षिप्त्वा यवोसीतियवांस्तथेति। यादिव्याइ-तिमन्त्रेण हस्तेष्वर्घंविनिक्षिपेत्। अपसव्यं ततःकृत्वे त्यादिसूत्रका-रोप्यावाह्यार्घं पूरयति। अत्रविरोधः स्मृतिपुराणयोः। स्मृतेःप्राव-

त्वा तत्सूत्रोक्तत्वाच्चार्घ्यपूरणमित्येके। नेत्यन्ये। स्मृतावेवार्घपूरणस्य पूर्वमुक्तत्वात्। तथाचक्रमपरा हृद्धयाज्ञवल्क्यस्मृतिः। पृच्छाद्यासनमर्घपूरणं मतश्चावाहनार्घक्रमइति। एवंसति दर्भानास्तीर्य विश्वान्देवानावाहयिष्यइतिसूत्रमता याज्ञवल्क्यवचनेनैकवाक्यता मुनिनाऽऽसनार्घदानांत योज्ञवल्क्योक्तकांडानुसमयस्याहता ऽन्यत्र पदार्थानुसमयइतिज्ञापितम्। अन्यथा वाजसनेयिपरयाहृद्धयाज्ञवल्क्य स्मृत्यासूत्रंविरुध्येत। तथाचासनन्दत्त्वा हृद्धयाज्ञवल्क्यः। अर्घपात्रं समानीय कुशद्वयसमन्वितं। शन्नोदेव्यापयःक्षित्वा यवोसीतियवान्क्षिपेत्। गन्धपुष्पादिसंपूज्य पृच्छांकुर्याद्विचक्षणः। पूर्णमस्त्वितितैरुक्ते विश्वेदेवान्समाह्वयेत्। ततस्तुक्रमयोगेन पित्र्यन्तु निवेदयेत्। कुशांस्तुतिलसंयुक्तं तिलोसीतितिलान्क्षिपेत्। शन्नोदेव्यापयःक्षिप्त्वा शेषंपूर्ववदाचरेत्। स्वनामशर्मगोत्रैस्तु उशन्तस्त्वेतिवैततः। आवाहयेत्पितॄन्भक्त्याजपेदायंतुनःपुनरिति। ततश्चासनन्दत्त्वार्घं संपूर्य संपूर्णं पृच्छांकृत्वा वात्दद्यार्घं दत्त्वेति वैश्वदेवकांडंकृत्वाऽऽ समाप्तिपितृकांडंकुर्यादितिक्रमः। वैजवापायनोप्यर्घानंतरं पदार्थानुसमयमाह। तस्योपरिकुशान्दत्त्वा प्रदद्याद्दैवपूर्वकं। गन्धपुष्पाणि धूपंच दीपवस्त्रोपवीतकमिति। अन्यथा कथन्दैवपूर्वमिति पदार्थानुपसमयमुपक्रम्यविश्वान्देवानावाहयिष्यइत्यादिना तमेवपुरावक्ष्यदित्यलंबहुना। अथपदार्थानुसमयकाण्डानुसमयोर्विकल्पः। विश्वेदेवानाहादित्यपुराणे। विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषुकीर्तितौ। नित्यन्नान्दीमुखश्राद्धे वसुसत्यौच पैतृके। नवान्नालभने देवौ कालकामौसदैवहि। अपिकन्यागतेसूर्ये श्राद्धे चधुरिलोचनौ। पुरूरवार्द्रवौचैव विश्वेदेवौचपार्वणे। नवान्नलक्षणे पैतृकेनवान्ननिमित्तेश्राद्धे। क-

न्यागतेसूर्यइति कोपलाथाप्यनुरथाम्रियमाणे । उभयवुध्याहुतेतु पुरुरवार्द्रवावेव। (१ गोरोहमेनपशुकामस्येतिवन्नित्यकर्मांश्रयणे नगुणफलविधेरितिपारिजात: ॥

* आवाहयेत्यनुज्ञातो विश्वेदेवासऽआ गतेत्यनयावाह्यावकीर्य विश्वेदेवा:शृणुतेम मितिजपित्वा ॥ ८ ॥

आवाहयेतिद्विजैराज्ञप्तो विश्वेदेवासआगतेत्यनयार्चावाह्यावकीर्य विश्वेदेवा: शृणुतेममित्यृचंजपेदित्यर्थ: । अवावकीर्येति यद्यपि द्रव्यमंत्रयोरनुपदेशस्तथापियवैरोषधय: समवदंतेतिमंत्रेणच प्रदक्षिणमुदङ्मुखेनावकिरणं द्रष्टव्यं । तथायम: । यवहस्तस्ततोदेवा न्विज्ञाप्यावाहनंप्रति । आवाहयेदनुज्ञातो विश्वेदेवासइत्यृचा । विश्वेदेवा: शृणुतेममितिजपित्वा ततोयवान् । ओषधयइतिमंत्रेण विकिरेत्ताग्प्रदक्षिणमिति । अवावाह्ययवान्विकिरन् ततोजपइतिक्रम: । उदङ्मुखस्तुदेवानां पितृणां दक्षिणामुख: । प्रदक्षिणंतुदेवानां पितृणामप्रदक्षिणमितिच । नन्वपहताइति तिलानवकीर्येत्यवकिरणेऽपहतेतिमंत्रस्य विहितत्वात् कथमोषधइति । न ।वैश्वदेवस्य स्वतएवरक्षोघ्नत्वादपहता इत्यस्यवैयर्थ्यात् ॥ तथाच गोभिलसूत्रं । ओषधय: समवदंतेति । अथवा मंत्रानुपदेशात्तूष्णीमेवावकिरणं । तथाचखादिरगृह्यं । तूष्णीं यवानवकीर्येति ॥

(१) श्राद्धविशेषेविश्वेदेवानामझानेहहस्मृति:

उत्पत्तिंनामचैतेषां नविदुर्येद्विजातय:अयमुच्चारणीयस्तैर्मन्त्रश्रद्धासमन्विते आगच्छन्तु महाभाग।विश्वेदेवामहाबला: येयत्र विहिता: श्राद्धे सावधानाभवन्तु ते

*पितॄनावाहयिष्यइतिपृच्छत्यावाहयेत्य- नुज्ञातऽउशन्तस्त्वेत्यनयावाह्यावकीर्यायन्तु नइतिजपित्वा ॥

पितॄनावाहयिष्य इतिपृष्ट्वा वाहयेति द्विजैरानुज्ञ उशन्तस्त्वे त्यनयर्चावाह्यापहतइति तिलानप्रदक्षिणमवकीर्यायन्तुनइत्यृ- चन्तिष्ठन्नवकीर्यंजपित्वा । पितॄनिति मातामहोपलक्षकम् । तत- श्चापसव्येन दक्षिणामुखो द्विगुणकुशतिलानादाय वामजानुं- पातयन्नोमित्युक्त्वाऽस्मत्पितृपितामहप्रपितामहानमुकशर्मामुक- सगोत्रान्वस्वादिरूपानावाहयिष्यइति पृष्ट्वावाहयेत्ति द्विजै रानुज्ञ उशन्तस्त्वेत्यनयावाह्यापहता इति तिलानवकीर्यायन्तुनइत्यृच तिष्ठन्जपेदित्यर्थः । नन्वत्रापितूष्णीमोषधयइतिमन्त्रेण चावकि किरणमिति । न । रक्षोघ्नत्वादवकिरणेऽपहतेत्यस्यैवयुक्तत्वात् । अत्रोदकस्पर्शः राक्षसत्वात् । अत्रैकेविवहुत्वेप्रतिद्विजमेकवचन- प्रयोगेणपित्रादीनावाहयन्ति । तत्पितॄनावाहयिष्यइति सूत्रो- पदेशात्पितॄन्हविषेअत्तवइति मन्त्रलिङ्गाच्चोपेक्ष्यं । ननुमातामह- श्राद्धे मन्त्रोहोस्तिनवेति ॥ अत्रैकेपितृभ्यः स्वधायिभ्यः अत्रपि- तरः आयन्तुनः पितरइत्यादि । एवंप्रदक्षिणावृत्कोद्दक्षैनान्दी- मुखान्पितॄन् । स्वपितृभ्यः पितादद्या न्नमस्येह पितृश्राद्धे इत्यादिश्रुतिस्मृतिवाक्येषुपितृशब्दस्यैवप्रयोगान्मातामहश्राद्धे पि पितृशब्दप्रयोगएवनमन्त्रोहइति । इदं विचार्यं । यदिश्रुत्यादिवा- क्यस्यपितृशब्द प्रयोगेणैव सिद्धिस्तर्ह्यस्मन्मातरस्मन्मातामहेत्यादि प्रयोगेष्वपिपितृशब्दोक्तिरेवास्तु । अथमन्त्रेष्वन्यथावृत्तिनिषेधो- नेतेषुप्रयोगेष्विवतितर्हिमन्त्रोह प्रतिपादकवाक्यानांवैयर्थ्यं स्यान्म- न्त्राणांवा यथाप्रयुक्तिरित्युभयथापि यथाविहितमन्त्रोहः सिद्ध-

इति। तथाच कात्यायनः। यथार्थमूहस्योदिते। नप्रकृतावपूर्वत्वा द्द्विर्वचनादिति। विष्णु रपि। आवाहनेस्वधाकारे मन्त्राजह्या विसर्जने। अन्यकर्मण्यनूहास्युरेषश्राद्धविधिःस्मृतः मातामहा- नामप्येवं श्राद्धङ्कुर्याद्विचक्षणः। मन्त्रोहेनयथान्यायं शेषाणांम- न्त्रवर्जित मिति। अपिचैकोद्दिष्टे पिसएव। एकवन्मन्त्रानूहेनैको द्दिष्टइति शेषाणांमन्त्रवर्जित मिति। पितृमातृमातामहव्यति- रिक्त पितृव्यभ्रात्रादीनामूहं मन्त्र वर्जितमित्यर्थः॥

## मू० यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकै कस्मिन्नप आसिञ्चति शन्नोदेवीरिति॥१०॥

यज्ञमर्हन्तियज्ञियाः पालाशादयः। यज्ञर्त्विग्भ्यांघखञाविति घप्रत्ययः। तथाच श्रुतिः। तेवैपालाशास्युरित्युपक्रम्य यदि- पालाशान्नविन्दे दथोअपिवैकङ्कतास्यु र्यदिवैकङ्कतान्नविन्दे दथो- अपिकार्ष्मर्य्यमयाःस्युः यदिकार्ष्मर्यमयान्नविंदे दथोअपिबैल्वास्यु रथोखदिरा अथोदुम्बरा एतेहिवृक्षायज्ञियाइति ब्रह्मपुराणे। पलाशाश्वत्थ न्यग्रोध प्लक्षवैकंकतोद्भवाः। कार्ष्मर्योदुम्बरो- बिल्वश्चन्दनःसरलस्तथा शालश्चदेवदारुश्च खादिरश्चेतियज्ञि- याः। चमसपात्रमक्ष प्रमाणमेक प्रयोजनापेक्षं। अर्थात्परिमा णमिति परिभाषातः धातुमयपरिमाणंवाहीननिषेधात्। पवि- त्राण्यनंतर्गर्भिणं साग्रमिति कात्यायनोक्तानि। पवित्रांतर्हि- तेति अर्घपात्रे पवित्रं निधायोदकं क्षिपेदितिज्ञापयति। कुशं विनोदकस्याप्रयत्नात्। तथाचश्रुतिः। वृत्रोहवा इदंसर्वं वृत्त्वाशि श्ये तस्मै पवित्राभ्यामपहंतीत्युपसंहारः एकैकस्मिन्निति मन्त्रावृत्तिदर्शकं। ततस्तपलाशादि दारुपा-

त्वेषुयथादैवतसंख्येषु द्वेप्रागग्रे सव्यादिना प्रागग्रपवित्रद्वयं पित्रे दक्षिणाग्रेषुदक्षिणासंस्थे ष्वपसव्यादिना पवित्रत्रयं दक्षिणाग्रन्निधाय शन्नइतिमन्त्रेण प्रतिचमसंमंत्रात्यात्यागन्तेऽपआसिञ्चेदित्यर्थः । तथाचविष्णुः । दक्षिणाग्रेषु दक्षिणासंस्थेषु चमसेष्वपआसिञ्चेच्छन्नइति । अत्रकेपवित्रकरणमनुपदेशात्तूष्णीमिति । तन्न । मन्त्रेणविधानात् । तथाच योगियाज्ञवल्क्यः । पवित्रेस्थइतिमन्त्रेण द्वे पवित्रे चकारयेत् । नांतर्गर्भं कुशच्छिन्ने कौशेप्रादेशसम्मिते । अत्रकेपवित्रेस्थइति मन्त्रलिंगस्यपवित्रे करोति कुशैःसमा वग्रशीर्णाग्रौ कुशैश्छिनत्ति पवित्राभ्यामुत्पू नातीत्यादिवाक्यानांच पवित्रत्रये वैयर्थ्यात्पवित्रद्वयमेवपित्र्ये पीति । तन्न । अथोपवीतीशिसुरिति श्रुत्येवस्थलांतरे पवित्रत्रयस्योक्तत्वात् । चतुर्विंशतिमतेपि । द्वे द्वे शलाके देवानांतिस्रस्तिस्रस्तुपार्वणे । एकोद्दिष्टे शलाकैका श्राद्धे ष्वर्घेषुनिक्षिपेत् । यत्तु माध्यंदिनानां द्वे द्वे तु पवित्रे पितृकर्मणीति तन्मंत्रेणपवित्रद्वयच्छेदनपरं । नत्वर्घेपवित्रनिधानपरं । अतश्चपवित्रे स्थइत्यनेनपवित्रेकुशैश्छित्वान्यतृतीयेन सहार्घनिधानमितिसिद्धम् । तथाच हेमाद्रिपद्धतौ । पवित्रेस्थइतिच्छिन्नमगर्भंयत्कुशद्वयम् । कुशरूपेणप्रादेश मात्रन्तत्स्यात्पवित्रकमिति । अत्रविशेषोयज्ञपार्श्वे । ओषधीमन्तरेकृत्वा अंगुष्ठांगुलिपर्वणि । छिंद्यात्प्रादेशमात्रंतु पवित्रंविष्णुदैवतमिति ॥

## मू० एकैकस्मिन्नेवतिलानावपति तिलोसीति ॥ ११ ॥

तिलानितिगंधादयुपलक्षणं । एकैकस्मिन्निति प्रतिपात्रं ति-

लोसीत्यनेनतिलानावपेदित्यर्थः अत्रयत्रानुपदेशात्तिलक्षेपो देव-पात्रेपीत्तिकर्कः । नन्वेकैकस्मिन्नित्यनुवर्तमाने पुनरेकैकस्मिन्निति किमर्थं उच्यते । तिलोसोतिमंत्रेपिपितॄन्प्रीणाहीतिबहुवचनान्तेन पितृशब्देनैकद्रव्यत्वादनूहित सकृन्मंत्रप्राप्त्यर्थं । तथाच । शन्नोदेव्यापयः क्षिप्त्वा तिलोसीत्यावपेत्तिलान् । आवृत्तिः प्रतिपात्रं स्यान्मंत्रस्य:नोहइष्यते । अतस्त्वमंत्रोहोपिस्यादिति । निश्चितमेतदित्येवशब्दार्थः । ननुगंधादिप्रक्षेपोपिमंत्रेण न गंधपुष्पंच तूष्णीमितिवाक्यात् । अतोमंत्रस्यस्वाहांतत्वात्पित्र्येपि स्वाहाप्रयोगः । एवमभिन्नदारुपात्राण्युक्त्वा भिन्नप्रतिप्रसवार्थेन्य पिधातुमयपात्राण्याह ॥

## मू॰ सौवर्णराजतौदुम्बरखड्गमणिमयानांपात्राणामन्यतमेषु ॥ १२ ॥

मणिमयानि शंखशुक्त्यादीनि । एषांमध्येयेषु केषुचिदित्यर्थः तथाचब्रह्मपुराणे । सौवर्णरौप्यताम्राणां स्फाटिकंशङ्खशुक्तयः । भिन्नान्यपिनियोज्यानि पात्राणिपितृकर्मणि । हारीतोपि । काञ्चनेनतुपात्रेण राजतौदुम्बरेणवा दत्तमक्षयतां याति खड्गेनार्यकृतेनतु । आर्याक्लेवर्णिकाः । परिमाणं स्मृतौ । अष्टांगुलम्भवेत्पात्रं पितॄणांरजतंशुभं । दशांगुलन्तुदेवानां सौवर्णन्ताम्रमेवचेति । औदुम्बरन्ताम्रं । धातुसन्निधेःतदुक्तं । प्रसिद्धार्थस्यसान्निध्ये योऽप्रसिद्धार्थउच्यते । तत्सन्निधानसामर्थ्यात्तज्जातीयोनुगम्यतइति । वार्त्तीस्यतुयन्नियत्त्वेनैवसिद्धेः । सुवर्णादिभ्यो मयड्विकारे । राजतंतुपित्र्ये एव । तथाचवायौ । तथार्घपिण्ड भोज्येषु पितॄणांरजतंमतं । अमंगल्यंतुयत्नेन देवकार्येषुवर्जयेत् ॥

## * यानिवाधिद्यान्ते ॥ १३ ॥

वाशब्दः सौवर्णादभावविकल्पे । सौवर्णादिविहितामावेविहित प्रतिषिद्धकांस्याश्मस्मन्मयादीनीत्यर्थः । तेषांयानिवाविदन्तइति सानुशयमभ्यनुज्ञानात् । विहितप्रतिषिद्धत्वं तेषांस्मृत्युक्तं । तथाच ब्रह्मपुराणे कांस्यभांडानिबर्ज्यानि पितृदैवतकर्मणि । पैठीनसिः लोहसीस कांस्य पाषाणहीनपात्राणि भग्नपात्राणिचवर्जयेदिति । कांस्यरजतपर्ण ताम्रपात्राणिभोजनार्थयोग्योपकल्प्यानि । द्वैजवापोपि अयश्मस्मन्मयानिस्युरपिपर्णमयांस्तथा । यानित्रावद्यान्तइति प्रतिविद्धेतराणीतिवा । विहितप्रतिषिद्धानि पूर्वपक्षयसिद्धान्तमाह ॥

## मू० पलाशपत्रपुटेषुवा ॥ १४ ॥

वाशब्दः प्रागुक्तविहितप्रतिषिद्धनिषेधार्थः ॥ तथाचवृद्धयाज्ञवल्क्यः । मृदश्मनौ तथाकांस्य मार कूटादिसंभवं । त्रपु सीसक लोहाना मर्घपात्रम्विवर्जयेदिति । धर्मप्रदीपेपि । मृत्पात्रगतमर्घंच मृत्तिकागंधलेपमं । घृतधूपञ्चयोदद्यान् निराशाः पितरोगताः-कात्यायनोपि । आसुरेणतुपात्रेण यस्तुदद्यात्तिलोदकं । पितरस्तस्यनाश्नन्ति दशवर्षाणिपञ्चचेति । अतोविहितप्रतिषिद्धेभाः पत्रपुटाएवश्रेयस्करादृत्यर्थः । कर्कस्यार्घं मृन्मयस्वीकारस्तुहस्तघटितविषयः । कुलालचक्रनिष्पन्नमासुरं मृन्मयंस्मृतं । तदेवहस्तघटितं स्थाल्यादिदैविकंभवेदितिवाक्यात् ॥

## मू० एकैकस्यैकैकेनददातिसपवित्रेषु-हस्तेषुयादिव्याइति ॥ १५ ॥

एकैकस्येतिपित्रादिनिर्देशः । एकैकेनेति एकैकस्येत्येतावदु-

त्तिरेकेनैवार्घेण त्वयाणान्दाननिषेधार्थो । अतएकैकस्यैकैकेनेति नतन्त्रमित्यर्थः । तथाचकात्यायनः । अर्घेन्त्वयोदकेचैवपिण्डदाने वनेजने । तन्त्रस्यविनिवृत्तिःस्यात्स्वधावाचनिकेजपे । एवञ्चत्वयाणामेकद्विजोपवेशने ऽर्घपात्राणि चौण्येवनद्विजसंख्ययेत्युक्तं । तथाचस्मृतिः । अर्घस्याप्यर्घ्यहेतुत्वाद्दातुः स्वपितृसंख्यया । पूरयेदर्घपात्राणि नविप्राणाञ्चसंख्यया ॥ वैजवापोपि । त्रित्वात्पितॄणांत्रीण्येवकुर्यात् पात्राणिधर्मवित् । एकस्मिन्वाबहुषुवा ब्राह्मणेषुयथाविधीति । स्तोत्वीपविवादिकमितिशेषः । अत्रसन्देहः । वैश्वदेवे एकएवार्घ किंवाद्वौ । उभयथावाक्यदृष्टेः । तथाहि । यज्ञियवृक्षचमसे सपवित्रकइतिशाट्यायननैवसुक्तम् । याज्ञवल्क्योपि । यवैरन्ववकीर्याथ भाजनेसपवित्रकइत्येकमेव । मात्स्ये । विश्वान्देवान्यवैः पुष्पैरभ्यर्च्यासनपूर्वकं । पूरयेत्पात्रयुग्मन्तु स्थापयेद्दर्भपवित्रकमिति । प्रचेतसापि । एकैकस्यतु विप्रस्यअर्घपात्रे-विनिक्षिपेत् । यवोसीतियवान्कीर्यगन्धपुष्पैःसुपूजितमिति द्वयमेव । कर्कादयस्तुएकदेवताकत्वादेकमेवपात्रन्दैवमिति ॥ मातामहश्राद्धे वैश्वदेवस्य पृथक्पात्रद्वयमित्यन्ये । इदन्विचार्यम् । किमत्रविकल्पः किम्वाव्यवस्थेति । व्यवस्थेतिब्रूमः । तथाहि । वैश्वदेवश्राद्धे पक्षद्वयमुक्तम् । तन्त्रपक्षोभेदपक्षश्चेति । तत्रयदि-भिन्नपक्षे एकमित्युच्येत तदामात्स्यवाक्यं व्यर्थंस्यात् । अतस्तंत्र-पक्षे एकमिति तदोभयवाक्यसार्थक्यात् । ततस्तन्त्रपक्षे एकम्भि-न्नपक्षेद्वयमितिव्यवस्थया नग्रन्थविरोधइतिसिद्धम् । सपवित्रेत्वि-त्यार्घपवित्राण्येवोच्यन्ते । हस्तपवित्राणांतु पवित्रपाणयःसर्वइति-स्मृतेरेवसिद्धेः ॥

## मू॰ असावेषतेऽर्घः ॥ १५ ॥

असावितिसंबुध्यंतनामोद्दूपलचणम्। एषतेऽर्घइतिप्रयोगदर्श-
नात्स्वधानिषेधोज्ञायते एतच्चोक्तमासनदाने। ततश्चयथाविहितं
सव्यादिनावामहस्तेः र्घपात्रं गृहीत्वा प्रागग्रपवित्रे देवद्विजकरेद-
त्वा (१) पादप्रभृतिमूर्द्धान्तमप्रदचिणम्पूजांकृत्वा यादिव्याइतिम-
न्त्रेणपुरूरवार्द्रवसनामानौ विश्वेदेवाएषवोऽर्घइत्यर्घंन्दचिणहस्तेन-
देवतीर्थेनदत्त्वा। एवंपित्र्ये पितृचिणाग्रपवित्राणिद्विजकरेदत्वा
शिरःप्रभृतिपादान्तमप्रदचिणं संपूज्य। यादिव्याइत्यनेनार्घंपि-
तृतीर्थेन संबन्धनामादिभिः पितरंसम्बोध्य दचिणहस्तेनैषतेऽर्घो-
स्त्वित्यर्घंदद्यादित्यर्थः। तथाचप्रचेताः। दत्त्वाहस्तेपवित्रन्तु
कृत्वापूजांचपादतः। पादप्रभृतिमूर्द्धान्तं देवानांपुष्पपूजनम्।
यादिव्याइतिमन्त्रेण हस्तेष्वर्घंविनिचिपेत्। ततोवामेनहस्तेन
गृहीत्वाचमसान्क्रमात्। शिरःप्रभृतिपादांतम् नमोवइतिपैतृ-
के॥ पितृत्तीर्थेनतत्तोयन्दद्यात् दचिणपाणिनेति। अत्रैकएक-
द्रव्यत्वादर्घदानकर्मावृत्तौ सकृन्मन्त्रइत्ति। तत्कर्काचार्यैर्निर-
स्तमित्युपेचितं॥

## मू॰ प्रथमेपात्रेसंस्रवान्त्समवनीयपितृभ्यः स्थानमसीति न्युब्जंपात्रं निदधाति ॥ १६ ॥

प्रथमंपात्रंपित्र्यं नदैवं। तथाचस्मृतिः। प्रथमेपितृपात्रे तु
सर्वान्समभृत्यसंस्रवान्। पितृभ्यःस्थानमित्युक्त्वा कुर्यान्न्युब्जमधोमु-
खम्। दैवपात्रमित्येके। तन्न। पितृपात्रइतिविशेषात्। कात्या-
यनोपि। पितृपात्रमुत्तानं कृत्वाविप्रान्विसर्जयेदिति। संस्रवाः

(१) गन्धः सयवंपुष्प आदायचरणादिशिरोन्तकम्॥ अर्चतेत्यर्चनङ्कुर्यादन्तरे-
चोदकन्तथा।

पात्रसंलग्ना अविशिष्टोदकादयः। तथा च श्रुतिः सएषअर्वोह्येवखलु-
परिशिष्टोभवतीति। बहुत्वञ्चशातिलाद्यपेक्षम्। अत्र केचिदैवन्दे-
वेभ्यस्थानमसीत्युक्तानं विधाय पित्र्यंन्युब्जंविधेयमिति। पित्र्यमि-
त्यन्ये। विचार्यमिदम् किंप्रतिश्राद्धं पात्रकरणमुतपितृश्राद्धइति।
यदिप्रतिश्राद्धं तदाद्वादशदैवत्ये पात्रत्रयकम्मन्त्रविरोधश्चस्यात्।
अथमन्त्रोहेनाविरोधइति तर्हि पितृपात्रविध्यनर्थक्यात्। यत्तु प्रथ-
मंपैतृकम्पात्रन्तस्मिन्पैतामहं न्यसेत्।प्रपितामहन्ततोन्यस्यनोद्धरे
न्नविचालयेदितियमवाक्ये पात्रत्रयस्यैवैकीकरणं तन्मातामह श्रा-
द्धपक्षेबोध्यं दृश्यतेचशाखाभेदेतच्छ्राद्धम्। तथाच विष्णुपुराणे।
प्राङ्मुखान्भोजयेद्विप्रा न्देवानामुभयात्मकान्।पितृमातामहानाञ्च
भोजयेच्चेदुदङ्मुखान्। पृथक्तयाकेचिदाहुः श्राद्धस्यकरणंनृप। एक-
त्रैकेनपाकेन वदन्त्यन्येमहर्षयइति। तदेतच्छाखाभेदाभिप्रायम्।
तस्मात्पितृश्राद्धएव सर्वसंस्रवशब्दस्यासङ्कोचेन प्रवृत्तत्वात्पितृभ्यः
स्थानमसीति पितृशब्दस्यसर्वपितृविषयत्वाच्च पितृपात्रमेकमेवन्यु-
ब्जमितिसिद्धम्। ततश्चपितृपात्रे देवादिसर्वपात्र संस्रवान्नि
क्षिप्य पितृद्विजवामतः पवित्रोपर्यधोमुखन्निदध्यादित्यर्थः। तथा
चतृद्धयाज्ञवल्क्यः। सपवित्रं पितुः पात्रं दक्षिणाधोमुखंन्यसेत्।
कात्यायनोपि। कुशवत्यां भूमावधोमुखं कुर्यात्तस्योपरिचकुशा-
निति। शौनकोपि। नोद्धरेत्प्रथमंपात्रम् पितृणांयच्चपातितम्।
आवृत्तास्तत्रतिष्ठन्ति पितरःशौनकोब्रवीदिति। उद्धरेद्यदितत्पात्रं
ब्राह्मणोज्ञानदुर्बलः। अभोज्यन्तद्भवेच्छ्राद्धम् क्रुद्धे पितृगणे गतइ-
ति। मात्स्ये। पितृपात्रन्निधायाथ न्युब्जमुत्तरतोन्यसेत्। अथोत्त-
रइत्युत्तरस्यान्दिशीतिकल्पतरुः। उत्तरशब्दस्यवामवाचकत्वात्।
तथाचलिङ्गम्। उत्तरतआयतनाहिस्त्रीति। कात्यायनस्य कृत्वा-

न्युब्जान्तिलैर्युक्तान्दक्षिणाग्रमतःपरं । पितृपात्रं निदधात्तु देवपित्रोश्चमध्यतइति ॥ उशनाः । गन्धादिभिःपूजयेत्तन्न्युब्जम्पात्रं । वैजत्रापोपि तस्योपरिकुशान्दद्यादेति ॥

## * अक्षगंधपुष्पधूपदीपवाससाञ्च प्रदानम् १७.

तानिसुगन्धीनिकण्टकिजान्यपिदद्यादिति जपादिकुसुमंभिंटीरूपिका सकुरण्टिकाः । पुष्पाणिवर्जनीयानि श्राद्धकर्मणिनित्यशः । जपा ओड्रपुष्पम् । आदिशब्दच्छिल्ल्यादिरक्तानि । रूपिकार्कवर्गः । कुरंटकःपीताम्लानः । स्मृतिमंजूषायां । शिरीष विल्व धत्तूर काञ्चनाराटरूषकं । (१) अर्कंचपारिभद्रञ्चपीतजातींचवर्जयेत् । धूपोगुग्गुलादिः । तथाविष्णुधर्मोत्तरे । धूपोगुग्गुलकोदेयस्तथाचन्दनसारजः । अगरूश्चसकर्पूरस्तुरुष्कत्वक्तथैवच । तुरुष्कःसिह्लकः । त्वग्लवंगं । मरीचिः । चन्दनागुरुणीर्चाभेतमालीसीरपद्मकं । घृताक्तंमधुनाक्तंचगुग्गुलंधूपमेवच । तथा । तुरुष्कंगुग्गुलंचैवघृताक्तंयुगपद्दहेत् । घृतंनकेवलंदद्याद्दुष्टंवातृणगुग्गुलम् । तृणगुग्गुलः । सर्ज्जरसः । धर्मप्रदीपेपि । घृतधूपञ्चयोदद्यान्निराशाः पितरोगताः । कात्यायनः । श्राद्धे धूपंप्रयत्नेन दशांगंमधुमिश्रितम् । दद्यादगरुजंचापि पद्मकन्दे वदारुजमिति । वर्ज्यमाहविष्णुः । जीवजंसर्वंत्वधूपार्थंइति । जीवजं कस्तूर्यादि । दीपोघृतादिद्रवेण । तथामरीचिः । घृताद्वातिलतैलाद्वानान्यद्रव्यात्तुदीपकम् । नान्येतिवसादिनिषेधो नकुसुंभादितैलानां । घृतेनदीपोदातव्य स्त्वथवाप्योषधीरसैः । वसामेदोद्भवन्दीपम् प्रयत्नेनविवर्ज्ज-

---

(१) तुलसीनिषेधोभविष्ये केतकीतुलसीपत्रविल्वपत्रञ्चवर्जयेत् द्रोणंचकरवीरंचधत्तूरं किंशुकन्तथा अन्यच कुन्दंगभोचनोदद्यान्नोन्मत्तङ्करूडध्वजं पिण्डे जातीचनोदद्यात् दैवीमर्कं गणार्चयेत् ॥

येदितिवाक्यात्। वासः। कार्पासादि। तथाकौशेयंचौमकार्पासं दुकूलमहतन्तथा। श्राद्धेष्वेतानियोदद्यात्कामानाप्नोतिपुष्कलान्। चकारो यज्ञोपवीत तुलस्यादि समुच्चायकः। तथा। चंपकंशतपत्रंच भृंगराजंचबालकं। तुलसीमालतीपद्मं पितॄणान्तुष्टिकारकं। तुलसीनिषेधेस्मृत्यर्थसारः। अर्घपिण्डयोर्विधिनिषेधाविचत्रविरोधा इतिकश्चित्। प्रेतश्राद्धशाकविषयो निषेधइत्यन्यः। दीपवस्त्रोपवीतकमित्युक्तम् वस्त्रालाभेयज्ञोपवीतकमितिखादिरं। वृहद्याज्ञवल्क्योपि। तुलसींभृङ्गराजञ्च अपामार्गं शमींतथा। पितृमूर्धनि योदद्यात्सयातिपरमांगतिमिति। अत्र संशयः। किंगन्धादिदानं तन्त्रेणोतप्रतिपुरुषमिति। उभयवाक्यदृष्टेः। तथाहि शाकलायनः। एषतेगन्धः एत्तेपुष्प मेषतेधूप एतत्ते आच्छादनम्। विष्णुरपि। नमोविश्वेभ्योदेवेभ्यइत्येवमादौ प्राङ्मुखेभ्यो निवेद्यपित्रादिभ्यो नामगोत्रेभ्र उदङ्मुखेभ्यइति। ब्राह्मेतु। इदंशासमाच्चप्रदानम्। अत्रेत्यवसार्थइति कर्कादयः तन्त्र। तस्यपाठादेवलब्धेः। तस्मादत्रेतिपात्रे इत्यन्ये। तदपिकर्कादिभिरनादृतम्। अर्घोत्तरं विप्रपूजाविधेः। तथाचबृहद्याज्ञवल्क्यः। दत्वार्घम्पूजयेच्छत्यागन्धधूपानुलेपनैः। मात्स्येपि। यादिव्येत्यत्र मुत्सृज्यदद्याद्गन्धादिकन्ततइति। तस्मादत्रेतिकाण्डानुसमयंसमूच्य। गन्धादिदानेपदार्थानुसमयोद्योतितः। अतोचगन्धादिदानं दैवपूर्वमित्यर्थः। तथावैजवापः। तस्योपरिकुशान्दत्वा प्रदद्याद्दैवपूर्वकम्। गन्धपुष्पञ्चधूपञ्चदीपं वस्त्रोपवीतकमिति। गन्धश्चंदनादिः। तथा। चंदनागरुकर्पूरपद्मकं कुंकुमन्तथा। कस्तूरिकादयोगन्धाः पितृणान्तुष्टिकारकाः पुष्पाणि मल्लिकादीनि तथास्मृतिचन्द्रिकायाम्। मल्लिकामालतीश्वेतयूथि-

काचम्पकं शुभम्। पिण्डीतकङ्कुङ्कुमञ्च पद्मानिजलजान्यपि। उत्पलादीनि देयानिवर्णगन्धयुतानिच। मल्लिका। चित्रकिलः। पिण्डीतकोमरुवकः। मार्कण्डेयः। जात्यश्चसर्वादातव्या मल्लिकाश्वेतयूथिका। वनोद्भवानि सर्वाणि कुङ्कुमानिच चम्पकमिति। ब्रह्माण्डेपि। शुक्लाः सुमनसः श्रेष्ठास्तथापद्मोत्पलानिच। गन्धरूपोपपन्नानि यानिचान्यानि कृत्स्नशः। जातीविषयेविरोधः जात्यश्चसर्वा दातव्याइति। तथा। श्राद्धे जात्यःप्रशस्तास्यु र्मल्लिकाश्वेतयूथिकाः। तगरंमातुलिङ्गञ्च पितृणान्दत्तमक्षयम्। क्रतुस्तुनिषेधति। असुराणाङ्कुलेजातो जातीपूर्वंपरिग्रहे। तस्यादर्शनमात्रेण निराशाःपितरोगताः। अङ्गिराअपि। नजातीकुसुमानि नकदलीपत्रमिति। विकल्पमेके। विप्रपूजादौविधिः। पिंडपूजनेनिषेधः। पीतजातीविषयो निषेधइत्यपरेमतम्। तथाचवृद्धयाज्ञवल्क्यः। कुन्दंगन्धोत्पलंनोदद्यान्नोन्मत्तङ्करण्डजे। पिण्डेजातिञ्चनोदद्या देवीञ्चकरणोयजेत्। जातीपुष्पन्तथार्कंवा किंशुकंकरवीरकं। पितृमूर्धनियोदद्या त्सएवपितृघातकइति। मात्स्ये वर्ज्यानि। पद्मविल्वार्कधत्तूर पारिभद्राटरूषकाः। नदेयःपितृकार्येष्विति। पारिभद्रोनिम्बः। अटरूषोवासकः। शङ्खोपि। उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानिच। पुष्पाणिवर्जनीयानि रक्तवर्णानियानिच रक्तानिजलजव्यतिरिक्तानि। जलोद्भवानिदेयानि रक्तान्यपिविशेष तइतितस्यैवोक्तेः। विष्णुः। वर्जयेदुग्रगन्धीनि तानिकण्टकिजान्यपि वःपुष्पमित्युक्त्वा पुष्पाणिचनिवेदयेत्। अयन्धोधूप इत्युक्त्वा ह्रदान्दीपन्निवेदयेत्। अनङ्गलग्नं यद्वस्त्रम्भिभवेसति तद्दृगं। शङ्खोपि। इदञ्ज्योतिरित्युक्त्वा दीपन्तेषाञ्चप्रदर्शयेत्। नोजशोतिरस्तुतैः सर्वैवंतव्यन्तदनन्तरमिति। कात्यायनेनाप्युक्तं-

थ्योदकादि व्यतिरिक्तगन्धादौ तन्त्रमेवोक्तम्। एवंविप्रतिपत्त्या-वेके सूत्रोक्तत्वादयंवोधूपइति वःशब्दनिर्देशाच्च गन्धादौ तन्त्रप्रतीति रस्मत्पितृपितामहप्रपितामहाः अमुकशर्माण एतेषांगन्धादीनां तृतीयस्तृतीयोंशस्तेभ्यःस्वधेतिप्रयोगइति। अन्येतु। पित्रादीनामग्नीषोमादिव न्मिलितानान्देवतात्वा द्गन्धादीनांच प्रत्येकन्दानस्यविधानाच्च नेदंयुक्तम्। तस्मादस्मत्पितरमुकशर्मं न्नस्मत्पितामहास्मत्प्रपितामह इत्येवङ्गोत्रादुच्चार्य एषवोगन्धःस्वधेति प्रयोगइत्याहुः। विचार्यमिदम्। यद्यग्नीषोमवन्मिलित देवतात्वाभावात्पृथक्सर्वत्रदानमित्युच्येत तदार्घादिव्यतिरिक्तपदार्थेषु तन्त्रविधेर्गोत्राणामासनेप्रोक्तमित्यादि वाक्यानाञ्चवैयर्थ्यं स्यात्। अथासनादिदानेषु तन्त्रविधेर्गंधादिदानेपि तद्युक्तिस्तर्हि-शाङ्खायनादुक्त पृथग्विधेर्वैयर्थ्य मित्युभयथापि संदेहःस्यात्। तस्मादावन्यायसूत्रविधानं तत्र तन्त्रं यत्रपार्थक्यं तत्रतथैवेत्युभयविध्योःसिद्धिः। गंधादिषूभयविधे र्दृश्यमानत्वादुभयानुष्ठानं। गंधाद्यतिरिक्तेतु तन्त्रमितियुक्तम्। अतश्चास्मत्पितरमुकशर्मं-न्नस्मत्पितामहास्मत्प्रपितामहेतिनामादुच्चारणेन पृथगुद्दिश्य-वाक्यान्ते एषवोगंध स्वधेत्युभयथ.वाक्यं युक्तमित्यभाति। गंधादेयाइत्याह कात्यायनः। गन्धान्ब्राह्मणसा त्कृत्वा पुष्पाण्यृतुभवानिच। धूपञ्चैवानुपूर्वेण अग्नौकुर्यादतःपरम्। एवंगंधादिदत्वाऽऽचम्य संपूर्णपृच्छांकृत्वा संस्रवोदकेन पुत्रादिकामो मुखंप्रमार्ष्टि। तथाकात्यायनः। श्राद्धारंभेवसानेच पादशौचे तथार्चने विकरेपिंडदानेच षट्सुचाचमनंस्मृतम्। कात्यायनः। संस्रवान्समवनीय पुत्रकामोमुखमनक्तीति।

इति श्री श्राद्धकाशिकायान्द्वितीयाकण्डिकासमाप्ता॥

*उद्धृत्यघृताक्तमन्नंपृच्छत्यग्नौकरिष्यइति१

घृतोपादानम् शाकादिव्यञ्जननिवृत्त्यर्थम् । तथा । हविष्यं-व्यंजनक्षार रहितं ह्यपसव्यवदिति । घृताक्तमन्नमुद्धृत्य त्वन्वर्थाभिघारणंरंधनपात्र एवाभिघार्य दक्षिणतउद्वास्येति पिण्डपितृयज्ञसूत्रादितिकेचित् । तन्न । तस्यापसव्यादि विधिना साग्नेश्चरुश्रपणविषयत्वात् । अतश्चोधृत्त्य घृताक्तंकृत्वान्नं पंक्तिमूर्धन्यमग्नौकरिष्यइतिपृच्छेदित्यन्वय: । पृच्छेर्द्विकर्मकत्त्वात् । एवंच पात्रांतरेभिघार: सूचित: । तथाकात्यायन: । अग्नौकरणस्याग्नेवै मधुसूक्तं जपेत्तत: । शेषमाज्येनाभिघार्यभाजनानिविशोधयेदिति । ननु दत्त्वापात्राणि विप्रे भ्योजपेदोदनभाजने । आप्यायस्वरुमेतुतइतिपात्रे सुपाचिते ॥ क्षिपेदन्नन्तु सघृतंततोग्नौकरणंभवेदिति पुराणवाक्यात्कथं मधुसूक्तमिति । उच्यते । आप्यायस्वेत्यस्य रन्धनपात्रजप विषयत्त्वात् । ततश्चरंधनपात्रे आप्यायस्वेति जप्त्वापात्रांतरे उद्धृत्यघृतेनाघार्योद्धरणपात्रे मधुसूक्तंजपेदित्यर्थ: । अपसव्ये नाग्नौकरिष्यइति पृच्छेदित्येके । तन्न । सव्येनैवतु पृष्ट्वान्नमपसव्येन होमयेत् । पितृपंक्तिषुमूर्धन्यं तस्यपाणावनग्निमानिति पैठीनसिवाक्यात् । अत्रसंशय: । किं श्राद्धार्थं पृथक्_ पाकउतैकएव । तत्रदेवपितृमनुष्याद्यर्थमेकएवेति कर्कादय: । पृथगित्यन्ये । तद्विचार्यम् । यद्येक एवतदासर्वसामान्येनश्राद्धपाकस्यवैशिष्ट्यानुपपत्ति रिष्टाद्रियत्नविधायकवाक्यंवैयर्थ्यं चस्यात् । अथपृथक्_ तदावैशिष्ट्यं प्रच्छन्नादिपरिस्थितादि यत्नविधायकवाक्यं चसार्थकंस्यात् । तस्मात्पृथगितियुक्तं । तथावायौ । पितृणांनिर्वपेद्भूमौ कूर्चं वादर्भसंस्कृते । व्यासोपि । चांडाल: श्वपचो

वजेऽग्नौनिर्वापेसमुपस्थिते। लौगाक्षिरपि। पित्र्यं निर्वपेत्पाकं वैश्व-
देवार्थमेवच। वैश्वदेवंनपित्र्यर्थं नदार्शं वैश्वदेविकं। देवलोपि।
तथैवर्यं नितोदाता स्नात्वाप्रातः सदाम्बरः। आरभेत न वैधोग्रहे-
रणारभस्तुश्राद्धवैः। तिलानाविकिरेत्तत्र सर्वतोबंधयेदजान्। अ-
सुरोपहतंसर्वं द्रव्यं शुध्यत्यजेनच। ततोन्नं बहुसंस्कारा नैकव्यं
जनभक्ष्यवत्। चोष्यपेयसमृद्धञ्च यथाशक्त्युपकल्पयेदिति। मार्क-
ण्डेयोपि। पृथक्पाकेननेत्यन्ये केचिदिच्छंतिपूर्ववत्। नित्यश्राद्ध-
म्पृथक्पाकेनेत्येके। श्राद्धपाकाद्वैवेत्यन्ये। किञ्च। मातामहपृ
थक्श्राद्धपक्षे पैठीनसिः। विधिहीनेयतः श्राद्धे नाश्नंतिपितृदेव
ताः पृथक्पाकेनैवतस्मा च्छ्राद्धमातामहस्यवेदिति। तस्मात्पृ-
थक्पाकः।

## मू॰ कुरुष्वेत्यनुज्ञातःपिंडपितृयज्ञवद्धुत्वा ॥२॥

द्विजैः कुरुष्वेत्यनुज्ञातः पिंडपितृवज्जुहुयादित्यर्थः। अत्र-
पिण्डपितृयज्ञवदुपचार इतिप्रागुक्तेपिण्डपितृयज्ञवदितिपुनरु-
क्तिः परिसंख्यानार्था। तेनसाग्नेर्यथापिंडपितृयज्ञे परिस्तरणा-
दितथाश्राद्धे नभवति किंत्वपसव्यादिनापर्युक्ष्य मेक्षणेनाहुतिद्वय
माहिताग्नेर्दक्षिणाग्नौस्मार्ताग्नेरौपासने यथोपदेशंभवतीत्यर्थः।
अत्रकेचित्। अग्नौकरणहोमस्य कर्तव्यउपवीतिना। प्राङ्मुखे
नैवदेवेभ्योजुहोतीतिश्रुतिःश्रुतेः। अपसव्येनवाकार्यो दक्षिणा
भिमुखेनच। निरुप्यहविरन्यस्मा अन्यस्मैनहिहूयतइतिकात्या-
यनवाक्यात्सव्येनजुहुयादग्नावग्नौकरणआहुती इतिच्छन्दोग्व-
क्योक्तेस्तोभयवाक्यदृष्टेः साग्निः सव्येनतरोऽपसव्येनेति। तन्न।
सजघनेन गार्हपत्यं प्राचीनावितीतिश्रुत्या पिण्डपितृयज्ञवदिति-

सूत्राच्चोभयोरपसव्येनैवविधेः। उपवीतिनेत्यस्य पूर्वंप्रवृत्त्वा इप-सव्येनेत्यस्य चसिद्धात्वा इपसव्येनैवसर्वेषामित्यन्ये। नेदम-पि। अथातोगोभिलोक्ताना मन्येषांचैवकर्मणामितिकात्यायन-प्रतिज्ञायाः सामगानांसव्येन यजुषामपसव्येनेतिवाक्यद्वयाव्यव-स्थितेः। अतएवातऊर्ध्वंप्राचीनावीतिना कर्तव्यमितिगोभिलेना-ग्नौकरणानन्तरमपसव्यमुक्तं। तस्मात्सामगानांसव्येन यजुषाम-पसव्येनेतिसिद्धं। तथाकात्यायनः। स्वाहास्वधानमःसव्य मपस-व्यन्तथैवच। आहुतीनांयथासंख्या साचगम्यास्वसूत्रतः। वृद्धया-ज्ञवल्क्यः। छन्दोगाजुहुयुःसव्येना पसव्येनयाजुषाइति। अत्रसं शयः। किंसाग्निरग्नौ किम्वाहस्तेग्नौकरणंकुर्यादिति। उभयवि-धवाक्यदृष्टेः। तथामार्कण्डेयः। आहिताग्निस्तुजुहुयाद् दक्षिणा-ग्नौसमाहितः। औपसदेनाहिताग्नि रग्न्यभावेद्विजेप्सु चेति। अत्र-तुशब्दद्वयंसर्वाधानार्धाधानपक्षौसूचयति तेनाहिताग्निःसर्वाधाने दक्षिणाग्नावेवार्धाधानेऔपासनएवजुहुयादित्यर्थःऔपसदे गृह्या ग्नौ। अग्न्यभावोवक्ष्यमाणः। तथा। हस्तेग्नौकरणङ्कुर्या दग्नौवा-साग्निकोद्विजइति। अत्राग्नेः सन्निधानाद्यभावे हस्तेलौकिका-ग्नौवाग्नौकरणं साग्निःकुर्यादितिमाधवस्मृतिचन्द्रिकाकारादयः। उदाहरन्तिच। आहत्यदक्षिणाग्निन्तु होमार्थंवैप्रयत्नतः। अग्न्य-र्थंलौकिकेवापिजुहुयात्कर्मसिद्धये। अन्यथंसोपासनाग्निकार्यार्थं लौकिकाग्नौहोमइत्येके लौकिकेकल्पतरुकारादयस्तुलौकिकमा-वसथ्याग्निमाहुः। विचार्यमेतत्। यद्यग्नेः सन्निधानाद्यभावे सा-ग्नेर्लौकिकाग्निस्वीकारस्तदानपेक्ष्यक्रियोहोमो लौकिकाग्नौ-विधीयतइति मनुवाक्यमनर्थकम्। अग्न्यभावेतुविप्रस्य पाणावे-वोपपादयेदितिनियमभङ्गश्चस्यात्। अथाग्नौकरणमिति यौगि-

कत्वाद्धस्तजलादिभ्यो लौकिकाग्नौविशिष्टत्वाच्च साग्नेर्लौकिके-
एवेतितदा प्रासङ्गिकतीर्थादावपि श्राद्धप्राप्तौलौकिकेऽग्नौकरण-
मतिप्रसज्येत । लौकिकाग्नेः सुसम्पादकत्वादग्न्यभावएव नस-
म्भवतीत्यग्न्यभावेतु विप्रस्येत्यस्यासङ्गतेश्च । तस्माल्लौकिकआव-
सथ्याग्निः । ततश्चहस्ते ऽग्नौकरणङ्कुर्यादग्नौवासाग्निकोद्विज
इत्यत्रवाशब्दोव्यवस्थितविकल्पे । तेनविद्यमानेश्रौतेस्मार्तेवाग्नौ
तत्रहोमस्तदभावेहस्तेन लौकिकइत्यर्थः । अग्न्यभावः पञ्चधा ।
प्रागभावः प्रध्वंसः सन्निहिताभावो धिकाराभावोऽ त्यन्ताभाव-
श्चेति । विवाहात्प्राक्प्रागभावः । तदूर्ध्वमाहृताग्नेः प्रमादादि-
नानाशे पुनराधानात्प्राक्प्रध्वंसः । देशभ्रंशादावरणिसमारो-
पादौकृते सन्निध्यभावः । अशुद्धद्रव्यादिस्पृष्टेग्नौप्रायश्चित्तम्वि-
नाधिकाराभावः । नैष्ठिकब्रह्मचर्येस्वरभावेनात्यन्ताभावइति ।
यस्त्वग्न्यभावः स्नातस्तावद्यावद्भार्यान्नविन्दतीत्यभावउक्तः । सोय-
मप्येकोऽभावइति पृथग्दर्शनार्थं । नत्वयमेवाभावइतिनियमार्थं ।
पूर्वोक्तविभागव्याघातात् । प्रागभावात्यन्ताभावस्थलेऽ ग्न्यभावादे-
वाग्नौहोमाभावः । प्रध्वंसाधिकाराभावयो रावश्यकविधौसां-
कल्पिकमेवश्राद्धम् । अग्नौकरणम् अरणिसमारोपादौसान्नि-
ध्याभावस्या वश्यश्राद्धे साग्नेरपि द्विजहस्तएवहोमइति । तथाव्या-
सः । त्यक्ताग्नेः पार्वणन्नास्ति नैकोद्दिष्टं सपिण्डनम् । अत्यक्ताग्ने-
स्तुपिण्डोक्तिस्तस्मात्संकल्प्यभोजयेत् । आलस्येन नास्तिक्यादिना
वायोग्निंत्यजति तस्यैकोद्दिष्टं पार्वणसपिण्डीकरणादि सर्वश्राद्धे-
ष्वनधिकारोत्तः संकल्प्यभोजयेत् । तद्व्यतिरिक्तस्यानग्ने रग्न्यस-
न्निधानेपि सांगपिण्डश्राद्धे धिकारइत्यर्थः । ततश्च हस्तेग्नौकरणं ।
संकल्पेत्तु । संकल्पश्चयदाकुर्यान्नकुर्या पात्रपूरणम् । नावाहना-

ग्नौकरणे पिण्डांश्चैवनदापयेत् । संकल्प्येतुयदाश्राद्धे नकुर्यात्पा-
त्रपूरणम् । विकरश्चनदातव्य इतिस्पष्टमिहोदितमित्ति । तस्मा-
न्नलौकिकेग्नाविति सिद्धं । अथत्राविधुरादीना मग्नौकरणस्ये-
ध्माधानाज्यभागपूर्वकस्य विधानात्तस्यचहस्तेनुपयुक्तत्वात्तद्विषयो
लौकिकाग्निस्वीकारः । यदुक्तं हस्तेहोम इति तत्किन्देव-
द्विजकरे किंवापित्र्यइति । उभयथाप्यनेकवाक्यदृष्टेः । तथायमः
नाग्नौकरणवत्तत्र होमोदैवकरोभवेत् । पर्यस्तदर्भानास्तीर्य यतो-
ह्यग्निसमोद्विजइत्ति । कात्यायनोपि । मातामहस्यभेदेपि कुर्या-
त्तन्त्रस्यसाग्निकः । भेदेपृथग्वैश्वदेव श्राद्धे तन्त्रे चसाग्निके । मा-
तामहस्यापि मातामहद्विजकरेप्यग्नौकरणंकुर्यादितिपित्र्यकरे-
प्यर्थादुक्तम् । तथा । अनग्निकस्यविप्रस्य हस्ते ग्नौकरणंभवेत् ।
दैवपूर्वंहितत्कुर्यात् पितृभ्यस्तदनन्तरम् । अन्यच्च । अनग्निकस्तु-
योविप्रः श्राद्धं कुर्वीतपार्वणम् । दैवपाणौहिहुत्वादौ शेषंदद्यात्तु-
पैतृके । यमोपि । दैवविप्रकरेऽनग्निःकृत्वा ऽग्नौकरणंद्विजइति ।
एवंविवादेदैवपित्र्यकरयोर्विकल्पइत्त्यके । साग्निःपितृकरे निर-
ग्निर्दैवइत्त्यन्ये । इयमपिविचार्यं । आद्येसाग्नेरग्निसन्निध्यादौ ।
पित्र्यद्विजहस्तएवानुकल्पत्वेन विधानात् । द्वितीयेतुश्राद्धविशेषा-
णये वहस्तेहोमस्यत्रावस्थितत्त्वे नासार्वत्रिकत्वात् । पिण्डपितृय-
ज्ञवदित्यतिदेशेन प्राचीनावीतादिप्राप्तौ देवद्विजकरेतद्धर्मानुप-
पत्तेश्च । तस्मात्साग्नेरग्न्यसान्निध्यादौ काम्यादिचतुःश्राद्धेषु पि-
त्र्यद्विजहस्ते । इतरत्वाग्नाविति सिद्धम् । तथागृह्यम् । अन्वष्टक्या-
चपूर्वेद्युर्मासिमास्यथपार्वणम् । काम्यमभ्युदयेऽष्टम्यां मेकोद्दिष्ट-
मथाष्टमम् । चतुर्ष्वाद्येषुसाग्नीनांवन्हौ होमोविधीयते । पित्र्यब्रा-
ह्मणहस्तेस्या दुत्तरेषुचतुर्ष्वपीति । अन्वष्टक्यांनवमीश्राद्धम् । पूर्वे-

द्गु:सप्तमीश्राद्धम् । मासिमासिकृष्णपक्षश्राद्धम्पार्वणममायांकार्य्यं । कृत्तिकादिनक्षत्रवारादौ । अभ्युदयो वृद्धिश्राद्धं । अष्टम्यामष्टकाश्राद्धं । एकोद्दिष्टंसपिण्डीकरणलक्षकम् । तत्राहिताग्नेःसर्वाधानपक्षे दक्षिणाग्नौ अर्धाधानेश्रौपासनेस्मार्त्ताग्नेः सत्त्वाग्नौतत्त्वच । उभयोरप्यग्न्यसन्निधावावश्यकश्राद्धे सन्निहितेप्यग्नौ काम्यादि चतुःश्राद्धेषुच पित्र्यद्विजहस्तएव । निरग्निवाजसनेयिप्रभृतीनांपिंडपितृयज्ञातिदेशा दपसव्यादिनापित्र्यद्विजहस्तएव। साग्निसामगादीनामग्न्यसन्निधौ सव्यादिनादैवपित्र्यकरयोर्विकल्पः । निरग्नीनान्तत्र मप सव्यादिनादैवद्विजकरएवेतिसिद्धम् । यत्तु पित्र्ये यःपङ्क्तिमूर्द्धन्य स्तस्यपाणावनग्निमानिति कात्यायनवाक्यम् । तस्यसामगपरत्वेऽयमर्थः । पित्र्यदैवपितृमातामहश्राद्धे यःपंक्तिमूर्द्धन्यःप्रथमोपवेशितदैव द्विजइत्यर्थः । शाखांतरेतु पैठीनसिः। पितृपंक्तिमुमूर्द्धन्य स्तस्यपाणावनग्निमानितिप्राग्दर्शितं। नन्वग्नौकरणम् किंप्रतिश्राद्धं किंवैकमिति । तदुक्तम् । दैवपूर्वंहितत्कुर्या त्पितृभ्यस्तदनन्तरम् । कात्यायनोपि । मातामहस्यभेदेपि कुर्यात्तं नैवसाग्निकइति।अस्यार्थःपूर्वमुक्तः। माधवीये दैवद्विजकरपक्षेमातामहपंक्तावपि पृथगद्वितीयमग्नौकरणमिति।पारिजातेतु । मातामहपृथक्श्राद्धपक्षे तत्पंक्तावग्नौकरणं। अग्निसन्निधौ साग्निःकुर्यादिति । एतदाचाराभावाच्चिंत्यं । आश्वलायनविषयंवा होमद्वयम् । वाजसनेयिनांत्वेकएव होमः । तथा । वैश्वदेवेयदैकस्मिन् भवेयुर्ब्राह्मणाःद्विजाः । तदैकपाणौहोतव्यं स्याद्विधिविदितस्त्वेति वाक्येवैश्वदेवइत्यस्य पित्र्योपलक्षणत्वेनै कपाणावेवनहोमद्वयमिति । तथाऽऽहहाहूवाक्यः । मातामहेषुयोदद्यादग्नौकरणआहुती । निराशाःपितरस्तस्य पैशा-

चं श्राद्धमुच्यतइति। यद्वासाग्नेरुभयत्र निरग्नेरेकत्रे तिव्यवस्थे-त्यविरोधः।

## सू० हुतशेषन्दत्वा पात्रमालभ्य जपति पृथिवीतइति ॥ ३ ॥

पात्रमित्युद्देश्य गत मेकत्त्वमविवक्षितम्। ज्योतिष्टोमे दशापवित्रेण ग्रहसंमार्ष्टीतिवत्। अतःसर्वपात्रालम्भः। १ कांस्यपात्रपरिमाणंस्मृतौ। पञ्चाशत्पलिकं कांस्यंतदधिकम्भोजनायवै। गृहस्थैस्तुसदाकार्यं मभावेहेमरूप्ययोरिति। आलभ्यजपतीति नमस्कान्तर आलम्भः। अत्रसंशयः। किंहुतशेषमात्रन्दत्वा पात्रालम्भ उतसर्वान्नंपरिविष्येति। उभयवाक्यदृष्टेः। तथा। स्कान्दे। विप्रपात्रे पृथिवीतइति चान्नाभिमन्त्रणम्। इदमन्नञ्च साङ्गुष्ठं ततोन्नपरिवेषणम्। याज्ञवल्क्योपि। हुतशेषम्प्रदद्यात्तु भाजनेषुसमाहितः। यथालाभोपपन्नेषु रौप्येषुतुविशेषतः। दत्वान्नम्पृथिवीपात्रमिति पात्राभिमन्त्रणमिति। साग्निःपूर्वम्परिविष्य हुतशेषन्दत्वा पात्रमालभेत निरग्निस्तुहुतशेषन्दत्वा न्नंपरिविष्य पात्रमालभेत। अन्नेषुपरिष्टे षु हुतशेषन्दद्यात्येतिवचनादित्येके। तन्न। साग्निर्हुतशेषंदत्त्वैवपरिवेषयेदितिक्रमस्य शौनकोक्तत्वात्। तथा। हुत्वाग्नौपरिविष्टन्तु पितृपात्रेष्वनन्तरम्। निवेद्यैवापसव्येन परिवेषणमाचरेदिति। हुतशेषमपसव्येन निवेद्येत्यन्वयः। यदुक्तं निरग्निर्हुतशेषंदत्वान्नम्परिविष्य पात्रमालभेतेतितन्न। अन्नेषुपरिविष्टे ष्वितिवचनस्यवैयर्थ्यापत्तेः। ततश्चसाग्निर्हुतशेषंदत्वा न्नम्परिविष्य व्यस्तपाणिभ्यांपात्रमालभेत। निरग्निरन्नं-

(१) भोजनपात्रे पलाश पत्रमश्वत्थपत्र वर्जितम् हेमाद्रौ पलाशेभ्योविनान्यस्तु पर्णपात्राणिभोजने अपिवाकांस्यपात्रेतु देवेपित्रेचवाहविः॥

परिविष्य हुतशेषन्दत्वा तथैवपात्रमालभेतेत्यर्थः। विप्रपात्रे पृथिवीतइतिवाक्ये एतते नपरिवेषणमित्यत्रान्नशब्दो योगेनव्यञ्जनपरस्तेननान्नपरिवेषणस्य पात्रालम्भनानन्तर्यविरोधः। तथापुराणसमुच्चये। भाजनालम्भनङ्कुर्याद्दत्वा चान्नंयथाविधीति। १ स्वस्तपाणित्वंपात्रे। दक्षिणन्तुकरंकृत्वा वामोपरिनिधायच। दैवंपात्रमथालभ्यपृथिवीतेपात्रमुच्चरेत्। २ दक्षिणोपरिवामञ्चपित्र्यपात्रस्यलक्षनमिति। अत्र केचिद्धुतशेषन्दैवपात्रे नपुनर्देयमिति। तथायमः। अग्नौकरणशेषन्तुपित्र्ये पिप्रतिपादयेत्प्रतिपाद्यपितॄणान्तुनदद्याद्वैश्वदेविके। शौनकोपि। हुत्वाग्नौपरिशिष्टन्त्विति प्रागुक्तः। वायुपुराणेपि। हुत्वादेवकरेणाग्निं शेषंपित्र्ये निवेदयेत्। नहिस्मृताःशेषभाजो विश्वेदेवाः पुराणगैरिति। अन्ये त्वविशेषात्सर्वेष्वपिदेयमिति। सूत्रकारोपि। दैवपूर्वंश्राद्धमिति। अत्रोच्यते। आद्योयदुक्तंनदेयमिति तन्न। वाक्यार्थानवबोधात्। तथाहि। अग्नौकरणशेषन्तु पित्र्येपीत्यपिशब्दाद्दैवेपिशेषदानोपपत्तेः। पितृणाम्प्रतिपाद्यवैश्वदेवेनदद्यात्किन्तुप्राग्दैवे ततःपि पित्र्येत्यर्थोपिलभ्येत। यदुक्तं हुत्वाग्नावितिवाक्यं तत्साग्निविषयम्। यदप्युक्तं हुत्वादेवकरेइति तत्रदैवेहुतशेषस्य पित्र्ये दद्यान्नतुवैपरीत्येत्यर्थः। अतोर्थानवबोधादित्युक्तम्। नेतरः। उक्तहेतोःसाग्निनिरग्न्योर्विशेषावगतेः। ततन वोभयवाक्यस्यत्वविशेषोयुक्तः। कुत्रचिद्विषयान्तरस्याद्दृष्टेः। ततनसाग्नेरग्निहोमोत्तरं हुतशेषदानं पितृपात्रेष्वेव। निरग्नेर्दैवकरहोमे पितृपात्रेष्वेव पित्र्याकरहोमेतु निरग्नेर्दैवादिसर्वपात्रेषु

(१) प्रचेताः उत्तानंदक्षिणं सव्ये नीचम्पात्रमुपस्पृशेत ॥

(२) पितरो तु विशेषः उत्तानेनतुहस्तेनकुर्वीतावगाहनं ॥ असुरंतद्भवेच्छ्राद्धम्पितृणांनो पतिष्ठतेरितिविष्णुः ॥

हुतशेषदानमितिसिद्धम् । तथाशाकलायनः । हुतशेषंप्रागेवदत्त्वा पश्चात्पिबेदिति । कात्यायनोपि । विप्रपाणौततोहुत्वा दद्याच्छेषंपृथक्पृथक् । देवानामादितःकृत्वा पितृपात्रेषुचक्रमात् । वृद्धमनुः । दैवपूर्वंयतःश्राद्धं तस्माद्दद्यात्प्रयत्नतः । अग्नौकरणशेषञ्च देवानामादितःक्रमात् । वैश्वदेवादितःसर्वं विकिरंपिंडवर्जितं । अग्नौकरणशेषंय त्प्रदद्याद्वैश्वदेविके । धर्मप्रदीपेपि । कुशेषूत्तानपाणिस्तुजुहुयाद्वैहुतस्नुतं । शेषंदेवायदातव्यं पितृभ्यस्तदनंतरमिति । साग्निर्दैवपूर्वंदद्या न्निरग्निर्नैत्यविरोधइत्येके । एवंदत्त्वापिंडार्थमवशेषयेत् । तथाहारीतः । हुतोच्छिष्टंब्राह्मणेभ्यः पिंडार्थमवशेषयेत् । धर्मप्रदीपेपि । अग्न्यभावेतुविप्रस्य हस्तेहुत्वातुदक्षिणे । शेषयेत्पितृविप्रार्थंपिंडार्थंशेषयेत्तथेति ।

**मू० वैष्णव्यर्चा यजुषावांगुष्ठमन्नेवगाह्यापहता इतितिलानवकीर्येति ॥ ४ ॥**

वाशब्दो समुच्चये। (१) वैष्णवीऋक् इदं विष्णुरित्यादिका । (२) यजुश्च विष्णोर्हव्यं रक्षेति ततएकतरेणानखंद्विजांगुष्ठमन्ने निवेश्य अपहता इत्यनेनतिलान्पात्रसमन्तात् प्रदक्षिणादिक्रमेणविकरेदित्यर्थः । निरङ्गुष्ठम्प्रदत्तं हि पितॄणान्नोपतिष्ठतइतिवाक्यात् । नोपतिष्ठत इत्यासुरंभवतीत्यर्थः । तथायमः । निरङ्गुष्ठन्तु यच्छ्राद्धं वहिर्जानुचयद्धुतं । वहिर्जानुचयद्भुक्तं सर्वमेवासुरम्भवेदिति । अत्रैके तिलानन्नपात्रेष्वेवावकिरति तन्न । तिलान्सर्वत्रनिक्षिप्य पितृपात्रेषुवर्जयेत् । पितृपात्रे तिलान्दद्यान्निराशाः पितरोगता इतिवचनात् । पराशरोपि । सर्वदाचतिलाग्राह्याः श्राद्ध-

(१) नियताक्षरपादावसानाऋक् ॥

(२) अनियताक्षरत्वम् अपादावसानत्वंयजुः ॥

कालेविशेषतः। पात्रेषूपतितान् दृष्ट्वा निराशाःपितरोगताइति।
यत्तु ततोमधुष्टताक्तन्तु सोष्णमन्नन्तिलान्वितं। गृहीत्वादेवतीर्थेन प्रणवेनान्नतत्पुनः। एत्तद्दोऽत्रमिरयुक्त्वा विश्वेदेवांस्तुभोजयेदित्यत्र तिलान्वितत्वमन्नस्योक्तं तद्देशविषयंवा। तथामात्स्ये। उभाभ्यामपिहस्ताभ्यां माहृत्यपरिवेषयेत्। प्रशांतचित्तःसतिलं दर्भपाणिरशेषतइति। सतिलमन्नंहस्तद्वयेन परिवेषयेन्नैकेनेत्यर्थः। तथा एकेनपाणिनादत्तं शूद्रादन्नंनभक्षयेत्। पुराणेपि। नापवित्रेणहस्तेन नैकेनविनाकुशान्। नायसेनायसेनैव श्राद्धेतुपरिवेषयेदिति। आदायायसेसप्तमी। तत्पात्रेन्नं नधार्यमित्यर्थः। सौवर्णराजताभ्याञ्च खड्गेनौदुम्बरेणवा। दत्तमक्षयतांयाति फल्गुपात्रेणचान्यथेति वाक्यात्। फल्गुउदुम्बरः। पवित्रेणेति सपवित्रकरः स्वयम्परिविष्येदित्यर्थः। फलस्यानन्ततापोक्ता स्वयन्तुपरिवेषणे इतिवायुवाक्यात्। यत्तु परिवेषणं प्रशस्तंहि भार्ययापितृतृप्तये। पितृदेवमनुष्याणां स्त्रीसहायायतःस्मृतेति। तदन्यापेक्षया स्वायत्तौ वावेदितव्यं। नविनाकुशानिति केवलनिषेधः। हस्तेदत्वातुयः स्नेहं व्यञ्जनंलवणादिकं। दातारोनोपतिष्ठन्तेभोक्ताभुङ्क्तेतुकिल्बिषं। घृतंवा यदिवातैलं विप्रोदद्यान्नखच्युतम्। यमस्तदशुचिंप्राह तुल्यंगोमांसभक्षणमितिवाक्यात्। कात्यायनोपि। दर्व्यादेयंघृतान्नञ्च समस्तव्यञ्जनानिच। अपक्वंस्नेहपक्वंवा नतुदर्व्याकदाचन। स्नेहात्कञ्चतथाऽपक्वम्। दर्व्याचादातुमिच्छति। सभूणहासुरापश्च सस्तेयीगुरुतल्पगः। यमोपि। चतुःश्रोतसमायुक्तो हस्तेनोन्मार्जयेद्घृतम्। उभावधोव्रजेयाताम् दाताभोक्तानसंशयः। उन्मार्जनंशोधनम्। स्रुतंनखैश्चतुर्भिश्च योदद्यात्पाणिनाघृतम्। दातापुण्यंनवाप्नोति भो-

श्रापयगतश्चरेदिति । अयइताद्वति पित्रो एव नदेवे तत एवरखो-घृत्वादितिककः । तूष्णींयवान्विकरेदित्यन्ये । अत्र यद्यप्यन्नादि कव्यनं नोक्तं तथापीदमन्न मिमाआप इदमाज्य मिदंहव्य मित्य-न्नादिकल्पनङ्कार्यम्।तथाकात्यायनः।उभाभ्यामपिहस्ताभ्यां पात्रं-धृत्वातुतन्नइडम् । नोच्चरेद्दिचिप हस्त मन्नन्तस्कालपर्येत्सदा।तथा। स्पर्शनान्तेस्पृशेदन्नम् नकल्पान्तेवलिंहरेदिति । अवक्रव्यादि नोच्चरेदिति कश्चित्तन्न । विष्णोहव्यञ्च कव्यञ्च ब्रूयादवेतिवैक्र-मादिति मनूक्तेः । पुराणसमुच्चये । हव्यंदैवेसमुच्चार्यं पितॄणांक-व्यमेवच । कव्यस्योच्चारणादेव प्राप्नुयुस्तृप्तिमुत्तमां । कव्यादापित-रःप्रोक्ता स्तस्मात्कव्य प्रकीर्तयेदिति । ननु किंपरिवेषणे सव्या-पसव्य विधिरस्तिनवेति । तत्रालीत्यके । तन्न । उभयत्रसव्येन विधेः । तथाकार्ष्णाजिनिः । अपसव्ये नकर्तव्यं पित्रग्रहणस्य विशेषतः अन्नदानाद्वतेसव्य मेवंमातामहेष्वपि । भुजबलोपि । सर्वकर्मा-पसव्येन पितृकर्मणिकुर्वता। अन्नदानाद्वतेकार्यं तदद्विपविसर्ज-नमिति । तथा । एकपंक्त्युपविष्टानाम् विप्राणांश्र द्धकर्मणि । भक्ष्यंभोज्यासनन्ददद्या द्विपरीतन्तुनिःफलम् ॥

## सू० उष्णं स्विष्टमन्नंदद्यात् ॥ ५ ॥

उष्णमिति पर्युषितापूपादिनिवृत्त्यर्थम् । तेनस्वत्य ल्पमपिप-र्युषितमपूपादि श्राद्धे नदद्यादित्यर्थः । तद्धिश्च । यवगोधूमजंसर्वं पायसश्चैवविक्रिया।तत्पर्युषितमप्यद्यं स्नेहाक्तञ्चैवयद्भवेदित्यादि । पर्युषितमप्यभुक्तदेयमित्येके । तथायमः । अपूपाश्चकरम्भाश्च । धानावटकसक्तवः । शाकम्मांसमपूपञ्च घृतकेसरमेवच । यवागुःपा-यसञ्चैव यच्चान्यत्स्नेहसंयुतम् । पूर्वंपर्युषितम्भोज्यं भुक्तान्त्वेतपरिव-र्जयेत् । देवलोपि । अभोज्यंप्राङ्गराहारं शुक्तंपर्युषितञ्चयत् ।

अत्रब्रीह्यादिषु अपूपभक्षणार्थं पुनरपूपोक्तिः। शष्कुलोपि। दधिभ-
क्ष्यञ्चशुक्तेषु सर्वंसुदर्शिसंभवम्। कृचीसपक्वभक्ष्यंस्या त्सर्पियुक्त-
मितिस्थितिरिति। तन्न। अभुक्तपर्युषितस्य दृष्टादिदोषोपहतत्वेन
नित्यभोजनविषयत्वात्। तेषामप्युष्णानामेव श्राद्धोपयोगात्।
तथाश्रादित्ये। विविधम्पायसंदद्या द्भक्ष्याणिसुबहूनिच। लेह्यं
चोष्यं तथापेय मुष्णमेवफलंविना। वायौ। भक्ष्याण्येवकर-
म्भाश्च इष्टकाघृतपूरिकाः। कृशरामधुसर्पिश्च पयःपायसमेवच।
स्निग्धोष्णानिचयोदद्या दग्निष्टोमफलंलभेदिति। करम्भादधि-
सक्तवः। इष्टकाः कासारखण्डाः। कृशरस्तिलकल्कयुक्तौदनः।
स्विष्टमिति सुशब्देननैर्मल्यं विविधत्वञ्च दर्शयति। तथायमः।
ततोविशदमन्नाद्यं भोजयेत्प्रयतोद्विजान्। अन्नंसूपंघृतंशाकं मां-
सन्दधिपयोमधु। धानाश्चमधुसंयुक्ता इक्षूंश्चैवसगोरसान्। शर्करां-
फलमूलञ्चसर्वन्ददद्यादमत्सरीति। मनुरपि। भक्ष्यंभोज्यञ्चविविधं
मूलानिचफलानिच। हृद्यानिचैवमांसानि पानानिसुरभीणिच।
विविधमित्येकान्ननिषेधः। ततोन्नवहुसंस्कारं नैकव्यञ्जनभक्ष्य-
वत्। चोष्यंपेयसमृद्धन्तु यथाशक्त्युपकल्पयेदितिवाक्यात्। अन्न-
मित्त्यादनीयम्। अन्नमितिपक्वसंज्ञावा स्यांचेवगतप्राङ्गः सतुषं-
धान्यमुच्यते। आमान्नंसतुषंज्ञेयंपक्वमन्नमुदाहृतमितिवाक्यात्।
तेनसंभवेसत्त्यामान्नादिक न्नदेयमित्यर्थः। दद्यादिति यथोक्त-
संकल्पवाक्य न्दर्शयति। अत्रैके। अर्घ्येक्षय्योदकेचैवेति कात्या-
यनेनान्नदाने तन्त्रस्यदर्शितत्वा दस्मत्पितृपितामहप्रपितामहा-
मुकशर्माण इत्याद्युच्चार्यतृतीयस्तृतीयोंश सेभ्य स्वधेत्तिमं-
त्रेणदद्यादिति। अन्येत्वन्नंवासावेतत्तइत्युद्दिश्य भोजयेदि-
तिशांखायनोक्ते रमुकामुकगोत्रैतत्तुभ्यमन्नंस्वधानम इतिब्राह्मा-

त्तोस्त्र । पृथगुद्दिश्यदद्यान्नतन्त्रेणेति । एवंसत्यस्मत्पितरमुकशर्म-
न्नस्मत्पितामहास्मत्प्रपितामहेत्यादि पृथक्पृथगुद्दिश्य वाक्यान्ते
इदमन्नंसघृतादि वःस्वधानमइत्त्युभयथा वाक्यमुचितमित्त्यप्रा-
भाति। तन्त्रपार्थक्ययोरुपदेशात् । अथच ब्राह्मणवित्तसंपत्त्या वे-
कैकस्यापित्रयः । एकोवैकस्त्भोक्तव्य स्त्रयाणामेकएववेतिवाक्या
त्पृथग्द्विजपक्षेपृथगुपदेशः । त्रयाणामेकद्विजपक्षे तन्त्रेणेत्यविरो-
धः । अत्रैके इदमन्नंवःस्वधेतिसंकल्पे नममेतित्यागंनकुर्वन्ति-
तन्न । स्वसत्तानिवृत्तेरुक्तत्वात् । तथास्मृतिः । हस्तेनमुक्तमन्नाद्य-
मिदमन्नमुदीरयेत् । स्वाहेतिचततःकुर्या त्स्वसत्ताविनिवर्त्तनं ।
सम्बन्धगोत्रनामानि इमन्नन्ततःस्वधा । पितृक्रमादुदीर्यंते स्व-
सत्तांविनिवर्त्तयेत् । धर्मप्रदीपेपि । ततोन्नं पितृदेवेभ्यः संकल्प्य-
चयथाविधिः । दत्तंयद्ददास्यमानंतत् आत्मनेनममेतिच । एतत्सं-
कल्पोदकंहस्ते नदेयम् । तथाधर्मप्रदीपेपि । सिद्धान्नस्यतुसंकल्पो
भूमावेवप्रदीयते । हस्तेषुदीयमानंय त्पितॄणांनोपतिष्ठते । भूमि-
र्जननी सर्वेषांभूतानांचविशेषतः । तत्रोपतिष्ठतेन्नं तु नचहस्ते-
कदाचन । स्मृतिमंजरीकारोपि ।दीपमन्नंचपिण्डञ्च भूमौदद्या-
द्विचक्षणः । पूर्वंदानानिविप्राणां करेदद्याच्चदक्षिणे । तथा । ति-
लदर्भसमायुक्तं तोयंभूमौप्रदापयेत्।पात्रस्यसन्निधौपित्र्ये दैवेयव-
समन्वितं । वैश्वदेवस्यवामोरु पितृपात्रस्यदक्षिणे । संकल्पोदक-
द नंस्यानित्यश्राद्धं यथाविधीति। अकृतेन्नसङ्कल्पेन्नं द्विजानस्पृशे
युःपात्रञ्चनोद्धरेयुः । तथास्मृतिः।असङ्कल्पितमन्नाद्यम्पाणिभ्यांयदु-
पस्पृशेत् । अभोज्यंतद्भवेद्दत्तं पितॄणांनोपतिष्ठते ।अकृतेत्वन्नसङ्क-
ल्पेय पात्रञ्चोद्धरेद्द्विजः । वृथाश्राद्धमवाप्नोति दाताचनरकंव्रजेदि-
ति । सङ्कल्पोत्तरमपोशाना त्प्रागन्नंनगृह्णीयात् । तथातत्रैव ।

अन्नं दत्तं न गृह्णीयाद्यावत्तोयं न सम्पिबेत्। अपीत्वा मर्दितं चान्नं भुं-
जते किल राक्षसाः। तथा हस्तेनान्नं न गृह्णीया द्यावत्तोयं न सम्पि-
बेत्। अपीत्वा मर्द्दयेदन्नं निराशाः पितरो गताः॥

## मू० शक्त्या वा॥ ६॥

वाशब्दोऽभावविकल्पे। स्विष्टाभावे यथाशक्ति दद्यादित्यर्थः। अ-
त्राप्यशक्तौ मांसगोधूमादे रावश्यकत्वं बोध्यं। तथा स्कान्दे। श्राद्धे
मांसं न यो दद्यान्नराः शास्त्रविकुतर्कतः। नरकार्हावुभौ श्रौत स्मार्त-
कर्मविलोपनात्। हृद्द्याज्ञवल्क्योऽपि। विनामांसेन यच्छ्राद्धं कृत-
मप्यकृतम्भवेत्। क्रव्यादाः पितरो यस्मा द्द्वाभेपायसादयः। जातू-
कर्ण्योऽपि। दारवान्यो द्विजः श्राद्धे दद्यान्नो मांसमध्वरे। स दुरात्मा
दुराचारो वेदमार्गस्य दूषकः। स्कन्दसंवादे। रोमाणि कूर्मपृष्ठे च
शृगाणां च्छश्रुसंभवः। व्योम्नश्चेन्मुष्टिनाघातः साध्य च्छेद्रतपार-
पुः तदेतितवते स्कान्दःस्तं श्राद्धं निरामिषम्। तस्मात्सर्वप्रयत्नेन श्रा-
द्धं देयं हिंसामिषम्। अभोज्यं विप्रान्नं श्राद्धे मांसमन्यासुवर्जयेत्।
स्वयमश्नाति वा मूढः स याति नरकं ध्रुवम्। श्रुचिः। अगोधूममन्न-
यच्छ्राद्धं कृतमप्यकृतं भवेदिति। क्वत्र। फलमूलाशनै मेध्यैर्मुन्य-
न्नानाञ्च भोजनैः। न तत्फलमवाप्नोति यन्मांसपरिवर्जनादिति म-
नूक्तेः। मुन्यन्नम्ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः। मधुप्रधानं शू-
द्रस्य सर्वं ग्रामविरोधि यदिति पुलस्त्याद्युक्तेश्च। मुन्यन्नप्राधान्यावगमा
न्मांसं क्षत्रियविड्विषयम्। न विप्रस्येत्य के। क्रयादिलब्धमांसेन श्रा-
द्धम् न प्राणिहिंसापूर्वकमिति। तथा मनुः। नाकृत्वा प्राणिनां हिं-
सां मांस मुत्पद्यते क्वचित्। न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विव-
र्जयेत्। समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम्। प्रसमीक्ष्य नि-
वर्त्तेत सर्वमांसस्य भक्षणात्। भारते भीष्मोऽपि। न हि मांसं तृणा-

त्काष्ठा दुपलाद्वापिजायते । हत्वाजन्तून्भवेन्मांसं तस्मात्तत्परि-
वर्जयेत् । एकस्यक्षणिकाप्रीति रन्यःप्राणैर्वियुज्यते । अहोमांस-
स्वदौरात्म्यं प्रत्यक्षमिहदृश्यते । किञ्च । यूपञ्छित्वापशुंहत्वा
कृत्वारुधिरकर्दमं । यद्येवङ्गम्यतेस्वर्गे नरकेकेनगम्यतइत्यन्ये ।
कलिविषयोमांसनिषेधो विधिस्त्वन्यविषयइति । तथा अक्षतागो
पशुश्चैवश्राद्धे मांसन्तथामधु । देवरेणसुतोत्पत्तिः कलौपञ्चविवर्ज-
येदित्यपरे । देशविषयोनिषेधइत्यन्ये । तस्माच्छ्राद्धे मांसनिषेध-
इति । अत्रोच्यते । यदुक्तंमुन्यन्नं ब्राह्मणस्येति प्रधान्यान्मांसं-
क्षत्रियविड्विषयं नब्राह्मणस्येति । तन्न । मांसादुत्कृष्टस्वभावएव-
मुन्यन्नादिप्राधान्योपपत्तेः । तथा आत्रेयः । मुन्यन्नामिषमाध्वीकै
र्विप्रद्विजजघन्यजाः । श्राद्धंविदध्युरसति द्रव्येऽसतिवापरैः । मा-
ध्वीकंमधु । द्विजौक्षत्रविशौ । जघन्यजाः शूद्राः मांसादिद्रव्ये-
ऽसति मुन्यन्नादिभिः क्रमाद्विप्रादयःश्राद्धंकुर्युः सतितुमांसादौ-
तेनैव । तथावृद्धशातातपः । मुन्यन्नामिषमध्वाज्यै रभावेप्रोक्त-
वस्तुनः । क्रमाद्विप्रादिभिर्वर्णैर्विधेयमितिशुश्रुम । परमान्ने-
नमांसेनशाकैर्मधुघृतादिभिः । सर्ववर्णैःप्रकर्तव्यं श्राद्धंवैवित्तशा-
ठ्यतः । वृद्धमनुरपि । मुन्यन्नैर्ब्राह्मणाःश्राद्ध मामिषैर्वाक्षत्रसम्भवाः
ऊरव्यामधुनाकुर्युः शूद्रामूलफलादिना । असम्भवेप्रकर्तव्य मेतैरे-
वहिकेवलम् । सर्ववर्णैस्तुकर्तव्यं सामिषंसतिसम्भवइति । यच्चाप्युक्तं
प्राणिहिंसापूर्वक एवश्राद्धे मांसनिषेधइति । तदपिन । सामान्य-
हिंसाया अग्नीषोमीय पशुहिंसाविधिवद्विहितहिंसयाबाधोपप-
त्तेः । तथाजाबालः । हिनस्त्यःपशून्श्राद्ध मुद्दिश्यैवसपापभाक्
श्राद्धापदेशतोहिंसा मपिश्राद्धे नदुष्यति । स्कान्देपि । अर्थेदेवपितॄ-
णांहि योहिनस्तिपशून्द्विजः । सयज्ञफलमाप्नोति तेचयान्तिपरां-

ङ्गतिम्। स्वार्थमन्नम्पचेद्यस्तु योहिनस्तिद्वथापशून्। एकाकीमि-
ष्टमश्नाति नयस्तेयान्तिरौरवम्। भीष्मोपि योहिंसकानिभूतानि
हिनस्त्यात्मसुखेच्छया। कृष्णद्वैपायनःप्राह स्वावरत्वंसगच्छति।
अत्रिरपि। मधुपर्केच सोमेच दैवेपित्र्येचकर्मणि। अत्रैवपशवो
हिंस्या नान्यत्रेतिकथञ्चन तथा। यज्ञार्थम्पशवोबध्याः पुत्रार्थे-
पत्योषितइत्यादिवाक्यात्। यदपिकलिविषयोनिषेध इतितद-
पिन। कलिविषयविधायकवाक्यैस्तद्वचनस्यबाधात्। तथाजा-
तूकर्ण्यः। मांसंयुगेषु सर्वेषु यज्ञश्राद्धार्थमाहृतम्। श्राद्धोपयमनेय-
ज्ञे कलौतच्चविशिष्यते। सुमन्तुरपि। कृतकौपहताविप्राः कलौचे-
त्यान्निरामिषम्। तृप्तिंनेच्छन्तिपितरस्तस्यश्राद्धेकदाचन। पैठीन-
सिः। परमान्नंकालशाकं मधुमांसंघृतम्पयः मुन्यन्नानिति लाविप्राः
प्रकृत्याहविरष्टधा। शस्तान्यष्टौतु सर्वेषांयुगेषुमुनिसत्तमाः। पितृ-
णांदेवतानाञ्च दुर्लभानिकलावधीति। निबन्धान्तरेचैतद्वाक्य
निर्मूलत्वप्रतिपत्तेश्च। तथा। गोमेधोनरमेधश्च अक्षतागोपशुस्तथा।
देवराच्चसुतोत्पत्तिः कलौपञ्चविवर्जयेत्इति पराशरोक्तेः। यत्तु
देशविषयोनिषेध इतितदपिन। मध्यदेशादौ जिह्वालुतया ऽवि-
हित मांसभक्षणोपलब्धेः। नचदेशविषयः शक्यतेवक्तुं। देशभेद
विषयस्यनिरासात्। तथा वृद्धप्रचेताः। नयुगानांनदेशानां
नविप्राणांद्विजोत्तमाः धर्मशास्त्रेषुवैभेदो दृश्यतेमांसभक्षणे। देश-
देशभेदे श्राद्धे दृश्यमाणत्वाच्च। तस्माद्विहित हिंसादौ श्राद्धादि-
कर्मसुच मांसभक्षणविधिर्नेतरत्रेतिसिद्धं। तथामनुः। प्रोक्षित-
म्भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया। यथाविधिनियुक्तस्य प्राणाना-
मेवचात्यये। याज्ञवल्क्योपि। प्राणात्यये तथाश्राद्धे प्रोक्षितन्द्वि-
जकाम्ययेति। भक्ष्यच्छागादिविहितमांसं। देवलः। पञ्चपञ्च-

नखाभक्ष्या धर्मतः परिकीर्तिताः । गोधाकूर्मः शशोविश्च शल्ल-
कश्चेतितेस्मृताः । धर्मतइतिप्रोक्षितादौ । नचायमपूर्वविधिः ।
रागप्राप्तेः । नापिनियमः पक्षेऽप्राप्तेः । अतोवगोधादि पञ्चका-
तिरिक्त पञ्चनखनिषेधाधिका परिसंख्येति । तथारामायणे ।
शशकःशल्लकोगोधा सेधाकूर्मश्चपञ्चमः । पञ्चपञ्चनखाभक्ष्या ।
नभक्ष्यावानरानराइति । एतच्च श्वादुग्रपलक्षणम् । ननु किम्प्रो-
क्षितादौ नियमःपरिसंख्यावेति । परिसंख्येतिब्रूमः । पक्षप्राप्तौ-
नियमविधानात् । यत्तु स्वरुच्य क्रियमाणेतु यत्रावश्यङ्क्रियाभ-
वेत् । नियमःसोवविज्ञेयः श्राद्धे मांसाशनं यथेत्यत्रनियमोङ्गी-
कृत सशब्दार्थरूपानिवृत्तिफलकत्वा देकरूपत्वमेव तयोरित्यवि-
रोधः । अतोवश्राद्धशब्दस्योपलक्षणत्वे प्राणात्ययादिचतुष्टये परि-
संख्यैवयुक्ता । तथाबृहस्पतिः । रोगीनियुक्तविधिव द्धुतम् विप्रहृ-
तस्तथा । मांसमद्याच्चतुर्द्वेषा परिसंख्याप्रकीर्तिता । अतोऽन्यथा-
तुयोश्नीया द्विधिंहित्वापिशाचतां । यावन्तिपशुरोमाणि तावत्प्रा-
प्नोतिमानवइति । रोगीतिप्राणात्ययोपलक्षितः । नियुक्तश्राद्धे
विधिवद्धुतम् प्रोक्षितादि । विप्रहृतो द्विजकामनयाऽभ्यर्थितः ।
परिसंख्येत्यभक्षणसंकल्पव्यावृत्तिः । तेन यथोक्तकृताभक्षण निद-
मस्यापि निवृत्तिरित्यर्थः । तथा । यथाविधिनियुक्तश्च मांसंनाश्ना-
तिमानवः । सप्रेत्यपशुतांयाति सम्भवानेकविंशतिमिति वा-
क्यात् । सङ्कल्पश्च । श्राद्धवर्जंपयोमांसम् नभोक्तव्यङ्कदाचन ।
त्यजेच्चेदितिसन्ध्याय पत्यापातनंभवेदिति कार्ष्णाजिन्युक्तेः ।
ईश्वरसम्वादेपि । ब्रह्मचारीयतिर्मांसं स त्यजेत्स्त्रीपतिंविना ।
श्राद्धवर्जमथान्योपि सन्त्यजेत्तपसःकृते इति । तस्माच्छ्राद्धादौ मां-
संभक्ष्यमेवेत्युक्तं । यत्तु प्रोक्षिताभुग्रक्षितमांसं तथाब्राह्मणकाम्य-

या। अल्पदोषमितिज्ञेयम् विपरीतंतुलिप्यत इति महाभारत-
वाक्यम्। तदेवविधिनाकुर्यात् स्वर्गंप्राप्नोतिमानव इत्यपि तत्र।
हविर्यत्प्रोक्षितम्मन्त्रैः प्रोक्षिताभ्युक्षितम्भुवि। वेदोक्तेनप्रकारेण
पितॄणाम्प्रक्रियासुच। पितृदैवतयज्ञेषु प्रोक्षितंहविरुच्यते। वि-
धिनावेददृष्टेन तद्भुक्त्वान्येनदुष्यतीति यमवाक्यं। सर्वेषामेवमां-
सानां महान्दोषास्तुभक्षणे। निवर्तनेमहापुण्य मितिमाहप्रजा-
पतिरिति। यच्चभारतवाक्यम् भक्षणेनमहान् दोषोनिवृत्त्या-
पुण्यमुच्यतइति तदुभयमपिश्राद्धादे रन्यत्रजिह्वालतया भक्षण-
विषयं। तथास्कन्दपुराणे। यत्रयत्रनिषेधोहिश्रूयते मांसभक्षणे।
जिह्वालान्प्रतिसज्ञेयो नतुनविधिनाश्नतां। तथा। प्रयान्तिन-
रकंघोरं मांसमश्नन्ति येनराः जिह्वालान्प्रतिदोषोयं नदोषोवि-
धिनाश्नतामिति। यच्चबृहस्पतिवाक्यम्। रोगार्तोभ्यर्थितो-
वापि मांसंनाश्नन्त्यलोलुपः। फलम्प्राप्नोत्ययत्नेन सोश्वमेधफल-
स्यचेति तच्छ्राद्धे ब्रह्मचारिविषयम्। तथामनुः। व्रतवद्देवदैवत्ये
पित्र्ये कर्मण्यथर्षिवत्। प्रकाममर्थितोश्नीया द्व्रतमस्यनलुप्यत इत्ये-
कमभिधायांव्रतवदृषिवद्दर्शमस्यविधानात्। अलोलुप इत्यनेन
तद्विषयावगमाच्च तथा। सतपति तपोजस्रम यजतेच ददाति-
च। मधुमांसनिवृत्तोयः प्रोवाचेदंबृहस्पतिः। जैमिनिरपि। ब्रह्म-
चर्यमुपास्येत ये कृत्वादारसङ्ग्रहम्। सन्यसेन्नाधिकारस्या न्मांसवि-
धिवर्ज्यतइति। अन्यतइति दारसंग्रहादूर्ध्वम् विधिवन्मांसभक्ष-
णाधिकारइत्यर्थः। तथामनुः। नमांसभक्षणे दोषोनमद्ये नचमै-
थुने। प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहाफलेति। मांसमद्यमैथुनेषु
विहितेषु भक्ष्यभोज्यान्नपानाभिगमने भूतप्रवृत्तित्वान्नदोषः।
निवृत्तिस्तु महाफलप्रापिकेत्यर्थः। महतीचसाच फलाचेतिव्युत्प-

त्त। न ववंत्र्युत्यत्ति र्न साधुः। फलाफलशब्दयोः परयोरुभयथापि महच्छब्दस्याकारादेः स्य वच्यमाणत्वात्। तथाच बृहस्पतिः। अभून्मांसपुरोडाशे भक्षणं मृगपक्षिणाम्। पुराणेष्वेवयज्ञेषु ब्रह्मक्षत्रसवेषु च। सौत्रामण्यांतथामद्यं श्रुतौभक्षमुदाहृतम्। ऋतौच मैथुनन्धर्मम् पुत्रोत्पत्तिनिमित्ततः। स्वर्गंप्राप्नोतिनत्वंतु प्रत्यवायेनयुज्यतइति। तस्मात्प्रोक्षितादिचतुर्षु स्मृत्युक्तसंकल्पेन मांसत्यागिनामपि गृहस्थानाम् भक्ष्यमेवमांसमितिनदोषः। अविहितसंकल्पेन तत्त्यागिनान्तु पाक्ष्यादिभक्षणे प्यदोषः। रोगार्त्तानामभ्यर्थितानांच ब्रह्मचारिणाम् श्राद्धादिष्वपिभक्षणे महान्दोषएवेति। अतस्त्यक्तमांसादेरपि श्राद्धे भक्षणमेवोचितमित्युक्तम्। तथाचोशना। नियुक्तश्चैव यःश्राद्धे यत्किञ्चित्परिवर्जयेत्। पितरस्तस्य तन्मांसम् नैराश्यंप्रतिपेदिरे। देवलोपि। नियुक्तस्तु यदिश्राद्धे दैवेमांसंसमुत्सृजेत्। यावन्तिपशुरोमाणि तावन्निरयमृच्छति। स्कंदे खरसंवादेपि। निवेशितस्तु यःश्राद्धे यज्ञे वापिद्विजाधमः। मांसंनाश्नातिनिरयम्। यातिवैपशुतांनरइत्यलं बहुना॥ एवमन्नंसंकल्प्यापोशनम् दत्वोंकारव्याहृतिपूर्वंगायत्र्यादि जपेत्। तथाच याज्ञवल्क्यः। सव्याहृतिकांगायत्रींमधुवाताइतितृचम्। जप्त्वायथासुखंवाच्यं भुंजीरंस्तेपि वाग्यताः केचित्तुमधुमक्षितिविर्जपंवारिधारांचनकुर्वंति। तन्न। उभयोरपिविधानात्। तथाचप्रचेताः। आपोशानंप्रदायाथसावित्रीं तिर्जपेदथ। मधुव्याताइत्तृचम्मक्षित्येतत्त्रिकन्तथा। स्कंदेपि। आपोशानमथोदत्त्वा वारिधारांक्षिपेद्बुधः। नमोदेव्यइतिचसव्ये नोदङ्मुखोद्विजः। अपसव्यम्पितृभ्यस्तुइत धारांवदेत्स्वधामिति। एवंजप्त्वाऽच्छिद्रीकरणं कृत्वायेदेवासः येचेहेत्यादिपठित्वा यथासुखमन्नं जुष-

ध्यमित्युक्त्वाभोजयेत्। तथाचयमः। अन्नहीनंक्रियाहीनं मंत्रहीनंचयद्भवेत्। सर्वमच्छिद्र मित्युक्त्वाततोयत्नेनभोजयेत्। कात्यायनः। येदेवासस्त्वयेच हेमन्त्रद्वयमुदीरयेत्। मन्त्रान्तेतुततोब्रूयादमृतं भुज्यतामिति। पूर्वोदिवे उत्तरस्तुपित्र्य इतिविवेकः। हषयाज्ञवल्क्योपि। यथासुखंजुषध्वंभोइति वाच्यमनिष्ठुरमिति। अन्नबलिदानमित्येके। नेत्यन्ये। एवंचवैश्वदेवेबलिः पित्र्येनेत्यविरोधः। तथाच। स्पर्शनान्तेऽपशेदन्न ङ्कल्पनांतेबलिंहरेत्। होमस्तुमधुवातेति होमान्तउदकंपिबेदिति वैश्वदेवविषयम्। अत्रिः॥ दत्तेवाप्यथवाऽदत्ते भूमौयोनिक्षिपेद्बलिं तदेतन्निष्फलंयाति निराशैःपितृभिर्गतैरिति पित्र्यविषयम्। पितॄणामन्नमुत्सृष्टे बलिंकुर्वंतियेद्विजाः। आसुरंतद्भवेच्छ्राद्धम् पितॄणांनोपतिष्ठत इतिविशेषात्॥

मू० अन्नमुजपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवांसकृत्त्रिर्वा रक्षोघ्नीःपित्र्यमंत्रान्पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणि॥७॥

सप्रणवांव्याहृतिपूर्वां गायत्रीमित्यन्वयः। पाठोऽर्थेनबाध्यते। वाशब्दस्तुविकल्पार्थः। अशनात्पूर्वंविरमत्सुच सकृदितिव्यवस्थार्थोवा। पूर्वस्याष्टदोषदुष्टत्वात्। तथाचप्रचेताः। आपोशानमथोदत्त्वासावित्रींत्रिर्जपेदथ। मधुवातादिति तृचं मध्वित्येत त्रिकल्पयेति। अत्रहलायुधः सकृत्त्रिर्वामधुमतीर्मधुमध्वितिचेति पाठइति तत्कर्कादिभिरनादृतत्वात्ज्जपस्याशनात्पूर्वं विधानाच्च चिन्त्यम्। रक्षांसिघ्नन्तीति रक्षोघ्नीमूलविभुजा-

दित्वात्कः । तास्तुकृणुष्वपाजइत्यादयः पंचर्चः । ऋग्विशेषणत्वात्स्त्रीत्वं । तथाचश्रुतिः । एतान्वैरक्षोघ्नान्प्रतिसरानपश्यत्कृणुष्वपाजइति रक्षोघ्नावैप्रतिसराइति । पित्र्यमन्त्राउदीरतामित्यादिवयोदश । सुरावन्तमित्यादिपञ्चदशपित्र्याइत्येके । तन्न । पितरोदेवतायेषामितितद्धितेनउदीरतामित्यादिनामेवपित्र्यत्वात् तथाच भट्टपादाः तद्धितेन चतुर्थ्यावा मन्त्रवर्णेनचेष्यते देवतासङ्गतिस्तत्र दुर्बलन्तुपरम्परमिति कृणुष्वपाजइतिच अग्नेष्वावर्जमुच्चरेत् सुरावन्तादिकांसर्वाम् जपेच्चपितृसंहितामित्यनेन सुरावन्तमित्यादीनाम्पितृसंहितात्वावगमात् पुरुषसूक्तं सहस्रशीर्षेत्यादिषोडशर्चः अप्रतिरथमाशुः शिशानेत्यादि सप्तदशद्वादशेत्यन्ये विचार्यमिदं यदिसर्वस्यापिशांतिपाठस्याप्रतिरथसंज्ञा सप्तदश द्वादशसंख्यावच्छेदकमप्रमाणत्वात् तदवच्छेदकप्रमाणञ्चेत्तर्ह्याचार्यमतभेदात् सप्तदश द्वादश संख्याया मूलस्यादर्शनादनिश्चयःस्यात् तस्माच्छ्रुतिमूलत्वेन द्वादशैवेतिगम्यते तथाचश्रुतिः ब्रह्मन्नप्रतिरथञ्जपेत्युपक्रम्यतस्माद्ब्रह्माप्रतिरथञ्जपेत्याशुः शिशान इत्यैन्द्रीभिरूपाद्वादशभवन्तीत्युपसंहारः अन्यानि पिण्डब्राह्मणादीनि तथाच हृदयाज्ञवल्क्यः पुरुषसूक्तं यजुषां पिण्डब्राह्मणमात्त्वथं पितृस्त्वचपंचैवम् गायत्रीम्मधुब्राह्मणमिति ब्राह्मादिस्तोत्र समुच्चायकस्य तथाच मात्स्ये ब्रह्मविष्णवर्क रुद्राणांस्तोत्राणिविविधानिच इन्द्रस्यसोमसूक्तानि पावमानांश्चशक्तित इति कस्यचिज्जपस्य पित्र्यत्वादपसव्येनेत्येके तन्नसव्येनेवविधानात् तथाचजमदग्निः अपसव्येनकर्त्तव्यं सर्वश्राद्धं यथाविधिः सूक्तस्तोत्रजपन्त्यक्त्वा विप्राणाञ्चविसर्जनम् किञ्चस्तोत्रसूक्तजपन्त्यक्त्वा पिण्डघ्राणञ्च दक्षिणां आह्वानान् स्वागतान्तंच विनाचपरिवेषणं विसर्जनं सौमन-

स्वमाशिषःप्रार्थनन्तथा विप्रदक्षिणाश्चैव स्वस्तिवाचनकं विना पि-
त्र्यमन्यत्र अकर्तव्यम्प्राचीनावीतिनासदेतिश्रवणप्राप्त्यन्तस्विवतिसामा
न्येनोक्तंतथापि यथोपदेशं भोक्तव्यं तथाचप्रचेताःपीत्वापोशानमश्नी
यात्पात्रे दत्तमगर्हितं सर्वेन्द्रियाणां चापल्यं नकुर्यात्पाणिपादयोः
बौधायनःपादेनपादमाक्रम्ययोभुंक्तेनापदिद्विजः नैवासौभुञ्जतेश्राद्धं
निराशाःपितरोगताः प्रचेताः भोजनन्तुन निःशेषङ्कुर्यात् प्राज्ञः
कथञ्चन अन्यत्रदध्नःक्षीराद्वा क्षौद्रात्सक्तुभ्यएवच शेषत्यागस्यनित्य
त्वात् तथाच जमदग्निः भुक्त्वापीत्वातुयःकश्चिद्रिक्तम्पात्रं समुत्सृजेत्
सनरःक्षुत्पिपासार्तोभवेज्जन्मनिजन्मनि मनिन्द्येषु नोवशेषेषु रिति
तु।अधिकोच्छिष्टत्यागविषयं तत्प्रान्तेग्रासमात्रन्तु योविप्रोनत्यजेत्त-
दा यच्छ्राद्धे पिण्डदानादौ तद्रक्षांसिभुंजते इतिवाक्यात् मनुः अ
त्यक्तं सर्वमन्नं स्यादश्नीरंश्चैवबाग्यताःनयद्विजातयोब्रूयुर्दातृपृ-
ष्टाहविर्गुणान् वाग्यताइत्यनेनैवाकथनप्राप्ते नब्रूयुरिति हस्तसं-
ज्ञयाप्यकथनार्थं हुंकारेणापियोब्रूयाद्धस्तेनापि गुणान्वदेरितिशं-
खेनप्रतिषेधात् आचान्तमात्राविदंन्नेयम् निवृत्ते तु तथाश्राद्धे व-
क्तव्यं शोभनं हविरितिवाक्यात् भोक्तॄणांनिषेधाद्दातातु हविःप्रशं-
सनीयमेवरुच्युत्पादनार्थं भक्ष्यभोज्यगुणानुक्त्वा भोजयेद्ब्राह्मणा-
ञ्छनैः पृथक्पृथक्वसंवेदाकुर्यादेभ्यःप्ररोचनामिति अश्नीरंश्चैवे-
त्येवकारःपरस्परस्पर्शस्यदोषत्वसूचकः तथाचशंखःश्राद्धपंक्तिभुं-
जानोब्राह्मणोब्राह्मणंस्पृशेत् तदन्नमत्यजन् भुक्त्वागायत्र्यष्टशतं-
जपेत् कात्यायनोपि एकपंभुंक्तौ तुयोक्तोविप्रोविप्रंस्पृशेद्यदि तदन्न-
नत्यजे इत्काग्गायत्र्यष्टशतंजपेत् हारीतःपात्रे पात्रं प्रतिष्ठाप्ययेऽ
ज्ञानाद्भुंजते द्विजाःआसुरंतद्भवेच्छ्राद्धम् पितॄणांनोपतिष्ठते मार्क-
ण्डेयः कटिभुग्नस्तुयोभुंक्ते नंतजानुकरस्तथा हसतेवदतेचैव निरा

शा;पितरोगता: शंखलिखितौनचात्त्यंताधिकन्दद्या न्नपृतिगृह्णी यादिति दातृधर्ममाहशंख, श्राद्धे नियुक्तोभुंजाना न्नपृच्छेल्लवणादिषु उच्छिष्टा:पितरोयांति पृच्छतोनात्रसंशय: दातु:पततिवैवाहुर्जिह्वाभोक्तुश्चभिद्यते नविट्‌व्यंजनादिभोक्तायाचेतनवेति उभयवाक्यदृष्टे; तथाचवृद्धशातातप: अपेक्षितंयोनदद्या च्छ्राद्धार्थमुपकल्पितम् नयाचतेस्मृतोमूढ; सभवेद्ब्रह्मघातकइति वार्यौनिषेध: याचतेयदिदातारम् ब्राह्मणाच्चानदुर्बल: प्रिक्तरस्तुनतुष्यंत्तिदातृ भोक्तुर्नसंशय; तथा कृच्छ्द्वादशराचे ण मुच्य तेकर्मणस्तत :तस्माद्विद्वान्नेवदद्या न्नयाचेतनदापयेत् इति अन्यच्च नपंक्तौविषमंदद्या न्नयाचेतनदापयेदितिअत्रविरोधे उपकल्पित यांचानत्वनुपकल्पितस्येत्यविरोध; यम; यावद्धविष्यंभवति यावद्दिष्टंप्रदीयते तावदश्नंतिपितरो यावन्नाहददाम्यहं अहंददामीति यावन्नाहतावदश्नंतीत्यर्थ: एतच्चापेक्षितविषयं अपेक्षितं योनदद्यादितिवाक्यात् ननु मौनत्वोक्ते: कथंयाचनंहस्तादि संज्ञानिषेधात् उच्यते हस्तादिसंज्ञानिषेधो हविर्गुणाख्यातविषयो नतुयाचनादिविषयइत्यविरोध: तथाचनिगम: नान्नपानादिकंश्राद्धे वारयेन्मुखत: क्वचित् अनिष्टत्वादिष्टत्वाद्वा वारणंहस्तसंज्ञया देवलोपि अन्नपानक शीतोददध्यिध्योप्यवलोकित: वक्तव्ये कारणेसंज्ञांकुर्वीतोर्जितपाणिनेति दात्वा व्यंजनादिकमादा यावलोकितेवक्त्यये हस्तेनसंज्ञांकुर्यादित्यर्थ: ।

## मू० तृप्तान् ज्ञात्वान्नम्प्रकीर्य ॥ ८ ॥

ब्राह्मणान्तृप्तान्ज्ञात्वासर्वान्नमुदके नाम्नाव्याग्निदग्धेत्यनेनप्रकिरेदित्यर्थ: तथाचयाज्ञवल्क्य: सार्ववर्णिकमन्नाद्यं संपृक्ता

प्लाव्यवारिणा समुत्सृजेद्भुक्तवतामग्रतोविकरन्भुवि सार्ववर्णिकं सर्वव्यंजनसंहितम् असंस्कृतभागत्वाद्विकरेदध्योदनमेवेतिकश्चित्तन्न यदन्नंपिण्डदानेषुतदन्नंविकरेन्यसेदिति वृहद्याज्ञवल्क्योक्तेः अतृप्तेष्वन्नंनविकरेदितितृप्तान् ज्ञात्वेत्युक्तम् ज्ञात्वातृप्तांस्ततो विप्रान्प्रकुर्याद्विकिरासनमिति तृप्तिज्ञानंचान्नादिग्रहणेनाहारानुमानेनचप्रतिपन्नम् अत्रयद्राघववकीर्येत्युक्तन्तथापिप्रादेशपरिमाणंस्मृत्यंतराद्बोध्यं तथाहयाज्ञवल्क्यः विकिरंभुविदातव्यमुच्छिष्टेभ्यःषडंगुलम् पठंतिच उच्छिष्टस्योत्तरे देशेपिण्डान्दद्यात्षडङ्गुलमिति यत्तुपुराणसमुच्चये विश्वेदेवपितॄणांच अंतरेतुक्षिपेत्कुशान् तत्रावकिरणंकुर्याद्गाथामेतामुदीरयेत् यच्च मत्स्यमंविकरन्दतग्राह्येवपित्र्यांतरेभुवीतिद्विजाग्रस्थानबोधकमित्यत्रविरोधः भुक्तवतामग्रतइति योगीशोक्तेः नन्वस्यविकिर संज्ञकत्वाद्विकीर्येतिवाच्यंनप्रकीर्येति उच्यते विकिरंविनाश्राद्धंव्यर्थमितिप्रशब्देनद्योतितमित्यदोषः तथाचगोभिलः विकरेणविनाश्राद्धम् निष्फलंपरिकीर्तितम् एकोद्दिष्टेविशेषेणप्रेतश्राद्धेषुवर्जयेदिति योमोहात्कुरुतेश्राद्धम् विकिरेणविनाक्वचित् तत्सर्वंव्यर्थतांयाति पितृपिण्डोदकादिकमिति अत्रसंशयः किमपिण्डश्राद्धे विकरःस्याद्वुतनेति उभयवाक्यदृष्टेः तथाहि पिण्डनिर्वापरहितंयत्रश्राद्धंविधीयते स्वधावाचनलोपोस्तिविकरस्तुनलुप्यते तथा नचाग्नौकरणंकुर्यान्नार्घदानंकथंचन नपिण्डकल्पनाश्राद्धे विकिरान्नंनचोत्सृजेदिति उभयशास्त्रत्वाद्विकल्पइत्येके यत्रपिण्डदानानिषेधस्तत्रचेद्देशकालादासंभवेनपिंडवर्जं करोतितदाविकिरःस्यान्नतुयुगादयादिषुपिण्डदाननिषेधेपीत्यन्ये तद्विचार्यंकिम्विकरःप्रधानमंगम्वायदिप्रधानन्तदापिण्डप्राधान्य-

विरोधः अथाङ्गानामङ्गानां प्रधानानुरोधात्पिण्डाभावे तदभाव इ-
त्यनाश्रयं विकल्पनस्तुन विषयव्यवस्था: तदुक्तं स्मृतिद्वैधेतु विषय:
पृथक्पृथगिति तस्माद्देशादासम्भवे पिण्डाभावेपि विकिरेत पिण्ड-
निषेधेपीतिसुस्थं तथामोक्षेश्वरनिबन्धे मघायुगादिभरणी श्राद्धे
पिण्डंविवर्जयेत् अनेजनपूजान्तमुल्मुकास्तरणानिच निःशेषम-
ग्नौकरणंविकिरञ्चषडंगुलमिति तस्माद्युगादिषुपिण्डनिषेधे आ-
वाहनाग्नौकरणविकिरवेद्यादि पूजान्तस्वधावाक्यादीनांनिषेधः
सिद्धः विकीर्याचमेत् तथाचमरीचिः श्राद्धेषुविकिरन्दत्वायोना-
चामतिवैभ्रमात् पितरस्तस्यषण्मासम्भवन्त्युच्छिष्टभोजनाइति ।
तथा विकिरे पिण्डदानेच तर्पणेभोजनेतथा कृतेआचमनंप्रोक्तम्
दर्भत्यागोविधीयते अत्रानग्निदग्धाइत्ययंपाठः येषांदाहोनक्रियते-
येग्निदग्धास्तथापरइतिब्राह्मणवाक्यात् ॥

## मू० सकृत्सकृदपोदत्वापूर्ववद्गायत्रीञ्ज-
## पित्वामधुमतीर्मधुमध्विति च ॥ ६ ॥

विप्रेभ्यस्तु कार्यंसकृत्सकृदपोदत्वा पूर्ववत्सप्रणवव्याहृतिगा-
यत्रींसकृत्त्रिर्वामधुमतीर्मधुमध्विति जपेदित्यर्थः तथाच मार्कण्डे-
यः ततस्त्वाचमनार्थाय दद्याच्चापःसकृत्सकृदिति वीप्सापिच
देवद्विजार्था अपोदत्वागायत्र्यादि जपद्योतकश्च तथाचगोभिल-
सूत्रम् अङ्गुष्ठमन्ने विधाय सकृत्सकृदपोदद्यादिति मधुशब्दोवै
यासुतामधुमत्यो मधुवाताइत्याद्यृचः मधुमध्विति द्विरुच्चारणं
मन्त्रप्रदर्शनार्थम् संहितायांमधुमधुमध्वितिप्रवर्ग्यमन्त्रदृष्टेः देव-
पूर्वंमब्दानमित्येके तन्नपितृपूर्वविधेः तथाचविष्णुः उदङ्मुखेष्वा
चमनमादौ ततःप्राङ्मुखेषु दद्यादिति विसर्गस्तुलुकश्चाग्नौ कर-
णम्पङ्क्तिपावनम् करशुद्धिरपोशानं पितृपूर्वाणिषट्सदेत्युक्तम् ॥

## मू० तृप्ताःस्थेतिपृच्छति ॥ १० ॥

अनन्तरन्तृप्ताःस्थेतिब्राह्मणान्पृच्छेदित्यर्थः अत्रपङ्क्तिमूर्द्धन्यप्र श्नेतृप्ताःस्थेति बहुवचनम्पूजार्थमित्येके तन्न प्रतिवचनेबहुवचनानुपपत्तेः नचाग्नौकरणादिष्विवाद्यैकस्यप्रश्ने दृष्टार्थत्वं तस्मात्पङ्क्तिमूर्द्धन्यंपृच्छति सर्वान्वेत्यनव्यवस्थित विकल्पइत्युक्तं । अतः सर्वेप्रष्टव्याइति तथाचयमः यथाब्रूयुस्तथाकुर्या दनुज्ञातस्तुतैर्द्विजैरिति ननुभोक्तृविप्राणां वमनेकिंश्राद्धम् समापनीयम नवा तत्रसमापनीयमित्येके तन्न स्मृतिविरोधात् तथाच हेमाद्रिकल्पे अकृतेपिण्डदानेतु ब्राह्मणोवमतेयदि पुनःपाकंप्रकुर्वीत श्राद्धं कुर्याद्यथाविधिः धर्मप्रदीपेपि अकृतेपिण्डदानेतु भुंजानोब्राह्मणोवमेत् पाकंकृत्वापुनःश्राद्धं कर्तव्यन्तुयथाविधीति अकृतइत्यु पादाना त्कृतेसमापनमितिचेन्न वमनस्यश्राद्धविघातकत्वात् अतोत्तरेद्यु रेवपुनःश्राद्धमितिसिद्धम् तथाचस्मृतिः वमनेवाविरेकेवा वातद्दिनंवर्जयेदिति नचैतन्निमन्त्रणोत्तरंश्राद्धात्प्राग्वमनविषयं श्राद्धविघ्नेसमुत्पन्नेअन्तरामृतसूतके वदन्तिशुद्धे तत्कार्यं दर्शे वापिविचक्षणइत्यु त्तरे द्युर्विधानात् अत्रप्रायश्चित्तमित्येके पठंतिच पितृद्विजानांमध्येतुपितु श्चवमनंयदि तद्दिने चोपवासश्चपुनःश्राद्धं परे हनि सर्वमन्नंसमादाय मन्त्रैःप्राणादि पञ्चकैः द्वात्रिंशदाहुतीर्हुत्वाशेषंकर्मसमाचरेदिति ।

## * तृप्ताःस्मइत्यनुज्ञातःशेषमन्नमनुज्ञाप्य ।११।

ततस्तृप्ताःस्मेतिद्विजैरुक्तेशेषमन्नं किंक्रियतामिति भोक्तॄन्पृष्ट्वाइष्टैः सहभुज्यतामित्यनुज्ञापयेदित्यर्थः। एतदपि सर्वान्वेत्यनपङ्क्तिमूर्द्धन्यस्यैव ननु श्राद्धोर्वरितपाकेएवशेषशब्दोनतुपाकान्त-

रेतत्कथम्पाकान्तरभुजितद्दानञ्चेतिचेन्न गृहसिद्धस्य सर्वस्यापि पितृशेषत्वेन दानभुज्युपपत्तेः। तथाचयमः भक्ष्यम्भोज्यन्तथापेयं यत्किञ्चित्पच्यतेगृहे नभोक्तव्यम्पितृणांतदनिवेद्यकथञ्चनेति अतः शेषस्यापिपितृद्देशेन दानमित्युक्तं ननु किंनिरग्नेरुल्मुकनिधानं स्यान्नवा उल्मुकस्यदक्षिणाग्निसाध्यत्वात्तदभावेतंनेत्येके स्मार्ताग्नेः पिण्डपितृयज्ञविधानान्ननिरग्नेरित्यन्ये न देवताग्निशब्दक्रियाः। परार्थं त्वादितिपरिभाषातोनिषेधादग्न्यंतरेण नस्यादित्यपरे निरग्नेरपिश्राद्धाधिकारान्निषादस्थपतीष्टिवल्लौकिकाग्निनेतिकेचित् एवंतत्युल्मुकनिधानमनियतमिति उच्यते यदुक्तान्दक्षिणाग्न्यभावे तंनेति नतत् पिण्डपितृयज्ञवदित्यनेन स्मार्ताग्नेःप्राप्तत्वात् यच्चापि ण्डपितृयज्ञस्यविधेर्निरग्नेर्नेति तदपिन अकरणे प्रत्यवायस्मृतेर्नित्यत्वं यत्तु नदेवतेत्यादिनाऽग्नेः प्रतिनिध्यभावइति तदपिपिण्ड पितृयज्ञवदित्यतिदेशा ल्लौकिकाग्न्युपादान वैयर्थ्यंस्यात् यच्च निषादस्थपतीष्टिवद्विरोधइति तदपिन नित्यत्वानुपलब्धेः तस्माद्गुणफलविधेरुल्मुकाधानं साग्निनिरग्न्योर्नित्यमितिसिद्धम्। तथाच वृद्धयाज्ञवल्क्यः। पितृरूपास्त्वसुराः पिशाचाराक्षसाश्चये तेषां वैरक्षणार्थायदक्षिपेदग्नि न्तुनैर्ऋते मण्डलेष्वग्निदाहंये नकुर्वन्ति द्विजोत्तमाः निराशाःपितरस्तेषां पैशाचंश्राद्धमुच्यते स्कन्देपि येरूपाणीतिमन्त्रेण न्यसेदुल्मुकमन्तिके शुष्कगोमयसंभूतं यावच्छ्राद्धं समाप्यते अजीर्णदोषनाशाय पितृणामग्निवर्द्धनं श्रुतिरपि सयदिनिधायोल्मुकमथैतत्पितृभ्यो दद्यादिति॥

**मू० सर्वमन्नमेकतोद्धृत्योच्छिष्ट समीपदर्भेषु त्रींस्त्रीन्पिण्डानवनेज्यदद्यात्॥ १२॥**

एकतोद्धृत्येतिच्छान्दसः सन्धिः सर्वशब्दः सूपाद्यपेक्षोनयाव-

द्वाचकः उच्छिष्टसमीपइति सदेशोपलक्षणं तथाचस्मृतिः पितृणा-
मासनस्थाना दग्नतस्त्विश्वरचितेषु उच्छिष्टसन्निधानन्तन्नोच्छि-
ष्टासनसंनिधौ व्यामोपि मरत्निमात्रमुत्सृज्यपिण्डांस्तत्रप्रदापयेत्।
यत्रोपस्पृशतांवापि प्राप्नुवन्तिनविन्दवइति यथायोग्यं विकल्पोत्र-
विकिरपिण्डविवक्षया सनस्थानादुच्छिष्टन्ततो विकिरस्ततःपिण्डा
वाविरत्निव्यवस्थावा व्याममात्रं समुत्सृज्य पिण्डांस्तत्रप्रदापयेदिति
जातूकर्ण्योक्तेः वीप्सामातामहविषया अवनेज्येतिस्वार्थेणिच् द-
द्यादिति गोत्रादिप्रकाशकन्ततश्च सर्वान्नमेकपात्रे उद्धृत्यपत्न्या
पिण्डान्कारयित्वा यथोक्तदेशेवेद्यादिकृत्वा पृथक्पृथगवनिज्यद-
र्भेषुयथोपदेशंपिण्डान् दद्यादित्यर्थः तथाच स्कंदे अपसव्यं वाम-
जानु पातपूर्वंषडानन पत्नीपिण्डांस्तुमृद्नीयात्रिवर्गस्यसहायि-
नीति यद्यप्यत्रसामान्येनसर्वं मन्नमित्युक्तन्तथापि निर्माषंबोध्यं
तथाच वृद्धयाज्ञवल्क्यः माषान्सर्वत्रनैवेद्येपिण्डेग्नौचविवर्जयेत्-
यथामद्यंतथामाषा निषिद्धाश्चाग्निपिण्डयोरिति अत्रसंशयः
पिण्डपितृयज्ञत्र द्वित्त्वनेनप्राप्तेषु दर्भावनेजनपिण्डेषुपुन स्तद्ग्र-
हणं कुतइति तथाच पिण्डपितृयज्ञसूत्रम् तद्दक्षिणेनोल्लिखनय-
पहताइत्यपरेणोल्मुकम् पुरस्तात्करोति येरूपाणीत्युदपात्रेणा-
वनेजयत्यपसव्यं सव्येनवोद्धरणसामर्थ्यां दसावनेनिक्ष्वेतियज-
मानस्यपितृप्रभृतित्रीनुपमूलंसकृदा च्छिन्नानि लेखायांकृत्वा
यथावनिक्तम् पिण्डान्दद्यान्नासावेतत्त इत्यादि अत्रैके पिण्ड-
यज्ञेलेखामनिजाः दर्भेषुपिण्डदान मिहतुदर्भेष्वे वावनेजन मि-
त्येतदर्थमिति । तथाच क्षपः क्षिपेन्मूलदेशे वनेनिक्ष्वेतिपावतः
द्वितीयंवतृतीयंच मध्यदेशाग्रदेशयोरिति उपलक्षणपरमित्यन्ये
उपलक्षणे उपयुग्रहणानुपपत्तिः परिसंख्यानेचावनेजनदर्भेषु द-

दद्यादितिब्रूयादिति हलायुधः उच्छिष्टसामीप्योपदेशान्नपरिसंख्ये ति-
कर्कः एवंच कथमियंपुनरुक्तिरिति उच्यते यदुक्तंकुशोपर्यवने न-
नार्थंतदिति तन्न तादृशावनेजनस्य छन्दोगविषयत्वात् तथाच-
तत्परिशिष्टं प्रागग्रेष्वथदर्भेषु अर्घ्यं मासंवत्पूर्ववत् अपःक्षिपेन्मू-
लदेशे वनेनिक्ष्वेतिनिस्तिला इति प्रागग्रेनास्तिलत्वे इत्थं विषये
नचतथाशंक्यम् अवनेनिजत्र दर्भेषुदद्यादित्यन्यस्याभावात् तथाच पि
ण्डयज्ञसूत्रम् अमावनेनिक्ष्वेत्यादि कम् स्कन्देपि नामगोत्रे समु-
च्चार्यप्रदद्यादवनेजनम् कुशैरास्तरणंकुर्याद्दक्षिणाग्रैस्तुतत्परम् द्वि-
गुणांस्तुकुशान्कृत्वा सतिलानर्घसंयुतान् अवनेनिक्ष्वचोक्त्वाथ कु-
शान्भूमौपरिस्तरेदिति यत्तूपलक्षणपरिसंख्ये इतितद्द्वयमपि ह-
लायुधेनैवदूषितमित्युपेक्षितं नहुतथेष्टं वेद्यादिकरणोपपत्तेः।
तथाचदेवलः मण्डलञ्चतुरस्रञ्चदक्षिणावर्तकम्महत् एकदर्भेणतन्-
मध्य उल्लिखेच्चिश्वतंत्यजेत् ब्रह्माण्डेपि सव्योत्तराभ्यांपाणिभ्याम्
कुर्यादुल्लेखनंबुधः वज्रेणाथकुशैर्वापि उल्लिखेत्तुमहींद्विजइति
यच्चहलायुधे नपिण्डयज्ञवत्पिण्डदानमित्युक्तम् तच्चपौनरुक्त्या-
परिहाराद्विषयांतरानुपलब्धेश्चायुक्तम्। पिण्डयज्ञवदुपचार इ-
त्ययनेनैवतत्सिद्धेः तस्माद्विषयांतरबोधनेनापुनरुक्तिः। तद्यथा
पिण्डयज्ञवदित्यतिदेशोपिसाग्निनिरग्न्योरविशिष्टस्तथापिनिर-
ग्नेर्विषयांतरदृष्टेः साग्निपरएव तस्यैवसर्वांगोपसंहारात् निर-
ग्नेस्तु हस्ताग्नौकरणादिव द्विषयांतरदर्शनात्तदर्थंवै तत्सूत्रमि-
त्यपुनरुक्तिः अतोनिरग्नेरुपमूललूनकुशादि निषेधार्थमिदंसू-
त्रमितिसिद्धम्। तेननिरग्नेर्महालयादिषु मूललूनकुशास्तरणम्
हस्तद्वयेनावनेजनम् एतच्चान्नं स्वधेतिप्रयोगश्चनेत्यर्थः तथाचस्मृ-
तिः साग्नेरासनादौ समूलतापिण्डेषु सकृदाच्छिन्नतेति किंच समू-

ऽस्तु भवेद्धर्म इति प्रागुक्तम् यत्तु शतपथे सकृदाच्छिन्नान्युपमूलं दि
नानीत्युक्तम् तदपि साग्निपरमेव सुमंतुरपि असाववनेनिक्ष्वेति-
पुरुषं पुरुषं प्रति त्रिस्त्रिरेकेन हस्तेन विदधीतावनेजनम् अपसव्ये-
न हस्तेन निर्वपेदुदकं सुधीरिति मनूक्तेश्च तथा श्राद्धे पिण्डे विवाहेषु
दाने चैकेन दीयते तर्पणे तूभयेनैव जलं देयं तु नान्यथेति धर्मप्रदीपे-
पि गयायां दशपिण्डे च पिण्डशब्दो विधीयते अन्यत्र त्वन्नशब्दः स्या-
द्गंगादिषु सरित्सु च महालयादिस्तुच्चाथकश्च । तथाच हेमाद्रौ
महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके पिण्डशब्दप्रयोगः स्यादन्न-
मन्यत्र कीर्तयेदिति असावेतत्त इति श्रुत्या सूत्रकृतावेतत्त इत्युक्त्वा-
द्वाजसनेयिनाम् पिण्डेषु क्लीवप्रयोगः सर्वत्रेत्येके पिण्डशब्ददर्शना-
देतत्ते पिण्डः स्वधेति सर्वत्र ग्राह्यमित्यन्ये तद्द्वयमपि विषयादर्शन-
निमित्तमिति बोध्यम् तस्मादिह हिते पिण्डशब्दस्तद्भिन्ने ऽन्नशब्द-
इति सिद्धम् यदि स्तुनिर्विरोधमिष्येत तस्मिन्विषये विचिकित्सातत्त्वैः
तत्ते पिण्डान्नं स्वधेत्यस्तु तथाच श्राद्धकल्पलतायां एतत्ते पिण्डा-
न्नमित्युच्चरन्ना एतत्पिण्डदानमेकश्वासेन कार्यं यावद्देवोच्चरे
न्मन्त्रं तावत्प्राणान्निरोधयेदित्युक्तेः ननु किं पिण्डपंक्तयः प्रागुप-
क्रमाः प्रत्यगुपक्रमा वा तत्र पश्चाद्दादाग्रेनुमातादिवर्गायमित्यापस्तं-
बसूत्रा तत्तोभ्यश्च पिण्डाद्दहपश्चिमास्युरिति भाष्यार्थसंग्रहकृद्व्याख्या
त्पश्चिमसंस्थाइति तथा पिण्डात्पश्चसेन तत्पत्नीनाम् किञ्चि-
दन्तर्धायेति शांखायनगृह्येऽपीति पित्र्यकर्मत्वा त्पंक्तीनां प्राक्-
संस्थत्वानुपपत्तेः प्रत्यक्संस्थातैवेत्यन्ये उच्यते यदुक्तं प्रागुपक्रमा-
इति तत्रतया सति पित्र्यकर्मणि प्रदक्षिणोपचारः स्यात् । पितॄ-
णामप्रदक्षिणमित्यादिवाक्यवैयर्थ्यापत्तेश्च द्वितीयेपि स एव दोषः
नचैवमिष्टं प्रत्यगुपक्रमाः प्रागपवर्गाः पित्र्यब्राह्मणसंस्था भवन्ति

दक्षिणादिगुपक्रमादुदगन्ता एववा वैश्वदेवद्विजसंस्था भवन्तीति विधायनेन ब्राह्मणोपवेशस्थत्तत्रापंक्तीनामपि तथैवस्थापितत्वात् अन्यथावैषम्यः युक्रमोपपत्तेः सदाचारादपि प्राक्सं स्थैवेति यत्वापस्तंबादिगृह्यद्वयम् यच्च अग्नेर्दक्षिणादेशेतुस्थानंकुर्वीतसैकतं मंडलंचतुरस्रं वादक्षिणावनतंतथा तत्रस्थानेततोदर्भानेकमूलान्वितान्बहून् दक्षिणाग्रानुदक्संस्थान्द्विधा तांस्तृणुयात्समं पूर्वभागस्थदर्भेषु पितृपिण्डान्विनिक्षिपेत्। पश्चात्स्तृतेषुदर्भेषु मातृपिण्डान्विचक्षणइतिद्वद्धवशिष्टवाक्यम्। तत्तच्छाखिनामेवेत्यविरोधः अथकिंपिण्डप्रमाणंनियतम् नवा तत्रकपित्थबिल्वमात्रांश्च दद्यादामलकैःसमान् कुक्कुटांडप्रमाणान्वा बदरेणसमानथ नालिकेरसमान्वापि अधिकान्नप्रदापयेत् प्रमाणमेतत्पिण्डाना मंगिरामुनिरब्रवीदित्यनेन विकल्पादनियतमित्य के तन्न अस्यवाक्यस्य श्राद्धविशेषविषयत्वेन व्यवस्थितेः तथाचमरीचिः आर्द्रामलकमात्रांस्तु पिण्डान्नकुर्वीतपार्वणे एकोद्दिष्टेबिल्वमात्रम् पिण्डमेकन्तुनिर्वपेत् नवश्राद्धे स्थूलतरम् तस्मादपिचनिर्वपेत् तस्मादपिस्थूलतरमाशौचे प्रतिवासरमिति अत्रैकेपिण्डदानंकेवलपिण्डैरेव नभुग्नकुशैरिति तन्न अंशभागिपत्नीनाङ्कुशैरेवश्वशुरांतधानोपपत्तेः तथा। श्वशुरस्याग्रतोयस्मा च्छिरःप्रच्छादनक्रिया पुत्रैर्दर्भैर्गणाकार्या मातुरभ्युदयार्थिभिरिति मात्स्येपि ततःकल्पांतरेदत्वा तत्पत्नीभ्यःकुशान्बुधइति।

## मू० आचांतेष्वित्त्येके ॥ १३ ॥

एकग्रहणम् स्वस्वशाखोक्त विज्ञापनार्थं मुनिभिर्भिन्नकालेतु पिण्डदानेतुयत्स्मृतम् तत्स्वशाखागतं यत्नतस्तत्कुर्याद्विचक्षण-

इतिवाक्यात् संग्रहकारोपि आन्यत्वकालभेदेन कर्माणिमुनयोज-गुः स्वस्वगृह्यानुसारेण विकल्पंतेषुयुज्यतइति ततश्चाचांतेषुद्वि-जेषु पिण्डदानमित्येकेजगु र्नकात्यायनइत्यर्थः विकल्पएवायमि-तिकर्कादयः ननुकिंलेपभुजान्दर्भमूलेषुदर्भाग्रेषुवादानमिति दर्भ-मूलेलेपभुजः प्रीणयेल्लेपघर्षणैरित्यादिवाक्यान्मूलेष्वित्येके तन्न लेपभाजश्चतुर्थाद्याइतिमात्स्यवाक्ये नचतुर्थपुरुषादीनांलेपभागि-त्वेन दर्भमूलवैयर्थ्योपपत्तेः. मार्कण्डेयोपि लेपसम्बन्धिनश्चान्येपि तामहपितामहादिति नन्वेवन्दर्भमूलेलेपभूजइत्यर्थक मितिचेन्न तस्यकरघर्षणविषयत्वात् तथाचविष्णुः दर्भमूलेषुकरावघर्षणमिति अतोदर्भाग्रेषुलेपभुजांदर्भमूलेकरप्रोञ्छनमित्यविरोधः तथाचवृद्धया ज्ञवल्क्यः दत्तेपिण्डेततोहस्तन्निर्मृज्याल्लेपभागिनां कुशाग्रेसम्प्रदा-तव्यंप्रीयतांलेपभागिनइति तथा उत्तरीकुशमूलन्तु पितृमूलन्तुदक्षि णे कुशमूलेषुयोदद्यान्निराशाः पितरोगताः ददातिलेपभागिभ्यः पि ण्डानामग्रतः सदा प्रपितान्तेचयोदद्यात्तृप्तिः पञ्चदशाब्दिकीति।

**मू० आचान्तेषूदकम्पुष्पाण्यक्षता नक्ष-य्योदकञ्च दद्यात् ॥ १४ ॥**

(१) शाखान्तरोक्तमन्त्रैरुदकादि दानार्थश्च तत्पुराणे। अपां-मध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठितं ब्राह्मणस्यकरेन्यस्ताशिवा आ-पोभवन्तुमे इत्युदकदाने लक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसतिपुष्करे लक्ष्मीर्वसतिगोष्ठेषु सौमनस्यन्ददातुमइति पुष्पादिदाने अक्षत-श्चास्तुमेपुण्यं शान्तिपुष्टिर्धृतिस्तुमे यद्यच्छ्रेयस्करंलोके तत्तदस्तुस-

(१) ब्राह्मणेषुकृताचमनेषुसत्सुतेभ्यउदकादिकञ्चदद्यात् पुष्पाणिचाप्रतिषिद्धा-नि। पद्मोत्पलमल्लिकायूथिकाशतपत्रचम्पकाद्यानिगन्धरूपसम्पन्नान्यपिदद्यात्॥

दाममेत्यत्तदाने एतद्यज्ञोपवीतिनाकार्यं आशीरूपत्वात् तामु-
प्रोक्षितादियत्कर्मतत्कर्तव्यं यवादिना सव्येनेत्यर्थः । तथा विसर्जनं
सौमनस्यमाशिषः प्रार्थनंविना पित्र्यमन्यत्प्रकर्तव्यमाचीनावीति-
नासदेत्युक्तं अत्राचान्तेष्वित्यनुवृत्तौ पुनस्तद्ग्रहणं वैश्वादिसंक-
ल्पान्त पिण्डप्रयुक्तंकर्माचमनात्प्रागेवेतिज्ञापनार्थं अतोनाचान्तेषु
तत्सर्वंकृत्वाचान्तेषूदकादिदत्वा चाक्ष्योदकंददादित्यर्थः । तच्चो-
क्तंपिण्डपितृयज्ञसूत्रे तथाचपिण्डान्ददातीत्युपक्रम्यात्रपितरइ-
त्युक्त्वोदङ्मुख आत्तमनाऽमीमदन्तइति अत्यवनेज्य पूर्ववन्नीवीं
विस्रंस्य नमोवइत्यञ्जलिङ्करोत्येतद्व इत्यु पास्यति सूत्राणिप्रतिपि-
ण्डमूर्णादशावावपत्युत्तरे यजमानहृल्लोमानिवोर्जमित्यपोनिषि-
ञ्चत्यवधायावजिघ्रति यजमानउल्मुकसकृदाच्छिन्नान्यग्नावाधत्त-
इति मध्यमंपिण्डंपत्नीप्राश्नातिपुत्रकामेति अस्यार्थः । पिण्डान्द-
त्वाचम्य यवानादायात्रपितरइत्यादि वृषायध्वमित्यन्तंमन्त्रञ्जपित्वा
प्रदक्षिणंवामेनावृत्त्योदङ्मुखो यथाशक्तिश्वासमनुरुध्य शुभन्ध्यायेत्
तथाचपरिशिष्टं वामेनवर्तनं केचिदुदगन्तुप्रचक्षते स्कांदेपि प्रक्षा-
ल्यहस्तावाचम्य शुभन्ध्यायेदुदङ्मुखइति शुभध्यानंसव्येनेत्येके तन्न
मानाभावात् आवृत्त्यैतेनैव प्रदक्षिणमावृत्त्यामीमदन्तेतिमन्त्रं ज-
पित्वाक्षतान् भुविपिण्डमूलेक्षिपेदित्यर्थः प्रदक्षिणमथावृत्त्य पूज-
येदक्षतैर्यवैरतिवाक्यात् पितॄंश्चमनसाध्यात्वा ऽक्षतान्निक्षिपेद्भुवी
ति हृज्ययाज्ञवल्क्योक्तेश्च अवनेज्यपूर्ववदित्यत्र गोत्राद्युच्चारणेनेत्यर्थः
तथाच श्रुतिः अथोदपात्रमादायावनेजयत्यसावनेनिक्ष्वे त्यत्रयज-
मानस्यपितरमित्यादि यत्तु तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेदि-
तिवाक्यं यच्च हस्तान्नवारिणाकार्यं पुनरप्यवनेजनमितिस्कन्दवा-
क्यम् तदन्यशाखिविषयं इहतुपूर्ववदवनेज्येत्यतिदेशात् अतिदेश-

विधेरनित्यत्वा दत्वापिप्रक्षालनञ्जनैर्नतिवा नीवीं विस्रंस्य नमोव-
इत्यनेन षडञ्जलीन्करोतीत्यर्थः नन्वञ्जलिमित्येकत्वात्कथंषडञ्ज-
लीनिति षड्तुनतिरूपत्वादञ्जलेरित्यदोषः तथाचश्रुतिः षट्कृ-
त्वोनमस्करोति षड्वाऋतव ऋतवःपितरइत्यादि एतद्वइतिमन्त्रेण
प्रतिपिण्डंसूत्राणि ददातीत्यर्थः । ननु प्रतिपिण्डमितिपृथग्विधे
रेतद्वइतिकथन्तन्त्रविधिः एकग्रहणेनैव त्रिषुदानेन सकृन्मन्त्रवि-
धयर्थमित्यदोषः एकद्रव्ये कर्मावृत्तावितिपरिभाषितत्वात् प्रति-
पिण्डमित्युक्तेर्मन्त्रावृत्त्यैव सूत्रादानमित्येके उर्णादशाचेतिसूत्रा-
भावइत्यर्थः । यत्तु दशाविवर्ज्जये त्वाज्ञीयदाप्यहतवस्त्रजामिति
तत्सूत्रसत्वेबोध्यं दशायास्तदभावविषयत्वात् तथाचशौनकः सू-
त्राभावेदशासूर्णां वेति यत्तु नमोवःपितरोमन्त्रञ्जपन् सूत्रम्प्रदाप-
येदिति सूत्रमन्त्रान्तरोक्तिः सान्यशाखिविषया वाजसनेयिनान्त्वेत-
द्वइति कात्यायनोक्तेः तथाचव्याघ्रः एतद्वःपितरोवासो दशान्दत्वा-
पृथक्पृथगिति दशाद्यभावे सूत्रोक्तिः ततःसूत्रंप्रदातव्यम् कार्पास-
मथवानवं दुकूलम्पट्टवस्त्रंवा तदभावेकुशान्यसेदिति स्कन्देपि कुशा-
द्यभावेवयसितूत्तरेलोमवास्त्वकमिति उत्तरेवयसिपञ्चाशदूर्ध्वंहृल्लो-
मेतिविशिष्टविधिः ऊर्जमित्यपोनिषिञ्चतीत्यत्रगोत्राद्युच्चारपूर्वकम्
तिलोदकदानमित्येके ऊर्जदानेतिलादि द्रव्यस्यगोत्राद्युच्चारस्य-
चानुक्तत्वात्केवलेनजलेनेत्यन्ये तथाचबृहस्पतिः अनभ्यर्च्योदपा-
त्रन्तु तेषामुपरिनिक्षिपेत् पठन्तिच सर्वञ्चैवपवित्राणि पयोमधुति-
लास्तथा ऊर्जकालेनदातव्याः केवलञ्चोदकंक्षिपेदिति अवधाये-
त्यत्र यजमानोक्तिर्ऋत्विग्व्युदासार्था अवधायेपात्रे इतिशेषः ।
पात्रे पिंडान्समुद्धृत्य आ घ्रायपितृमन्त्रवदिति याज्ञवल्क्योक्तेः
उल्मुकंसकृदाच्छिन्नान्यग्नावभ्यादधाति क्षिपतीत्यर्थः सकृदाच्छि-

न्नानीति साग्निपरमित्युक्तं एवं पिण्डोपयुक्तम्पूजां तंकृत्वाचतुर्थ्यन्त-
संकल्पेनधूपादिकंनिवेदयेत् तथाचस्कान्देसमभ्यर्च्यधूपदीपनैवेद्या-
नि निवेदयेत् प्रकुर्यादथसंकल्पंकृत्वाचार्घ्योदकन्ततइतिततःसुप्री
चितमस्त्वित्यादिनोदकानिदत्वाचार्घ्योदकंनतल्लेपाद्दद्यात् तथाच
कात्यायनः अर्घ्योदकदानन्तुअर्घदाभवदिष्यते षष्ठ्यैवनित्यन्त-
त्कुर्यान्नचतुर्थ्याकदाचनेत्यतिदेशस्तन्निषेधार्थः अक्षय्यमस्त्विति-
प्रोक्तः प्रत्येकम्पिहततःक्रमादितिशङ्खोक्तेः

मू० अघोराःपितरःसन्तुसन्त्वित्युक्ते गो-
त्रन्नोवर्द्धतांवर्द्धतामित्युक्ते दातारोनोभिव-
र्द्धन्तांवेदाः सन्ततिरेवच श्रद्धाचनोमाव्यग-
मद्बहुदेयञ्चनोस्त्वित्याशिषःप्रगृह्य ॥ १५ ॥

इतिराद्यर्थे तेनस्मृत्युक्तमन्यदाशीः प्रार्थनमितिशले.कका-
रणमित्यर्थः सन्त्वित्यत्रप्रतिवचनान्तरं प्राप्त्यर्थं तथाचस्कान्दे अघो-
राः पितरःसंतुसन्त्वित्युक्तेपुनर्द्विजैः गोत्रन्तथावर्द्धतांनस्तथेत्युक्त-
स्ततःपुनः दातारोनोभिवर्द्धन्तांवेदाः सन्ततिरेवच श्रद्धाचनोमा-
व्यगमत् बहुदेयञ्चनोस्त्विति अन्नञ्चनोबहुभवेदतिथींश्चलभेमहि
याचितारश्चनःसंतुमाचयाचिष्मकञ्चन इत्येताश्चाशिषः सर्वाःग-
ह्णीयात्प्रतिभाषितमिति अथवेतिशब्दप्रकारेतेनतिलकमूर्द्धाभि-
षेकाशीः प्रार्थनंसव्येनपूजादिवत्कार्यमित्यर्थः तथाचयाज्ञव-
ल्क्यः ततश्चतिलकंकुर्यान्मन्त्रेणानेनयत्नतः मन्त्रश्चनित्यानुष्ठाने
त्यादि प्रागेवदर्शितः अतश्चाशीः प्रार्थनम्पिअप्येवयज्ञोपवीतिना-
कार्यमितिप्रागुक्तंदक्षिणांदिशमाकांक्षन्याचेतेमान्वरान्पितॄनिति

मनूक्तेः देवलोपि चाचर्य्यं सर्वमेवास्त्वित्युक्त्वा भूयः समर्चयेदिति मूर्द्धाभिषेकश्चाचर्य्यदानात्प्रागित्येके ॥

मू० स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य्यं स्वधांवाचयिष्यऽइतिपृच्छति ॥ १६ ॥

स्वधावाचनीयाःन्युब्जोपरिस्थापिताः कुशाःपवित्राणितदधस्थापितानि तेषांकृतप्रयोजनत्वादन्यपवित्राणिकार्य्याणीत्यन्ये तत्कर्कादिभिर्नादरस्तमित्युपेक्षितं ततश्चसपवित्रान्स्वधावाचनीयकुशानादायास्तीर्य्यस्वधांवाचयिष्येइति पङ्क्तिमूर्द्धन्यंसर्वान्वापृच्छेदित्यर्थः नन्वेषामास्तरणंकिंपङ्क्तिमध्येपार्श्वेवा तत्रपिण्डपुरस्तादित्येके तदन्तरालइत्यन्ये एतद्द्वयमपिन मानाभावात् अतः पिण्डोपरिसमास्तीर्य्यापोनिषिञ्चेदित्यर्थः तथाचगोभिलसूत्रं स्वधावाचनीयान्पिण्डोपरिसमास्तीर्य्येति परिशिष्टेपि पवित्रान्तर्हितान्पिण्डान्सिञ्चेदुत्तानपात्रकादिति नचास्यशाखान्तरविषयत्वं स्वधावाचनिकंसर्वंपिण्डोपरिसमाचरेदिति मात्स्योक्तेः स्वधावाचनीयेष्विति स्वधावाचनीयाइतिछप्रत्ययांतं तन्नाशेप्रतिनिधिः कार्य्यइत्युक्तं मुख्यद्रव्येच्छापरत्वात् तथाचउत्तरसूत्रं स्वधावाचनीयेष्वपोनिषिञ्चतीति ॥

मू० वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तुस्वधेत्युच्यमाने स्वधावाचनीयेष्वपोनिषिञ्चत्यूर्ज्जमिति ॥ १७ ॥

मात्रादिमनुष्यायकत्वः पृथङ्निर्देशादतन्त्रता स्वधावाचनएव-
चेत्युक्तेः वाच्यतामिति ॥

**मू॰ उत्तानंपात्रं कृत्वायथाशक्तिदक्षि-
णान्दद्याद्ब्राह्मणेभ्योविश्वेदेवाः प्रीयन्तामि-
तिदैवेवाचयित्वा ॥ १८ ॥**

पात्रंन्युब्जं यथाशक्तीतिसमदक्षिणाविध्यर्थं ब्राह्मणेभ्यइति
स्मृत्यन्तरोक्तपितृद्देशव्युदासार्थं तेनात्रब्राह्मणोद्देशेनैवदक्षिणा
दानसूत्रकृदभिप्रेतं तथाचदेवलः आचान्तेभ्योद्विजेभ्यश्चप्रयच्छेदथ
दक्षिणामिति पितृद्देशपक्षेपितृभ्यः प्रथमभक्त्यातन्मनस्कः समा-
हितः सुस्वधेत्याशिषायुक्तोदद्याच्छक्त्या तुदक्षिणामित्यादिविष्णुपु-
राणादावुक्तोन्यशाखिविषयः वाचयित्वेति कारितार्थनिर्देशाद्विश्वे
देवाः प्रीयन्तामितिब्रूतेतिद्विजान्प्रत्यध्येषणमुक्तं ततश्चविश्वेदेवाः
प्रीयंतामिति ब्रूतेतिविप्रानध्येष्यविश्वेदेवाः प्रीयन्तामितितैरुक्ते
पितृपूर्वंसव्येनदक्षिणांदद्यादित्यर्थः अत्रास्मत्पितुरमुकशर्मणोमुक
सगोत्रस्यवसुरूपस्य श्राद्धप्रतिष्ठार्थं ममुकसगोत्रायामुकशर्मणे वि-
प्रायेत्याादितुभ्यमहंसम्प्रददइतिप्रयोगः तन्त्रत्वेत्वस्मत्पितॄणामि-
तिबोध्यं पितृद्देशपक्षेत्वस्मत्पित्रे पितृभ्य इतिवेतिविशेषः ।
सतिलंनामगोत्राभ्यांदद्या च्छक्त्यातुदक्षिणाम् स्वस्तिवाचनकं कु-
र्यात्पिण्डानुधृत्यभक्तितः इतिवाक्यात् सूत्रे यद्यपि दक्षिणामितिसा
मान्येनोक्तम् तथापिपितृदेवयोः रौप्यस्वर्णेबोध्ये कनकंनि जंरा-
णांतुपितृणांरजतंस्मृ तमितिवाक्यात् अत्रसमंस्यादश्रुतत्वा दि-
तिन्यायाद्दक्षिणादानं सर्वेषांसममेवेत्येके देवपूर्वंश्राद्ध मित्युक्तेः
पूर्वंदेवेदक्षिणादानं पश्चात्पित्रइत्यन्ये पितृद्देशपक्षेदक्षिणा दा-

नमप्रसव्येन दैवपूर्वंब्राह्मणोद्देशेतु सव्येनेत्यपरे अपसव्यंतुतत्रापि मत्स्योहिभगवान्मेने इत्यादिस्मृतेः उभयशाखत्वात्संकल्पादिकमपसव्येन त्यागमात्रंसव्येनेतीतरे उच्यते यदुक्तंसर्वेषांदक्षिणात्समैवेतितन्न पात्रानुसारेण दक्षिणावैषम्योक्तेः तथाच एकपंक्त्युपविष्टानांविप्राणाम् श्राद्धकर्मणि भक्ष्यंभोज्यंसमंदेयंदक्षिणात्वनुसारतइति अनुसारतः पात्रविशेषानुसारेणेत्यर्थः यच्चदैवपूर्वंदक्षिणेति तदपिन पितृद्देशएव दैवपूर्वं सिद्धस्यपर्यवसानान्नब्राह्मणोद्देशइति तथाचदेवलः दक्षिणांपितृविप्रेभ्यो दद्याद्दिप्रेततोद्वयोरिति यदपिपितृद्देशेऽपसव्येनब्राह्मणोद्देशेसव्येनेति तदपिन पितृपूर्वकस्यसव्येनैवोक्तेः तथाचसएव सर्वंकर्मापसव्येनदक्षिणादानवर्जितमिति नचदक्षिणादानंदैवपूर्वं तस्यविसर्गरूपत्वात् तथाचहृद्दयाज्ञवल्क्यः पूर्वंपितृभ्योदद्यात्तुदेवेभ्यस्तदनंतरम् असुराःपितृरूपेणदत्तंहिं संतिदानवाः तेषांवैरक्षणार्थायपश्चाद्दैवेविसर्जयेत् । याज्ञवल्क्योपि पितृपात्रं तदुत्तानंकृत्वाविप्रान् विसर्जयेदिति यत्त्वपसव्यंतु तत्रापीति तदन्यशाखिविषयं यच्चसंकल्पादिकमपसव्येनत्यागमात्रंसव्येनेति तन्न मानाभावात् तस्मादुभयपक्षेपि कात्यायनमतानुसारिणां दक्षिणादानपितृपूर्वकं सव्येनैवेत्तिसिद्धम् तथाचहेमाद्रिपद्धती सूक्तस्तोत्रजपंत्यक्त्वापिण्डाघ्राणंचदक्षिणाम् आह्वानंस्वागतंतर्पणंविनाचपरिवेषणंविसर्जनंसौमनस्यमाशिषांप्रार्थनंतथा विप्रप्रदक्षिणांचैव स्वस्तिवाचनकंविना पित्र्यमन्यत्प्रकर्तव्यं प्राचीनावीतिनासदेति तथा उपवीतीपितृप्रीत्यै वित्तशाठ्यविवर्जितः दक्षिणांपितृविप्रेभ्यः पूर्वं दद्यादथेतरान् इतरेभ्यइत्यर्थः तथा स्वागतंस्वस्तिवचनंदक्षिणांचप्रदक्षिणाम् गोत्रवादनमर्घंच षडेतेउपवीतिनइति

गोत्रवादनम् गोत्रन्नो वर्द्धतामित्यादिनानात्वमाकलय्याहसंग्रह कारोपि याज्ञवल्क्योविसर्गात्प्राक् पात्रमुत्तानमिच्छति यमोविसर्जनंकृत्वा गृह्यकर्त्तापिशौनकः प्रीतिपश्चात्तुदेवानामितिकात्यायनादयः सर्वेषामपिपक्षाणाम् स्वगृह्योक्तंविधीयते स्वगृह्योक्तस्यभावे ग्रहणम् स्वेच्छयाभवेदिति अन्यच्च विसर्गरूपप्रतिज्ञापात्रचालनन्तुपूजने दैवद्विजवाचनादिकंनकुर्यात् दक्षिणाया उपलक्षणार्थत्वात् तथा मंत्रहीनंक्रियाहीनम् भक्तिहीनंद्विजोत्तमाः श्राद्धंसंपूर्णतांयातु प्रसादाद्भवतांममेति गोभिलोपि दैवेवाचयित्वा पिण्डपात्राणि चालयित्वा दक्षिणांदद्यादिति पिण्डांश्चपात्राणिचेतिविग्रहः नित्यत्वात् अचालयित्वातत्पात्रम् स्वस्तिकुर्वंतियेद्विजाः निराशाःपितरस्तेषां शप्त्वायांतियथागतम् स्वस्तुपूजाऽलसव्येनेत्यके तत्र आचम्योदक्परावृत्य विरायम्य शनैरसून् षडृतूंश्च नमस्कुर्यात्पितॄनेवचसर्वदेतिवाक्यात् विशेषमाहजातूकर्ण्यः पात्राणिचालयेच्छ्राद्धे स्वयंशिष्योथवासुतः नस्त्रीभिर्नचबालेन नासजात्याकथंचनेति बृहस्पतिरपि भाजनेषुचतिष्ठत्सु स्वस्तिकुर्वंतियेद्विजाः तदन्नमसुरैर्भुक्तम् निराशैःपितृभिर्गतैः भाजनानिभोजन पात्राणि स्वस्तीतिभगवन्ब्रूहीतिपारस्करः अत्रब्राह्मणभर्त्तोददतादिति सूत्रयलाचतुर्थ्यागोत्राद्युच्चारोविप्राणांसूचितः ततोऽद्यपितुरमुकशर्मणो मुकसगोत्रस्य वसुरूपस्य श्राद्धप्रतिष्ठार्थमस्मकगोत्रायामुकशर्मणइत्तरादि तुभ्यमहंसंप्रददे इतिप्रयोगः तन्त्रेषुषष्ठीबहुवचनेन पितृ हे शपत्नीत्वमतिपचद्व्य दि चतुर्थ्यांप्रयोगः विसर्जनमन्त्रमाह ।

मू० वाजेवाजेवतेतिविसृज्यानुव्रज्यामावा-

जस्येतिप्रदक्षिणीकृत्यनमस्कृत्यप्रविशेत्।१८।

ततोवाजेवाजइत्त्यनेन कुशमूलैः पितृन्विप्रान्पूर्वंपश्चात्कुशाग्रैर्देवद्विजान्विसृज्यतानतु व्रज्यामावाजस्येत्यनेन बहिर्यज्ञोपवीतीतान् प्रदक्षिणीकृत्य नमस्कृत्यप्रविशेद्गृहमितिशेषः अत्रकुशाग्रैरेवसर्वं विसर्गइत्येके तथा वाजेवाजेतिमन्त्रेणकुशमूलेनताविपतृन् देवांस्तेनैवमन्त्रेणकुशाग्रेणविसर्जयेदिति मनुरपिआमावाजस्यमन्त्रेण कर्तव्यं हिप्रदक्षिणम् नमस्कृत्यततोविप्रानासनेषूपवेशयेत् तांबूलंहिततोदद्यात्पाद प्रक्षालनंततः पादाभ्यंगंततःकुर्यात्पादमर्दनमेवच अत्रविसर्गप्रदक्षिणे ऽपसव्येनत्येकेतन्न स्वागतंस्वस्ति वचनन्दक्षिणांचप्रदक्षिणामित्युक्तेः व्रव्रयाज्ञवल्क्यः वाजेवाजे जपेन्मन्त्रमामावाजस्यवैपुनः बहिःप्रदक्षिणं कुर्यादछिन्नजलधारया। बन्धुवर्गेणसहितःसभार्यःसकुटुंबकः पुनराचम्यतत्रैव(१)स्वादुषंठं जपेत्सुधीः ब्राह्मणाः संपठेयुस्तेश्राद्धभोक्तृद्विजोत्तमाः श्राद्धारंभेवसानेच पादशौचेद्विजार्चने विकरेपिण्डदानेच षट्सुचाचमनंस्मृतमिति कात्यायनोक्तेः विसर्जयेत्ततोविप्रान्प्रणिपत्यपुनःपुनः आहारमुपगच्छेयुःपुनराचमनन्ततः वैश्वदेवन्ततःकुर्यात्स्वशाखोक्तविधानतइतिद्वारगमनासंभवेतुबहिःप्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् बन्धुवर्गेणसहितःपत्नभार्यासमन्वितइति अथोर्ध्वकृत्यं तत्रोच्छिष्टमार्जनप्रतिपत्तिपिण्डविकिरप्रतिपत्तिवैश्वदेवनित्यश्राद्धशेषभोजननियमादीन्युच्यंते पैठीनसिःनस्पृशन्तितथादृष्टास्तथैवोच्छिष्टमार्जनंतैस्तुपृष्टे तदुच्छिष्टेपितरोयांत्यधोगतिं प्रचेतः:खनित्वानिक्षिपेद्भूमा वन्ययास्पर्शनम्भवे

(१) संहितायामुतरार्द्धे । २८ । अ० मन्त्रः । ४६ ।

त् निषिद्धं स्पर्शनन्तेषांतस्मात्खननमुत्तमं तत्रोच्छिष्टमार्जनेविरुद्धा-
नित्राक्यानिदृश्यन्ते तथाहिवसिष्ठः ॥ श्राद्धेनोद्वासनीयानिउच्छिष्टा
न्यादिनक्षयात् श्च्योतन्तेवैस्वधाकारास्तेपिबंत्यकृतोदकाः ब्रह्मपु-
राणेपि अस्तंयातेततःसूर्येविप्रघात् शिवांभसि अधोमुखानिप्रय-
तोभूत्वासर्वाणिनिक्षिपेत् याज्ञवल्क्यः निक्षिपेत्सत्सुविप्रेषुद्विजो-
च्छिष्टंनमार्जयेत् श्राद्धदेशोपविष्टेषुविप्रेषुचनमार्जयेदितिविज्ञाने-
श्वरः अतृकेव्यवस्थापयन्ति देवपात्राणितद्दिनेमार्जयेन्नपित्र्याणी-
ति तथाचदेवलः एवंतृप्तेषुपानीयन्दद्यादाचमनन्तथा उच्छिष्टस्था-
प्यपनयेत्पितृणान्नोपमार्जयेदिति अन्ये त्वाहुः अस्तंयातइत्यनेनरा
त्रौमार्जनविधानाद्रात्राववेति तत्रनादरः पितृणामुच्छिष्टमुन्नयेन्ना
वमार्जयेद्वेत्यस्मद्विकल्पोपपत्तेः ॥ द्वितीयेह्निसर्वेषांभाण्डानांश्च
चालनंस्मृतमितिब्राह्मवचनेसर्वेषामितत्रनेनसर्वेषामेवमार्जनोपपत्ते
द्वितीयोपिनसम्यगिवाभाति उच्छेषणंतुतत्तिष्ठेद्यावद्विप्रविसर्ज
नमितिमनूक्तावपित्र्यर्थ्यात् तस्मात्यथासम्भवस्विकल्पइतियुक्तं
यत्तुद्वितीयेह्नीतिब्राह्मवचनन्तदप्यशुचिस्पर्शरहितागृह्यांतरसम्भ
वविषयं तथाचप्रचेताः भृत्यवर्गस्ततोभुंक्तेकव्यंशेषंस्वगोत्रजैःअन्य
स्यांश्राद्धशालायांद्विजोच्छिष्टंनमार्जयेदिति तस्माद्गृहगृहांतरेसम्भ
वति नमार्जनं तदभावेद्विजांप्रेष्यपिण्डप्रतिपत्यनन्तरम्मार्जनमिति
व्यवस्थेतिसिद्धम् पिण्डप्रतिपत्तिमाहयाज्ञवल्क्यः पिण्डांस्तुगोजवि-
प्रेभ्यो दद्यादग्नौजलेपिवा गोशब्दोगतवीर्यवृषभपरः तथाचवायवीये
गतवीर्यस्तु योह्यश्वोऽनड्वांश्चैव तथाविधः तयोःपिण्डःप्रदातव्योयतो-
वीर्यन्नरोहति एतत्कामनाविशेषेव्यवस्थितं तथाचवायुपुराणम् पि-
ण्डमग्नौसदाददद्भोगार्थीसततंनरः पत्न्यैप्रजार्थीदद्यात्तु म-
ध्यमंमन्त्रपूर्वकम् । उत्तमाङ्गतिमन्विच्छन् गोभ्योनित्यम्प्रयच्छति प्र-

जां मन्त्रां यशः कीर्त्तिमप्सुनित्यन्निधापयेत् प्रार्थयेद्दीर्घमायुस्तुवायस-भत्र: प्रयच्छति आकाशङ्गमयेदाप्सुस्थितो वादक्षिणामुखः पितृणां स्थानमाकाशं दक्षिणादिक्तथैवचेति यथागृह्यं पिण्डप्रतिपत्तिरित्यन्ये त एकात्यायनः आधत्तइतिमध्यमं पिण्डम्पत्नीप्राश्नाति पुत्रकामेति आधत्तइतिप्राशनमन्त्रः समर्पणे त्वन्यः अपान्त्वौषधीनां रसम्प्राश-यामि भूतकृतङ्गर्भन्धत्स्वेति पत्नीतिपुत्रकामस्त्रीमात्रोपलक्षणमि-त्येके पुत्रकामापतिव्रतेत्यस्मन्मतं तथाचमनुः पतिव्रताधर्मपत्नी पितृपूजनतत्परा मध्यमन्तु ततःपिण्डन्दद्यात्सम्यक्सुतार्थिनीति अवैतत्सन्दिह्यते किंविकिरउच्छिष्टे निक्षिपेत्किंवापिण्डेष्विति त-त्रैकेआहुः तस्यास्पृश्यत्वादुच्छिष्टएवेति अन्येत्वाहुरुच्छिष्ट पिण्ड-त्वात्पिण्डेष्वेवेति तदुभयमपिनसम्यग्भाति तस्यपिण्डोच्छिष्टवैल-क्षण्यात् अशुचिपिण्डत्वाच्च अतश्चपृथगेवकाकेभ्यो निक्षिपेदिति पिण्डानामपितद्दानस्य पाक्षिकत्वात् तथाचधर्मप्रदीपे निक्षिपे-त्तु शुचौभूमौकाकेभ्यो विकिरन्तथेति अत्रैकेगृहेपिश्राद्धं कृत्वाप्सु पिण्डान्विक्षिपन्ति तदसत् तीर्थश्राद्धविषयत्वात् तथाचविष्णुधर्मो-त्तरे तीर्थश्राद्धे सदापिण्डं क्षिपेत्तीर्थे समाहितः दक्षिणाभिमुखो-भूत्वा पितृदिक्सा।इकीर्तितेति वैश्वदेवसूत्रेऽत्र प्रपञ्चयिष्यते नि-त्यश्राद्धे तु मार्कण्डेयः नित्यक्रियांपितृणान्तु केचिदिच्छन्तिसत्तमाः नपितृणान्तथैवान्ये शेषंपूर्ववदाचरेत् नित्यक्रियानित्यश्राद्धं तुल्य-विकल्प एवायमित्येके करणेउपकारातिशयो ऽकरणेऽत्रवायोने-त्यन्ये तदुभयमपिनसम्यक् पूर्वव्यवस्थोपपत्तेः तथाच नित्यश्राद्धं नकर्त्तव्यं प्रसङ्गादात्रसिध्यति श्राद्धान्तरेकृतेन्यच्च नित्यत्वात्तन्नहा-पयेदिति एकोद्दिष्टादौ पितामहादि तृप्त्यसम्भवात्कर्त्तव्यम्पार्वणादौ प्रासङ्गिकतृप्तेनेतिव्यवस्थेत्यर्थः आपच दर्शादिश्राद्धनिष्पत्तौ ननि-

तत्स्वपृथक्क्रिया तेनैव तस्यसिद्धिःस्यात्कात्ये नितराग्निहोत्रवदिति एवमेकपार्वणादावपि द्वितीयेतुनितरात्वादनुपपत्तेः शेषभोजनेपि- विवदन्ते एकादश्याद्दावाग्राणस्योक्तत्वा च्छेषभोजनमनितरामिति केचित् शेषमन्नमनुज्ञातं भुञ्जीततदनन्तरम् वृद्धैः सार्द्धन्तुविधिव बुद्धिमान्सुसमाहितमिति शातातपोक्तेरनुज्ञापक्षएवपितृसेवित- भक्षणम् नितरामन्यथानैतरान्यं तत्द्वयमपिनातीवशोभते पूर्वव- नितरात्वेन आम्नायविध्युपपत्तेः तथाच उपवासन्तदाकुर्याद् दाघ्रा- यपितृसेवितमिति द्वितीयेत्वनुज्ञाताभावे तीर्थादावभोजनम्प्राप्नो- तीति नैतदुचितम् भोजनाभावे पृतरायश्रुतिः तथाचदेवलः श्रा- द्धकृत्तुयोविप्रो नभुङ्क्तेऽथकदाचन हव्यन्देवानगृह्णन्ति कव्यानि- तरस्तथा जैमिनिरपि श्राद्धंकृत्वातुयोविप्रो नाश्नातिपितृसेवितं सयातिनरकङ्घोरं यावदाभूतसंप्लवंब्रह्मवैवर्त्तेपिपितृद्विजेभ्यः स- र्वेभ्यो यद्यदन्नंनिवेदितं अश्नन्नेवहितत्सर्वंपितॄन्प्रीणातिमानव इति भोजनक्रममाहदेवलः निवृत्तेपितृमेधेतुदीपंप्रच्छाद्यपाणिना आचम्यपाणिप्रक्षाल्यज्ञातीन्शेषेणभोजयेत् ततोज्ञातिषुतृप्तेषुस्व- भृत्यान्प्रतिपूजयेत् पश्चात्स्वयञ्चपत्नीभिःपितृशेषमुदाहरेत् दीपंप्र च्छाद्यहस्तेनश्राद्धदीपम्प्रशान्तयेदितर्थः उदाहरेद्भुञ्जीत तथाचोश नाः शेषमिष्टभ्योदद्यात्स्वयम्भुञ्जीत आपस्तम्बः सर्वतःसमवदा याग्रासावरार्द्धंप्राश्नीयात् यथोक्तं ग्रासावरार्द्धं ग्रासन्यून समवदाये- त्यन्वयः यथोक्तमितिमांसभक्षणेनियमोनेतिकेचित् सर्वतःसमवदाये तिसर्वावदानस्योक्तत्वान्मांसभक्षणमपीतरान्य एवं सतिश्राद्धविप्रान् मांसम्भोजयित्वाभुञ्जीतान्यथानेति व्यवस्थेतितथाचप्रचेताः विप्रान भोज्ययोमांसमश्नात्यन्नंश्चभोजयेत् वृथाभवतितच्छ्राद्धम्भुत्काच नरकंव्रजेत्द्वति तथाच ततश्चवैश्वदेवान्तेसभृत्यैःसहबान्धवैःभु-

ञ्जीतातिथिसंयुतः सर्वान्पितॄन्निषेवितामिति तत्रमांसस्याभक्षणम-
न्यस्यभक्षणमितरविरोधो वा तथाचजातूकर्ण्यः मधुमांसनिवृत्तस्तु
श्राद्धकर्माणिवाचरेत्पात्रस्थं गंधमाघ्राय पितृणामनृणी भवेदिति-
पात्रस्थम्भोजनपात्रस्थम्पितृणामनृणाद्इति तदवघ्राणादपिपितृतृ-
प्तिर्भवतीतिदर्शिता ब्रह्मपुराणेऽपि भगिन्योबान्धवाःपूज्याः श्रा-
द्धेषुचसदैवहि. अश्रोपषण्डकषण्डाश्चतथान्ये दीर्घरोगिणः अश्रो-
रकिञ्चनः षंढोनपुंसकः पराङ्कावृत्तिः शातातपः श्राद्धंकृत्वा
परश्राद्धेभुञ्जन्तेयेयुविह्वलाः पतंति पितरस्तेषां लुप्तपिण्डोदक-
क्रियाः अत्रैके पश्चात्स्वयंच भुञ्जीतेत्यनेन प्रदोषपर्यंतम् सर्वा-
न्सन्तोष्यरात्रौ श्राद्धकृद्भुञ्जीतेत्याहुः तदयुक्तम् रात्रिभोजनस्य प्रति-
षिद्धत्वात् अतस्तद्दिवैवसर्वैःसहभुञ्जीत। तथाचजातूकर्ण्यः अह-
न्येवतुभोक्तव्यम् कृतेश्राद्धे द्विजन्मना अन्यथाह्यासुरंश्राद्धम् पर-
पाकेवसेदिति नागरखण्डेऽपि बलिंनिक्षिपेत्तस्मात् भोजनंचसमाच-
रेत् मौनेनदृश्यते सूर्योयावत्तावन्नराधिप यश्चैवास्तमितेसूर्ये
भुङ्क्तेचश्राद्धकृन्नरः व्यर्थतांयातितच्छ्राद्धम् तस्माद्रात्रौनभोजयेदि-
तिनियमानाह बृहस्पतिः तान्निशांब्रह्मचारीस्यात् श्राद्धकृच्छ्राद्धि-
कैःसह अन्यथावर्त्तमानौतौ स्यातांनिरयगामिनामिति पुनर्भोज-
नमध्वानम् यानमायासमैथुनं श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विव-
र्जयेत् स्वाध्यायंकलहंचैव दिवास्वप्नञ्च सेच्छया श्राद्धिनोविशेषमाह
यमः पुनर्भोजनमध्वानम् भारमायासमैथुनं संध्यांप्रतिग्रहंहोमं
श्राद्धभुक्त्वष्टवर्जयेत् संध्याहोमप्रतिषेधाकृतप्रायश्चित्तविषयौ दश-
कृत्वःपिबेदापो गायत्र्याश्राद्धभुग्द्विजः ततःसंध्यामुपासीतजपेच्च-
जुहुयादपीति भविष्यपुराणवचनात् वृद्धयाज्ञवल्क्यः अध्वनीनो-
भवेदश्वः पुनर्भोजीतुवायसः होमकृन्नेत्ररोगीस्यात् पाठादायुःप्र-

हीयते दानंनि:फलतामेति प्रतिग्राहीदरिद्रता कृमिकुज्जायते-
दासो मैथुनीसूकरोभवेदिति स्वबुद्धिकल्पितन्नेह वचनंलिखितं-
मया दृष्टश्रुतंसमूलं वा नवास्यान्मेनदूषणं दृष्टंयत्स्वल्पदोषेषु
निबन्धेषुतदाहृतं श्रुतिस्मृतिविरुद्धं यत्तत्पठन्तोत्युदाहृतम् । प्रमा-
णमप्रमाणंवा सर्वज्ञःकर्तुमर्हति । दृष्टे श्रुतेनविश्वासोमाहशैः
कर्त्तुमिष्यते ॥

इति श्राद्धकाशिकायां तृतीयाकण्डिका समाप्ता: ।

॥ * इत्यावसथिक श्रीमदतिसुखात्मजः श्रीविष्णुमिश्रात्मजन्मनः * ॥
॥ * कृष्णमिश्रस्यकृतौ श्राद्धकाशिकायां * ॥
॥ * अपरपक्षिकंश्राद्धं समाप्तम् * ॥

॥ श्रीः ॥

उक्तंप्रकृतिश्राद्धमिदानींविकृतिश्राद्धमुपक्रमते ॥

## मू० अथैकोद्दिष्टं ॥ १ ॥

अथशब्दआनंतर्ये प्रकृतिश्राद्धानंतरं विकृतिश्राद्धमेकोद्दिष्टमुच्य-
त इतिशेषः अथवाथशब्दो ऽधिकारार्थं एकोद्दिष्टमिति विकृति
श्राद्धोपलक्षणं ततश्च प्रकृतिवद्विकृतिरितिन्यायात्सर्वाङ्गप्राप्तौवि-
कृतिश्राद्धनियमोपदेशप्रधानाङ्गहीतानिभवंतीत्यधिकृतंयंतदित्य-
र्थः तानिच युगादिमन्वादि संक्रांतिमघाभरणी रविवार प्रेतषो-
डशक नवनितर तो र्थविवाहोपनयनोर्ध्वोक्त कपाल क्षयाहाम-
होमा पिण्डकसंकल्पश्राद्धानि तथाहिमत्स्यपुराणादिषु अयनद्वि-
तय श्च इम्विषुवद्वितयेतथा संक्रांतिषुच सर्वासुपिण्डनिर्वपणादृ-
ते पुलस्त्यः युगादिषुचकुर्वीतपिण्डनिर्वपणादृते तथा युगादौपि

तनञ्च तथा मन्वंतरादिषु अर्घपिण्डेनकुर्वीत वैष्णवंश्राद्धमाचरे-
त् वैशाखस्यतृतीयायां नवम्यांकार्तिकस्यच श्राद्धं संक्रांतिवत्कुर्या-
त्पिण्डनिर्वपणंविना मघायुगादौभरण्यां संक्रांतौरविवासरे पि-
ण्डदानं नकुर्वीत यदीच्छेत्सुतजीवितं सूतः मघायांपिण्डदाने न-
ज्येष्ठ.पुत्रोविनश्यति. कनीयांस्तुत्रयोदश्यां कुर्यादस्नदयात्तते प्रेत-
श्राद्धेषु सुमंतुः विकिरं नैवदातव्यं नकुर्यादाशिषांजपः षडञ्जली-
न्नकुर्वीत एकोद्दिष्टेषुसर्वदा आशिषोद्विगुणादर्भाः जपाशीःस्व-
स्तिवाचनम् पितृशब्दःस्वसंबन्धः शर्मशब्दस्तथैवच । पात्रालंभोवगा-
हश्च उल्मुकोल्लेखना दिकम् तृप्तिप्रश्नं चविकिरः शेषमन्नस्तथै-
वच । प्रदक्षिणाविसर्गश्च सीमांतानुव्रजस्तथा । अष्टादशपदार्थाश्च
प्रेतश्राद्धेविवर्जयेत् । सत्यव्रतः अनूदकमधूपंच गन्धमाल्यादिव-
र्जितम् । नवश्राद्धममंत्रं तु पिण्डोदकविवर्जितम् अनूदकमितिवै
दीर्घकाव्दसं अवनेजनोदकरहितम् अनूदकम् पिण्डोदकविव-
र्जितं प्रत्यवनेजनोदक रहितमितिकश्चित् तन्नोचितं स्मृत्यन्तर-
योः सहावप्रतीतिः तथाच अनूदकमधूपञ्च गन्धमाल्यविवर्जितम्
निनयेदस्मनिपूर्वं ततःश्राद्धं प्रकल्पयेत् पश्चाच्चनिनयेत् पूर्वं त-
स्मिन्नेवयथाविधीनि अस्यार्थः सर्वमस्मन्य.नेजनम् निनये त्तत-
स्तत्रापिपिण्डनिर्वपणाख्यं श्राद्धं कुर्यात्पश्चाच्च तत्रैव पिण्डप्रत्य-
वनेजनन्दद्यात् पूर्वमितिप्रत्यवनेजनमुच्यते पूर्वंपूर्वंपूर्वइति धा-
तारांयांयमनार्थत्वात् एवं सत्यनूदकम् पिण्डोदकविवर्जितञ्चेति
पदद्वयंऊर्ज स्वधावाचनाभ्याम् प्राप्तावुनिषेकनिषेध मित्युचित-
मित्यर्थः रेणुरपि अन्नं नविकिरेद्भूमौ गृह्णीयान्नाशिषोचतु
पात्रालम्भोनवात्यय्य मासनादिप्रयोगतः नामगोत्रेणसंबंध र-
हितम्पितृशब्दवत् नवश्राद्धं गृहेकार्यं भार्यायत्राग्न्योपिचेति । तथा

आसीमान्तं स्वस्तिवाच्यं पिण्डानांच नमस्कृतिः नपुष्पं पिण्डमूर्द्धनि-
स्थम् वन्देद्विप्रकरच्युतम् सर्ववर्णेषु सर्वत्रा ह्येषसाधारणो विधिरि-
ति मत्स्यपुराणे नित्यं तावत्प्रवच्ये ऽह्मर्घावाहनवर्जितम् दैव-
हीनं भवेत्तत्तु नियमादिविवर्जितं तीर्थश्राद्धं प्रकुर्वीतपाकान्ने-
नविशेषतः आमान्नेनहिरण्येन कन्दमूलफलैरपि एषामभावे-
कुर्वीत श्रद्धयाचजलेनच तथाब्राह्मणान्नपरीचेत तीर्थकालन्न-
चिन्तयेत् प्राप्ततीर्थोयदाविद्वां स्तदाश्राद्धंसमाचरेत् आवाह-
नन्नतीर्थेस्याद्दर्घदानन्तदाभवेत् आहूताःपितरस्तीर्थे कृतार्थाःसं-
तिवैद्विजाः तथा आवाहनन्नदिग्वंधो नदोषोदृष्टिसंभवःसकारु-
ण्यं वकर्त्तव्यम् तीर्थश्राद्धं विचक्षणैः भविष्येपि देवाश्चपितरोयस्मा
द्गंगायान्तुसदास्थिताः आवाहनंविसृष्टिश्च नतत्तेषांनविद्यते स-
कारुण्य मित्यनेन पितृव्यभ्राचादीनाम् पुत्राणामपि तीर्थश्राद्धे य-
थोपदेशं कर्त्तव्यमित्यर्थः काष्णाजिनिः मौञ्जीबन्धाद्विवाहस्य वर्षो-
र्द्ध्वंवर्षमेवच पिण्डान्सपिण्डानोदद्युः सपिण्डीकरणादृतदृति। स-
पिण्डीकरणं षोडश श्राद्धोपलक्षणम् संग्रहकारोपि विवाहोपनया
दूर्ध्वं वर्षंवर्षार्द्धमेवच नकुर्यातिपिंडनिर्वापं नदद्यात्कारणादृते
अत्रापवादस्तेनैवोक्तं महालये गयाश्राद्धे मातापित्रोर्मृतेहनि
कृतोद्वाहोपि कुर्वीत पिण्डनिर्वपणं सुतदृति ज्ञयाद्वैकोद्दि-
ष्टेतूक्तंपूर्वकृता नावाहनमित्यादि आमश्राद्धन्तु आचारतिलके
आमश्राद्धमनङ्गुष्ठ मग्नौकरणवर्जितं तृप्तिप्रश्नविहीनन्तु कर्त्तव्य
मानवैर्ध्रुवं धर्मप्रदीपे आवाहनाग्नौकरणं विकिरन्पात्रपूरणम्
तृप्तिप्रश्नंनकुर्वीत आमेहेमेकदाचनेति एतद्विषयमुपरिष्टाद्वच्यामः
अपिण्डकन्तु अग्नौकरणमर्घश्चावाहनावनेजने पिण्डश्राद्धे प्रकु-
र्वीत पिण्डहीनेनिवर्त्तते पिण्डनिर्वापरहितं यत्तुश्राद्धंविधीयते

स्वधावाचनलोपोस्ति विकिरस्तु न लुप्यते अन्यद्दक्षिणास्वस्ति सौम नस्यं यथास्थितं। धर्मप्रदीपेपि। आवाहनं चैव तथार्घमग्नौकरणमेव च अन्नव्यापोऽन्नविकरं पिण्डहीने विवर्जयेदिति इदञ्चाद्यवर्जनम-शक्त्या पिण्डकरणविषयं शक्तौ तु यथास्थिति विहितत्वात्। स्मृति संग्रहेपि अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् संकल्पश्राद्धमे-वासौ कुर्यादर्घादिवर्जितम् आपस्तम्बोपि संकल्पश्राद्धेऽर्घावा-हनाग्नौ करणपिण्डस्वधावाचनानि वर्जयेदिति व्याध्यादिनाय-थोक्तम् पार्वणं कर्तुमशक्तः संकल्पश्राद्धमेव कुर्यादित्यर्थः विकिरव्य-वस्था च तदवसरएवोक्ता हेमश्राद्धे तु बौधायनः संक्रमेन्न द्विजाभा-वे प्रवासे पुत्रजन्मनि हेमश्राद्धं संग्रहे च द्विजः शूद्रः समाचरेत् व्याघ्र-पादः आर्त्तवे न द्विजाभावे ग्रहणे देशविप्लवे आमश्राद्धं द्विजः कुर्या-च्छूद्रः कुर्यात्सदैव हि गालवः तीर्थे नग्नावापदि च देशभङ्गे रजस्यपि हेमश्राद्धं द्विजः कुर्याच्छूद्रः कुर्यात्सदैव हीति अन्यस्मृतिभ्योऽह्येयम् अत्रैतच्चिन्त्यते किमामश्राद्धे अग्नौ करणं स्यादुत नेति अत्रैक-आहुः सिद्धान्नेन विधिर्यः स्यादामश्राद्धे प्यसौ विधिः आवाहनादि सर्वं स्यात्पिण्डदानञ्च भारत दद्यादन्नं द्विजातिभ्यः शृतं वा यदि वा-शृतं येनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेदित्यति देशेना-ग्नौकरणम्भवतीति तदयुक्तम् अतिदेशस्य ब्राह्मणविषयत्वात्। तथा च कल्पलतायाम् आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदः सदा हस्तेऽग्नौकरणं कुर्यात् ब्राह्मणस्य विशेषतः अतश्चामश्राद्धे ग्नौकरण निषेधः शूद्रविषये भवितुमर्हति किञ्च भविष्यत्पुराणे धर्मसेवान्तु धर्मज्ञो यदि शूद्रः प्रकुर्वते अग्नौकरणमन्त्रोस्य (१) नमस्कारो विधीय-तइत्यग्नौ करणनिषेधान्नमस्कारविधानात् अथवा विहित प्रतिषि-

(१) अग्नये कव्यवाहनाय नमः ॥ १ ॥ सोमाय पितृमते नमः ॥ २ ॥

इत्वा त्वपिण्डकापिण्डकविषयौ विधिनिषेधा वकृतमधुनोच्यते त-त्रैकंउ. हिष्टोयत्र तदितिव्युत्पत्ते र्नवंनवं मिश्रंपुराणञ्चेति त्रिधैकोद्दिष्टं तत्रै कोद्दिष्टमित्यनेन किमुच्यते तथाचाङ्गिरा: प्रथमेऽह्नितृतीयेऽह्नि पञ्चमेसप्तमेतथा नवमैकादशेचैव नवश्राद्धानिषट्तथेति आश्वला-यनगृह्यपरिशिष्टम् नवश्राद्धन्दशाहानि नवमिश्रन्तुषड्नून् अत:प-रम्पुराणम्वै त्रिविध:श्राद्धउच्यते हारीतोपि प्रायश्चित्तंप्वाह चा-न्द्रायणन्नवश्राद्धम् प्राजापत्यन्तुमासिके एकाहस्तुपुराणेषु प्रायश्चि-त्तम्विधीयते इति तत्रैकआहु: चयाहेपार्वणस्यैवोक्तत्वा त्प्रेतैको-द्दिष्टमेवैतदिति तदयुक्तं खदितमितिल्पिप्रश्न इत्याद्यंगस्य प्रेत-श्राद्धेषु निरस्तत्वात् नचैतन्मासिकादि नवमिश्रञ्चभवितुमर्हति पित्रादिशब्दस्य प्रयोगाभावात् तस्मात्पुराणैकोद्दिष्ट मेवैतदिति-युक्तं अतश्चावाहनादि निषेधविशेषवर्जं सर्वाङ्गमत्रभवतीति विशेषविधि निषेधयो: शेषाभ्यनुज्ञाफलकत्वादितिन्यायात् ॥

## मू० एकोद्दिष्टएकंपवित्रमेक:पिण्ड: ॥२॥

कर्तव्यइतियथालिङ्गं वाक्यशेष: पात्रविशेषणत्वा ल्लिंगव्यत्यय: पूजाविधिर्वाप्रकृतितोनेकप्रसक्तौ विकृतित्वात्प्रतिषेध: तदयुक्तं प्रसज्यमान:प्रतिषिध्यत इति भट्टोपि दृष्टासर्वत्रशास्त्रेषुनिवृत्ति: प्राप्तिपूर्विका तदभावा विशेषोच नहिदृष्टोद्वयोरपीति पवित्रम्प्रा-देशमात्रं कुशैकदलम् अत्रकेचित्प्रत्यवतिष्ठन्ते दर्भा:पवित्रमित्युक्तं इतिवचनात् त्रिशाखस्तुभवेद्दर्भ स्तु:शाख:कुश:स्मृत: पञ्चशाख-स्तुनिधिप: षट्शाखन्तु पवित्रकमितिपारिभाषिकत्वाच्च पवित्रं-षट्शाखैककुशमिति तदयुक्तं पार्वणेषुचसर्वेषु पवित्रं द्विदलंस्मृ-तं एकोद्दिष्टेतुतत्प्रोक्तम् पवित्रं छिदलंनृप एकोद्दिष्टे शलाके-केति भागवतचतुर्विंशति मतवचनाभ्यामुल्लेखोपपत्ते: एकशब्दे-

पौनरुक्त्यं विस्पष्टार्थं ननुचैकोद्दिष्टमित्यनेनैव पिण्डैक्ये लब्धे ए-
कग्रहणं किमर्थं उच्यते पिण्डविच्छित्तिनिषेधार्थं मष्टांगपिण्डवि-
ध्यर्थंचेत्यदोषः तदुक्तम् तिथिच्छेदोनकर्त्तव्यो विनाश्राद्धं यदृच्छया ।
पिण्डश्राद्धं चदातव्यं विच्छित्तिं नैवकारयेत् निषिद्धदिनेपीतिशे-
षः श्राद्धशब्देन ब्राह्मणभोजनम् ॥ पिण्डशब्दस्य पृथगुपादानात्
चकारोऽग्नौकरणार्थः तेनसतिसंभवे ब्राह्मणभोजनम् पिण्डदा-
नंचचयाहेकार्यं भोजनासंभवेतु पिण्डमात्रमपिकार्यमितिविच्छि-
तिशब्दार्थइति माधवीये आहिताग्नेः पितृर्चनम् पिण्डैरेवब्राह्म-
णानपिवा भोजयेदिति निगमस्मृतौ वाशब्दस्यसंभवासंभवेन व्य-
वस्थितत्वात् एवंचाब्दिकमन्नेनैव कर्त्तव्यम् नामान्नेनेत्युक्तम्भव-
ति तथाचमरीचिः अनग्निकः प्रवासीच यस्यभार्यारजस्वला आम-
श्राद्धं प्रकुर्वीत नतरकुर्यान्मृतेहनीति लौगाक्षिरपि पुष्पवत्स्वपिदा-
रेषु विदेशस्थोप्यनग्निकः अन्नेनैवाब्दिकंकुर्या द्धेम्नानाऽमेनवा-
क्वचित् क्वचिदितिदर्शे रविग्रहेचयाहेसतीत्यर्थः तथाच गो-
भिलः दर्शेरविग्रहेपित्रोः प्रत्याब्दिकमुपस्थितं अन्नेनासंभवे हेम्ना-
कुर्यादामेनवासुतइति अत्राप्यसम्भवइतिविशेषणत्वा त्सम्भवेन्ने-
नैवेत्युक्तम् श्राद्धविघ्नेद्विजातीना मामश्राद्धं प्रकीर्त्तितं अमावास्या-
दिनियतमाससम्वत्सरादृतइति हारीतोक्तेः अष्टाङ्गत्वमाह वृद्ध-
याज्ञवल्क्यः मधुचान्नंहव्यघृतम्पानीयम्पायसन्तथा कुतुपस्तिलसंयु-
क्तं ज्योतिश्चैवाष्टमीतथा कपित्थश्रीफलाकारः पिण्डोष्टांगसउच्यते
तिलैरुक्तोच्यतेमूढ क्षीरैर्वाह्यघृतेनहृत् मधुनाचैवनासाचतोयैर्हस्तौ-
तथापरौ ज्योतिश्चैवानुजीवः स्यात्पिण्डनिर्वपणं स्मृतं यत्तु मधु-
चाज्यंजलश्चार्घंपुष्पन्धूपम्विलेपनं बलिन्दद्यात्तुविधिवत्पिण्डोष्टां
गोभवेद्यथेति ब्राह्मवचनन्तत्पार्वणविषय म्पूर्ववचनस्यचयाहप्रक-
रणोक्तत्वात् ॥

* नावाहनंनाग्नौकरणन्नात्रविश्वेदेवाः॥३॥

अत्रैकोद्दिष्टेविकृतित्वादावाहनाद्यं गंनभवतीत्यर्थः नन्व-यम्विशेषनिषेधार्थः अवाहपद्धतिकृतयज्ञदत्तः एकोद्दिष्टे तुस्व-धावाचनन्नभवतीतितन्न पिण्डरहितश्राद्धे तन्निषेधात् तदुक्तं स्वधावाचनलोपोऽस्तीतिप्राक्अतश्चास्मत्पित्रे ऽमुकशर्मणेऽमुक-सगोत्रायस्वधोच्यतामितिप्रयोगः अत्रैकआहुः अत्रप्रथमपात्राभा-वात्संस्रवबहुत्वाभावाच्चपितृभ्यः स्थानमसीतिमन्त्रानुपयुक्तत्वाच्च नात्रतत्पात्रमिति तदयुक्तं एकोद्दिष्टस्यविहितत्वात्यत्तु कर्कोपा-ध्यायैर्यत्पात्रन्युब्जकरणमित्युक्तं तदन्यथैवोपपद्यते पात्रंग्युब्जन्नक-र्तव्यंकिन्तूत्तानमेवनिधेयमिति अस्तिचपात्राभावान्न्युब्जत्वभावयो र्महाभेदः अतोर्थानवबोधात्तदयुक्तमिति तथाचस्कन्दसम्वादे एको द्दिष्टे नकुर्वीतस्कन्दपात्रमधोमुखं नोत्थापयेच्चतत्पात्रं यावच्छ्रा-द्धविसर्जनं अनान्तरोत्थापितेपात्रे श्राद्धं सम्पद्यतेतथेति तस्मात्स्व-धावाचनीयानास्तीयंस्वधावाचनीयं कर्तव्यमितिसूक्तं ॥

मू० स्वदितमितितृप्तिप्रश्नः सुस्वदितमितीत रेब्रूयुः उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्य-तामिति विसर्गोभिरताःस्मइतीतरे ॥४॥

अत्रनेत्यनुवृत्तौ मण्डूकप्लुत्याइतिन्यायेन पूर्वंसूत्रोक्तोविधि-रेवानुषज्यते तेनतृप्ताःस्थेतिप्रश्ने स्वदितमिदमक्षय्यमस्त्वित्यत्रोप-तिष्ठतां वाजेवाजेवतेत्वाभिरम्यतामिति विसर्गोभवतीतिवाक्य-शेषः अतश्चैतत्पुराणैकोद्दिष्टमित्युक्तं प्रेतैकोद्दिष्टे तदभावात् अथचयाहे किम्पार्वणंकार्यमेकोद्दिष्टमेवेति सन्दिह्यते उभयथा-

वचनदर्शनात् तथाहि जातूकर्ण्यः पितुः पितृगणस्यस्य कुर्यात्पार्वणवत्सुतः सर्वदादर्शवच्छ्राद्धं मातापित्रोः क्षयेहनीति शातातपः प्रदानंयत्रयत्रैषां सपिण्डीकरणात्परं तत्रपार्वणवच्छ्राद्धं ज्ञेयमभ्युदयाहृते तथा अर्वाक्सम्बत्सराद्यस्य पूर्णेसंवत्सरेपिवा येसपिण्डीकृताः प्रेता नतेषां तुपृथक्क्रियेति एकोद्दिष्टं तुयमः सपिण्डीकरणादूर्ध्वंप्रतिसंवत्सरंसुतैः मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेहनि व्यासोपि एकोद्दिष्टं परित्यज्य पार्वणङ्कुरुतेनरः अकृतन्तद्विजानीयाद्‌ भवेच्चपितृघातकः एकोद्दिष्टम्परित्यज्य पार्वणं यः समाचरेत् सदैवपितृहासस्यात् मातृभ्रातृविनाशकः मृताहेपार्वणं कुर्वन् नधोधोयातिमानवः सम्पृक्तेष्वाकुलीभावः प्रेतेषुतुततोभवेदिति अत्रविरोधेकेचिदाहुः द्वादशपुत्रेष्वौरसक्षेत्रजपुत्रौ पार्वणं कुर्यातामन्ये दशैकोद्दिष्टमिति तथाचजातूकर्ण्यः प्रत्यब्दम्पार्वणेनैव विधिनाक्षेत्रजौरसौ कुर्यातामितरेकुर्यु रेकोद्दिष्टंसुतादशेति जाबालोपि औरसः क्षेत्रज.पुत्रो विधिनापार्वणेनतु प्रत्यब्दमितरेकुर्यु रेकोद्दिष्टंसुतादशेति विशेषोल्लेखादिति तदयुक्तं प्रत्यब्दमित्यनेन क्षयाहव्यतिरिक्ताब्दस्य तृतीयादिविषयत्वावगतेः एकोद्दिष्टंतुकर्तव्य मौरसेनमृतेहनि सपिण्डीकरणादूर्ध्वं मातापित्रोर्नपार्वणमितिपैठीनसि वचनविरोधाच्च एवञ्चसति मृताहेपार्वणैकोद्दिष्टयो रुभयोरपिपक्षयोः प्राप्तत्वात्। अमायाम्वा क्षयोयस्यप्रेतपक्षे थवाभवे त्सपिण्डीकरणादूर्ध्वं तस्योक्तःपार्वणोविधिरिति शंखवचनेन दर्शप्रेतपक्षमृतयोरेव पार्वणस्यनियमितत्वात् तत्रमृतयोरेवपार्वण मन्यत्रमृतयो रेकोद्दिष्टमिति विज्ञानेश्वरप्रभृतयः। अन्येतु द्वादशविधपुत्रेष्वौरसक्षेत्रजपुत्रयो र्विशेषस्तत्रापिसाग्नित्वम् तत्रापि दर्शापरपक्षमृति रित्येवंविशेषोपसंहार

परम्परायापुरोडाशाग्नेय वद्विशेषोपसंहारपर्य्यवसाना दर्शपरपक्ष मृतावपि साग्न्यौरसश्चेत्तजावेव पार्वणङ्कुर्य्यातां त्वनग्निपुत्राइति वर्णयन्ति तदेतद्विचारणीयम् किन्नियमप्रतिपादनन्याय्यम् । उतविशेषोपसंहारइति तत्र यदिनियमप्रतिपादनन्याय्यमित्युच्यते तदादर्शपरपक्षमृतिं विनापि साग्नेः पार्वणविधानमनर्थकं स्यात् यथाहसुमंतुः प्रत्यब्दमितरेकुर्युः एकोद्दिष्टं सुतादश अनग्निमानौरसस्य कुर्यात्साग्निस्तुपार्वणं पुलस्त्योपि अनग्निकौरसस्योक्त मेकोद्दिष्टं मृतेहनि प्रत्यब्दंपार्वणं साग्ने रन्येषान्तुनपार्वणमिति अथविशेषोपसंहारोपन्यास स्तस्यसाग्नेरेवपार्वणस्य विहितत्त्वा द्दर्शपरपक्षमृतावपि तस्यैवपार्वणम् ननिरग्नेरित्यतो ऽमायांवाक्षयेयस्येतिवाक्यम् साग्निविषयएवोपसंहरणीयमिति विशेषोपसंहारएवयुक्तः प्रतिभाति तथाचश्राद्धकल्पलतायां इन्दुक्षयेप्रेतपक्षे विपत्तिस्त्वेद्विजन्मनः । साग्निकः पार्वणंकुर्या देकोद्दिष्टं निरग्निकइति । तस्मादौरसस्येत्र कलौप्रचुरत्वा त्सएवसाग्निदर्शपरपक्षमृतौ पार्वणं कुर्यादन्यथैकोद्दिष्टमेवेतिराद्धान्तः तथाचमत्स्यपुराणम् । प्रदानंयवतत्तेषां सपिण्डीकरणात्परं पार्वणेनविधानेन देयमग्निमतांसदा वृद्धयाज्ञवल्क्योपि वैतानाग्निरहितेयेषां मातापित्रोःक्षयेहनि नतेषामधिकारःस्या देकोद्दिष्टे कदाचन सपिण्डीकरणादूर्ध्व मग्नियुक्तस्यपार्वणं अनग्नेस्तुक्रियानान्या एको द् दिष्टन्तुकचित् एकोद्दिष्टविधिस्तेषां मन्त्रेवाजसनेयिनां येषामाध्यन्दिनीशाखा येद्विजा अग्निवर्जिताइति नन्वेवन्तर्हिवह्नग्नयस्तु येविप्रा येचैकाग्नयएववा तेषांसपिण्डनादूर्ध्व मेकोद्दिष्टंनपार्वणमितिस्मृत्यंतरवचनंविरुध्येत् नैवं वचनस्य अन्यथार्थोपपत्तेः तथाहि येपितरः साग्नयोमृताभवंति तेषांनिरग्निः सपिण्डनादूर्ध्व मेकोद्दिष्टं कुर्यात् ।

त्तथानिरग्नयः पितरोमृताः साग्निःपुत्रस्तदा सपिण्डमादूर्ध्वं स्वता हिपार्वणं कुर्यादिति तथाचमरीचिः साग्निकौतुपितापुत्रौ वमायांस्यात्पितामृतः । पार्वणोहिविधिस्तस्यप्रतिसंवत्सरंभवेत् । तथा साग्निकस्यपितुःपुत्रो ऽमावास्यायांमृतस्यच । पार्वणोहिविधिस्तस्य प्रतिसंवत्सरंभवेत् ततःनकश्चिद्विरोधः अभिरम्यतामिति कर्त्रैकेऽभिरताःस्मेति श्राद्धिनः प्रतिवदेयुरित्यर्थः अत्रैकेऽआहुः एकएवद्विजोभोज्यः पिण्डोप्येकोविधीयते इतिवचनादेक एव-श्राद्धे एकोद्दिष्टइति तदयुक्तम् तस्यवचनस्य प्रेतैकोद्दिष्टविषयत्वा दभावविषयत्वाद्वा अभिरम्यतामितिवदेत् ब्रूयुस्तेऽभिरतास्मइति याज्ञवल्क्ये नबहुत्वाभिधानात् इतरइतिसूत्रोपदेशाच्च-अत्रैतच्चिंत्यते किंक्षयाहश्राद्धम् नित्यकर्मकृत्वाकर्त्तव्यमुताकृत्वेति तत्रनित्यं कृत्वैव श्राद्धमाचरन्तीतिसदाचारः वृद्धयाज्ञवल्क्येतु श्राद्धानंतरंकर्मकुर्यादित्युक्तम् । तथाच क्षयेहनिसमासाद्य संस्नातोविधिपूर्वकम् स्नानंसंध्यांप्रकुर्वीत नित्यकर्मनकारयेत् नित्यं नैमित्तिकञ्चास्य द्विविधस्यमर्लक्षणं निमित्तन्तुव्यतिक्रम्य नित्यंकर्मनकारयेत् जपोहोमस्तथादानन्तर्पणन्देवतार्चनं च येहनिसमासाद्य नकुर्यात्पूर्वमेवहि क्षयाहन्तुसमासाद्य नकुर्यात्-प्राक्चतर्पणं पितृघातीसविज्ञेयो वदत्येवंपितामहइति तत्सदाचारविरोधाच्चिंत्यं अथवासामगयजुःशाखिनां पूर्वंनित्यं कर्मबह्वृचानां पश्चादितिव्यवस्थेत्यविरोधः । सामगायजुषःपूर्वं स्वह्वृचास्यतर्पांत्तिकइतितेनैवोक्तत्वात् अथवा एकोद्दिष्टं तुयच्छ्राद्धन्तन्नैमित्तिकमुच्यत इत्येकोद्दिष्टस्यनैमित्तिकत्वेन नित्यान्नैमित्तिकं-बलीयइतिन्यायात् देकोद्दिष्टमेव पूर्वंपश्चान्नित्यम् नक्षयाहनिमित्तकं पार्वणमपीतिव्यवस्था तथाचवृद्धयाज्ञवल्क्यः । एकोद्दिष्टेनि-

हृत्ते तु तथा विप्रविसर्जने नित्यकर्म ततः कुर्यात् तर्पणन्देवतार्चनम् नित्यं नैमित्तिकञ्चैव द्वावेतौ परमार्थिनौ नैमित्तिके व्यतीते तु ततः-नित्यं समाचरेदिति विश्वामित्रोपि नैमित्तिकं यदा श्राद्धं पैतृकञ्कु- र्यते नरः तदा नित्यं न कुर्वीत तीर्थश्राद्धं विना क्वचित् नित्ये नैमित्ति-के प्राप्ते नित्यं न परिलंघयेत् आदौ निमित्तकं कुर्यात्पश्चान्नित्यं स-माचरेदिति अपि च पठन्ति प्रत्याब्दिके निवृत्ते तु पश्चान्नित्यं समा-चरेत् अनयोर्भिन्नतन्त्रत्वात् स्थालीपाकाग्निहोत्रवदिति।

इति श्रीश्राद्धकाशिकायां चतुर्थी कण्डिका समाप्ता ॥

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्मनः

कृष्णमिश्रस्य कृतौ श्राद्धकाशिकायां सूत्रवृत्तौ।

एकोद्दिष्टश्राद्धं समाप्तम् ॥

एवं पार्वणैकोद्दिष्टमुपदिश्येदानीं सपिण्डीकरणमुपक्रमते।

**सू० ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत ॥ १ ॥**

ततः शब्दो हेतौ यतः सपिण्डीकरणमुभयात्मकम् तत उच्यत इत्यर्थः अथवा तत इति दशाहात्परतः एकादशेहनीत्यर्थः। पार्वणैकोद्दि-ष्टानन्तरोपन्यासेत्वर्थस्य लब्धत्वात् एतच्च निरग्नौ प्रेते एकादशा-हे दर्शसंभवे साग्निकर्तृविषयं एकादशाहे द्वादशाहे वेति बौधायनेन चानग्नौ पितरि पुत्रस्य साग्नित्वाधिकारणभावा देवतद्व्याख्यान मयुक्तमिति वाच्यम् भार्यामरणपक्षे वा देशान्तरगते पि वा अधिकारी भवेत्पुत्रो महापातकिनोपि चेति शङ्खेनाधिकारस्य प्रतिपादितत्वात् तस्योपादाना च्छ्रोतस्मार्त दर्शानुरोधविषयत्वाच्च तथा च कार्ष्णाजि-

निः सपिंडीकरणं कुर्यात्पूर्वंदर्शाग्निवत्सुतः परतोदशरात्राच्चेत्कुह्वं-रन्ध्रोपरीतरइति अग्निमान्साग्निः दशरात्रात्परतएकादशेऽआशौचान्तोपलक्षणम् तथाचकात्यायनः सर्वेषामेववर्णानामाशौचांतेस-पिंडनमिति नाग्निमतांद्विजातीनामितिशेषः अन्धोपरितइत्युक्तत्वात् एकादशेऽहनिकुह्वश्चेदित्यन्वयः इतरोनिरग्निःदृढवसिष्ठः प्र-थमास्यादमावास्यामृताहाद्दशमेऽहनि सपिण्डीकरणं तस्यांकुर्यादेवसुतोऽग्निमान् मृताहादूर्ध्वं दिनमारभ्य दशमेऽहनीत्येकादशा-हइत्यर्थः ननु चैकादशाहे वृषोत्सर्गादिकर्मबाहुल्या त्कथमेतच्छ-क्यतेकर्त्तुम् नैषदोषः। पुरुषप्रयत्नसाध्यत्वा त्स्वार्थस्यशक्यत्वात् अथवाएकादशाहंनिर्वर्त्य सपिण्डीकरणं कृत्वा प्रेतंसापिण्ड्य पि-ण्डपितृयज्ञानन्तरमुक्तकाले मासिकादिकुर्यादितिक्रमः मासि-कानन्तरं सपिण्डीकरणादूर्ध्वंभावित्वादपि तथाच श्राद्धानिषोड-शकृत्वा कुर्यादेवसपिण्डनं। अपिचवृद्धिविषये रेणुः कार्यव्यासङ्गतो-वित्ता ज्ञावाक्वादेशविप्लवात् राजदैवोपघाताद्वामासिकान्यकृ-तानिचेति कृत्वासपिण्डनंवृद्धि कर्मासत्रा न्मासिकान्यतइति एक-त्वनिर्णीतःशास्त्रार्थोऽन्यत्राप्युपतिष्ठत इतिन्यायात् संवत्सरेपूर्णे वृध्यभावेऽस्मार्त्ताग्नौप्रेते निरग्निकर्त्तृविषयं वृद्धिविषयसत्रवच्छमा-णत्वात् तथाचभविष्यपुराणम् सपिण्डीकरणं कुर्या द्यजमान-स्त्वनग्निमान् अनाहिताग्नेः प्रेतस्यपूर्णेऽब्देभरतर्षभ पुत्रस्योपि निरग्निकःसपिण्डत्वं पितुर्मातुश्चधर्मतः पूर्णेसंवत्सरेकुर्यात् वृद्धि-र्वायदहर्भवेत् रेणुरपि निरग्निश्चेद्यदाकर्ता प्रेतश्चौपासनाग्नि-मान् सपिण्डीकरणंतस्य पूर्णेऽब्दे नात्रसंशयइति। त्रिपक्षइत्य-यंशब्दः प्रेतकर्त्तारोह्याहिताग्निविषयत्वेन सप्ताहारमध्यसप-दलोपाभ्यांद्वेधा विवक्षितः। तथाहि त्रयःपक्षासमाहृता त्रिपक्षः

पात्रादित्वान्ङीषभाव: अथत्रात्रिभिर्दिनैरून:पक्षो त्रिपक्षोद्वाद-
शाह: ततश्चाहिताग्नौप्रेतेनिरग्नि:कर्त्ता तृतीयपक्षेप्रेतेवानिर-
ग्नौ आहिताग्नि:कर्त्ता द्वादशाहेसपिण्डीकरणंकुर्या दुभयोरना
हिताग्नित्वेसाग्नित्वेवा द्वादशाहएवेतिव्यवस्थेत्यर्थ: अयंविशयोवा-
शब्दस्यव्यवस्थितार्थत्वात् सम्भवेसतिघटते तथाचसुमन्तु: प्रेतश्चे-
दाहिताग्नि: स्यात्कर्त्तानग्निर्यदाभवेत् सपिण्डीकरणन्तस्यकुर्यात्प-
चेत्तृतीयके गोभिल: साग्निकस्तुयदाकर्त्ता प्रेतश्चानग्निमान्भवेत्
द्वादशाहेतदाकार्यं सपिण्डीकरणं सुतै: साग्निक:आहिताग्नि:
ननुच साग्निकशब्देन कथमाहिताग्नि: समानेनाऽग्निमद्वाचक-
त्वात् उच्यते तथाहिताग्नौप्रेते निरग्नि:कर्त्ता तथानिरग्नौप्रेते
आहिताग्नि:कर्त्तेति शङ्कायाविद्यमानत्वात् तथायजमानोग्नि-
मान् राजन्प्रेतश्चानग्निमान्भवेत् द्वादशाहेतदाकार्यं सपिण्डीक-
रणं सुतैरिति । भविष्यत्पुराणवचनेग्निमच्छब्दवत् भूम्निमतुप:-
शासनादाहिताग्निवाचकत्वसम्भवत्वाच्च नचाहिताग्निश्च समा
नधर्मेत्युचितं किञ्च सपिण्डीकरणङ्कुर्या द्यजमानस्त्वनग्निमान्
अनाहिताग्ने:प्रेतस्यकालान्तरेणविषयान्तस्योपलब्धत्वात् उभयो-
राहिताग्नित्ववचनं साग्निकस्तुयदाकर्त्ताप्रेतोवाप्यग्निमान्भवेत्
द्वादशाहेसदाकार्यं सपिण्डीकरणम्पितुरिति अत्रापिवाशब्द:-
आहिताग्न्यनाहिताग्निविषयत्वेनव्यवस्थितार्थ: ततश्चनिरग्नौ-
प्रेतेस्मार्त्ताग्नि: कर्त्ताशौचान्तेस्मार्ताग्नौ प्रेतेनिरग्नि: क-
र्त्तापूर्णेब्देआहिताग्नौ प्रेतेआहिताग्नि:कर्ता द्वादशाहएवषोड
शश्राद्धानिकृत्वासपिण्डी करणङ्कुर्यादितिमुख्योर्थ: तथाच वृद्ध-
मनु: द्वादशेहनिविप्राणामाशौचान्तेतुभूभृतां वैश्यानांचत्रिप-
क्षाद्वावथवासात् सपिण्डनमिति वाशब्द: स्मृत्यन्तरोक्तव्यव-

स्यायाम् अतश्चसाग्निनामितिशेषः अथवाहि ताग्निअनाहि-
ताग्नि शब्दौसाग्निनिरग्निपरौ तेनसाग्निकः कर्त्ताचेच्चैकाद-
शाह द्वादशाहकालयोः दर्शानुरोधेननियमः तथाचसं ग्रहकारः
द्वादशाहादिकालेषु सपिण्डीकरणेकृते साग्न्यनग्निकत्वविष-
यःकर्तुरेवनियामकइति अतश्चपिण्डपितृयज्ञानुरोधात् सा-
ग्नेरेवद्वादशाहादिकालकर्तृत्वंननिरग्नेरित्युक्तं भवति तथाच
गालवः सपिण्डीकरणाब्दे ते पैतृकम्पदमास्थिते आहिताग्नेः
सिनीवाल्यां पितृयज्ञःप्रवर्ततइति आहिताग्नेः सिनीवाल्यामि-
तिचसाग्निदर्शयोरुपलक्षणं प्रमादात्कालातिक्रमेतु गोभिलः।
द्वादशाहादिकालेषुप्रमादादननुष्ठितं सपिण्डीकरणंकुर्यात् का-
लेषूत्तरभाविषु उत्तरभाविषु त्रिपक्षादिषु यदहर्वोत्युभयो र-
प्यनग्नित्वविषयं वृद्धेःपूर्वमित्यर्थः असपिंडीकृतस्य वृद्धौदाना-
नर्हत्वात् वाशब्दःस्मृत्यन्तरोक्त कालसमुच्चये तथाच बौधायनः
सपिंडीकरणसम्वत्सरेपूर्णे त्रिपक्षेवातृतीयेवामासिचैकादशेवेति-
भविष्येपि द्वादशाहेत्रिपक्षेवा षण्मासेवात्रिमासिवा एकादशेवापि-
मासि मङ्गलस्यह्युपस्थिताविति मङ्गलेवृद्धौ अतोत्तरोत्तरकाले वृद्धि
सम्भवेपूर्वकालेवृध्यनुरोधेनेति सपिंडीकरणंकुर्यादित्यर्थः एवञ्चस
त्युभयोरनग्नित्वे वृध्यनुरोधेनैवसंवत्सरादर्वाक्सपिंडीकरणापक-
र्षोन्यथानेत्य त्तम्भवति तथाचशाठ्यायनः प्रेतश्राद्धानिसर्वाणि स-
पिंडीकरणं तथा अपकृष्यापिकुर्वीत कर्त्तानांदीमुखेद्विज इति तथा
अन्तरेणैवयोवृद्धिं प्रेतश्राद्धानिकर्षति सश्राद्धीनरकेघोरेपच्यतेपितृ-
भिःसहेति अपिच नागरखंडे ततःसपिंडीकरणं वत्सरादूर्ध्वतःस्थि-
तं वृद्धिर्वागामिनीचेत्स्या त्तदर्वागपिकारयेत् उशनाअपि पितुःसपि-
ण्डीकरणम् वार्षिकेमृतवासरे आधानादुपसम्प्राप्ता वेतत्प्रागपि-

वत्सरादिति आदिशब्दः स्तीर्थलाभाद्यर्थः वाराणस्यांकुरुक्षेत्रे गया-यांतीर्थलाभतः सपिंडताद्वादशाहे मार्गेसार्थेऋतुर्गतइतिवचना-त् ततःसंवत्सरेपूर्णेइतिसूत्रं केचिदन्यथैवव्याचख्युःतत्रविषय-व्यवस्थाभावान्नादरीस्माकम् नचकात्यायनः अथातोऽधिकारइ-त्यारभ्य श्रौतस्मार्त्तकर्मणि श्रौताग्निस्मार्त्ताग्निमद्विषयाख्यभिधाय सपिंडीकरणमेवकेवलं साग्निकविषयमन्तरेण निरग्निविषयवि-वाहस्येतिसम्भवान्नायं अतोमदुक्तापिव्यवस्था सूत्रस्येतिमामनुक-म्प्यविपश्चितःसहंतां नन्वेवंव्यवस्था सूत्रस्यनघटतइत्याशङ्कनी-यम् ऋषिप्रणीतत्वेन सूत्रस्यगहनार्थत्वात् तस्मादाहिताग्न्यना-हिताग्नि निरग्निविषयत्वे नोक्तैवव्यवस्थेति सिद्धम् अतःकश्चिद्ग्रा-ष्यकृदाहवर्षपर्यंतंनवंकर्म्मलोपभयात् आनंत्यात्कुलधर्माणाम्पुंसां-चैवायुषःक्षयात् अस्थितेश्चशरीरस्य द्वादशाहःप्रशस्यतइतिवचना-च्च। एकवर्षपक्षएव नशोभनइति तद्वक्तुस्मृतिवैय्यर्थ्यान्नादरणी-यंअंतरेणैवयोवृद्धि मित्यनेनप्रत्यवायोपलब्धेःआनंत्यात्कुलधर्माणां-शरीरस्याप्यस्थितेश्चेति हेतूपन्यासादस्यवचनस्य कुलधर्मपरत्वादशक्त-रोगिकर्त्तृविषयत्वावगमाच्च किञ्च सतिसंभवतिसपिण्डस्याव-र्षांतएवसमापनविधानात् तथाच पूर्णेसंवत्सरेपिण्डः षोडशःपरि-कीर्त्तितइति पिण्डःश्राद्धोपलक्षकः एवंकालमभिधाययोगमाह ।

मू॰ चत्वारिपात्राणि सतिलगंधोदकानि-पूरयित्वात्रीणिपितॄणामेकम्प्रेतस्य ॥ २ ॥

पात्राण्यर्घपात्राणित्रिभ्योवदानन्नपडभ्यइतिचत्वारीत्युक्तं स-तिलेत्यत्रबहुव्रीहिणैवतिलयुक्तत्वेलब्धेशब्दोपादानस्यंवराहित्यद्यो-तनार्थं अथवा तिलोसिप्रेतदैवत्यइतिप्रेतपात्रे मन्त्रविपरिणामार्थः

तथाचैकादशाहश्राद्धे रेण: तिलोसिप्रे तदैवत्य:प्रेतालोकान्हिनो-
त्तमं मन्त्रमुक्त्वातिलानेवप्रक्षिपेदर्घपात्रतइति त्रीणिपितृणामेकम्प्र
तस्येतिक्रमस्टङिः तेनवैश्वदेवकृत्यानन्तरं प्रेतकृत्य ततः पितृकृत्य-
मिति एकोद्दिष्टस्यसपिण्डीकरणांतर्भावात् तथाचबैजवापः चत्वा-
र्युदकपात्राणिप्रयुनक्ति तत्रैकंप्रेतायत्रीणिपितृभ्यइति तदयुक्तम्
सूत्रोक्तक्रमस्यवैय्यर्थ्यात् नचबैजवापवचनं वाजसनेयिविषयं वहृटच
विषत्वात् तथाचतत्सूत्रम् चत्त्वायुदपात्राण्येकं प्रेतस्यत्रीणीतरे-
षामिति अतोत्रविषयानवबोधादयुक्तमित्युक्तम् तथाचकठश्रुतिः
दत्त्वापिण्डान्पितृभ्यस्तु पश्चात्प्रेतायपार्श्वतः तत्तु पिंडंविधाकृ-
त्वाआनुपूर्व्याच्चसंततम् निदध्या त्रिषुपिण्डेषुएषसंसर्जनेविधिः
चर्थपिण्डमु तस्त्र्यत्रिधाकृत्वापिण्डे षुनिदध्यादिति लौगाक्षि-
वचने पिचतुर्थपिंडस्यत्रेधाद्दानप्रतीतेः नचैकोद्दिष्टस्यदैवपूर्वत्वं-
युक्तम् तथाचशातातपः सपिंडीकरणंश्राद्धं दैवपूर्वन्नियोजयेत्
पितृनेवाशयेत्तत्रपुनः प्रेतन्ननिर्दिशेत् इति यत्तु प्रेतपूर्वकंपित्र्य-
श्राद्धमाचरन्तितद्भ्रान्तिनिवन्धनमित्युपेक्षणीयम् तथाचमार्कण्डेय
पुराणं तिलगन्धोदकैर्युक्तं तत्रपात्रचतुष्टयम् कुर्यात्पितृणांत्रितय
मेकम्प्रेतस्यपुत्रक धर्मप्रदीपेपि श्राद्धद्वयमुपक्रम्य कुर्वीतसहपिण्डनं
तयोस्त्रिपुरुषपूर्व मेकोद्दिष्टन्ततःपरमिति यत्पुनःपूर्वंकृत्वा नव-
म्प्रेतमुत्तरांस्तुपितामहान् चतुर्भिःपितृभिर्युक्तं पार्वणन्तुविधीयत-
इतिचतुर्विंशतिमतमुक्तं तद्वैश्वदेवात्पूर्वं प्रेतश्राद्धानुष्ठानविषयं क्वचि-
त्तथाचरणात् बहृटचविषयंच तस्मात्पूर्वोक्त एवक्रम इतिसिद्धंअत्रच
पितृणा मित्यत्रैकशेषसमासा न्मात्रादीनामपीति गमयितव्यं व्युत्क्र-
मम्टताव पि पूर्वजत्विकपूरणेन सपिण्डनङ्कर्त्तव्यंते नैवोत्तरतःश्राद्धं हे
त्वात्तथाचहारीतः ततःप्रभृतिवैप्रेतः पितृसामान्यमाप्नुयात् विंद-

तेपितृलोकञ्च ततःश्राद्धम्प्रवर्त्तते तथा पितृलोकङ्गतस्यान्नंभुक्तो श्राद्धं स्वधासमं पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छतेति ब्रह्मपुराणेपि मृतेपितरियस्याथ विद्यतेचपितामहः तेनदेयास्त्रयःपिण्डाः प्रतितामहपूर्वकाः तेभ्यश्चपैतृकःपिण्डो नियोक्तव्यश्चपूर्ववत् मातर्यथमृतायान्तु विद्यतेचपितामही प्रपितामहीपूर्वन्तु कार्यस्तासामयंविधिरिति यत्तुमनुनोक्तम् व्युत्क्रमाच्चप्रमीतानां नैवकार्यासपिण्डतेति तन्मात्रादिविषयव्यतिरिक्तविषयं तथाचस्कन्दपुराणम् व्युत्क्रमेणमृतानाञ्च सपिण्डीकृतिरिष्यते यदिमातायदिपिता भर्त्तानैषतदाविधिरिति एषविधिर्व्युत्क्रममृतौ सापिण्ड्यनिषेधविधिरित्यर्थः । सुमन्तुः त्रयाणामपिपिण्डाना मेकेनापिसपिण्डने पितृत्त्वमश्नुतेप्रेत इतिधर्मोव्यवस्थितइति अत्रैतच्चिन्त्यते किमपुत्रस्य सपिण्डीकरणं स्यादुतनेति तत्रैकेकर्कादयआहुर्न्नेति तथाचगृह्यं पिण्डकरणे प्रथमः पितृणाम्प्रेतःस्यात्पुत्रवांश्चेदिति स्मृतिरपि अपुत्रस्य परेतस्य नैवकुर्यात्सपिण्डताम् आशौचमुदकम्पिण्ड मेकोद्दिष्टं नपार्वणंअपुत्रायेमृताःकेचित्पुरुषावास्त्रियोऽपिवा तेषांसपिण्डनाभावादेकोद्दिष्टं नपार्वणमितिअन्येत्वपुत्रस्यापिभवतीत्याहुः तथाचरेणुः भ्राताबाभ्रातृपुत्रोवा सपिण्डःशिष्यएववा सपिण्डीकरणङ्कुर्यात्पुत्रहीनेमृतेसति भ्रात्रादिभिरपुत्रस्य सपिण्डीकरणोक्ते एकोद्दिष्टन्नियमतः कार्यन्तस्यैवसर्वदेत्यादि एवंद्वैधेसति करणे उपकारोऽकरणे प्रत्यवायोनेति केचित् आपदनापद्विषयत्वेन व्यवस्थेत्यन्ये एतदुभयमप्य विचारितरमणीयम् कर्कादिपक्षेसापत्न्या पुत्रस्य असपिण्डनेदौहित्रकर्तृकपार्वणादौ असपिण्डनस्य दानानर्हत्वापत्तेः विधायकवचनैस्तस्यबाधितत्वाच्च द्वितीयपक्षेतूक्तव्यवस्थापने सपिण्डनस्यानियतत्वेन पिण्डस्यानर्हप्राप्त्यानर्हत्वदो षसद्भावापत्तेः

तस्मादपुत्रशब्देनानपत्यस्य विचितत्वात्करणम् सापत्यविषयमकरणञ्चानपत्यविषयमितिव्यवस्थेत्यविरोधः

सू० प्रेतपात्रम्पितृपात्रेष्वासिञ्चति येसमानाऽइतिद्वाभ्याम् ॥ ३ ॥

पात्रंपात्रोदकम् तेनकर्तायेसमानाइतिऋग्द्वयेन प्रेतार्घोदकम्पितृपात्रेष्वासिञ्चति मेलनेनसंस्कुर्यादित्यर्थः अत्रसंस्कारप्रयोजनत्वात्पूर्वमासिंच्यपश्चात्पितृपूर्वञ्चतुर्थ्योर्घदानमितिक्रमः अत्रैतत्संदिह्यते प्रेतशब्देनकिञ्चतुर्थःपुरुषोभिप्रेतः उताहो(१) न वमृतइति उभयथापि वचनदर्शनात् तथाहि वृद्धयाज्ञवल्क्यः वृद्धस्यैवतुयत्पात्रम् तत्त्रिञ्चेत्प्रपितामहे तस्सुतेसिञ्चयेत्पात्रन्ततसुतेसिञ्चयेत्पुनः वृद्धरसिष्ठश्च नवातीतार्घपात्रञ्च पिण्डांश्चपरिकीर्त्यते पितृपात्रेषुपिण्डेषु सपिण्डीकरणन्तुतद्विनि तथानिबन्धकृतोपि विष्ण्वादिप्रभृतयः केचित्प्रकर्षेण तोमृतःप्रेतइतिव्युत्पत्या चतुर्थस्यार्घपिण्डयोस्त्रिधाकरणे नासिकमेलनाभ्यामपि पिण्डत्रयस्यएककरणम् नचमृतस्यापि अर्घपिण्डयोस्त्रिधाकरणे न पिण्डत्रयमेलनमित्येवं संशयः तत्रैकआहुः उभयथाम्नात्वा दुभयमतप्रामाणिकत्वाच्च विकल्पएवेति अत्रतेप्रष्टव्याः किंविकल्पःसाधीयानुतव्यवस्थेति तत्रयदिविकल्पःसाधीयानित्युच्यते तदाष्टदोषदुष्टत्वंसम्भवति अथव्यवस्थासाधीयसी तर्हिसम्भवेत दोषाभावात्सैवग्राह्येति नचव्यवस्थासंभवे ऽष्टदोषदुष्टोविकल्पो मीमांसकस्सम्या तस्माद्व्यवस्थैवग्राह्येति । तथाचाङ्गिराः प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः सीदन्तिहिप्रमाणानि प्रमाणैरव्यवस्थितैः वसिष्ठोपि अव्यवस्थाचसर्वत्र तद्विनाशनमात्मनइति अतस्साग्निकःकर्ता चतुर्थपुरुषस्यैवार्घ पिण्डौ

(१) समनन्तरमृतइत्यर्थः ॥

त्रिधाकृत्वा सपिण्डनङ्कुर्यात् निरग्निककर्तातु मृतस्यैवार्घपि-
ण्डन्त्रेधाकृत्वेत्यविरोधः तथाचकाश्यपः प्रपितामहस्यदत्तस्य अर्घ-
पिण्डक्रियात्रिधा इतरेषुनियुञ्जीत सपिण्डीकरणेग्निमान् इति
याज्ञवल्क्योपि इदंप्रपितामहपिण्डन्त्रिधाकारयेद्बुधः प्रकर्षेणगतः
प्रेतो नपिताप्रेतउच्यते स्मृत्यन्तरेपि प्रेतपात्रोदकपिण्ड मितरे-
षुनियोजयेत् त्रिधाकृत्वाक्रमेणैव सापिण्ड्यंतुनिरग्निकइति प्रेत-
पात्रोदकन्तत्र मृतपात्रोदकम् इतरेषुपितामहादिपात्रेषु ॥

## मू० एतेनैवपिण्डोव्याख्यातः ॥ ४ ॥

एतेनेत्यर्घोदकतोयेन पिण्डोव्याख्यातो ऽर्घोदकवत्पिण्डोपि त्रिधाकृत्वा पितृपिण्डेषु योजनीयइत्यर्थः एवकारोमेलनेनैव पङ्क्तिर्भवतीतिनियमयति एवञ्चसति व्युत्क्रममृतौ पत्न्यासहगमनमतौ च यथार्हं प्रपितामहभर्तृसपिण्डने सत्यपिपार्वणान्वष्टकादौ पङ्क्तिसिध्यर्थम् पुनरपिपितामहप्रपितामह्यादिभि र्यथायोगंसपिण्डीकरणम् कर्तव्यमित्युक्तंभवति तथाचरेणुः व्युत्क्रमेणप्रमीतायै तद्विनाप्रेतताध्रुवं पुनःसपिण्डनंतेषां कुर्यात्प्रेतोपितामहे अन्वष्टकासुवृध्यादौ पितामह्यादिभिःसह श्राद्धेसत्युपपन्नंस्यान्नचपित्रा सपिण्डनम् उशनाः अखण्डितोयदापिण्डः पत्याचैकेनयोजितः अन्वष्टकेषुकर्षूणां तर्पणेचपृथकपृथक् पुनःसपिण्डनंकार्यं पितामह्यादिभिःसह पठन्तिच व्युत्क्रमेणापिसापिंड्यम् कार्यमाचार्यसंमतं तयाप्यूर्ध्वस्यसापिंड्येकृतेस्यपुनराचरेदिति एवमन्यत्राप्यूहनीयं अत्रैतन्मीमांस्यते किंसहगमनेपत्न्या सापिंड्यङ्केवलं भर्त्रैवसहकिम्वा श्वश्र्वादिभिरपीति तत्रैके आहुः पत्न्याचैकेनकर्तव्यं सपिण्डीकरणंस्त्रियाः सामृतापिहितेनैक्यं गतामन्त्राहुतिव्रतैरि-

त्यत्रैकशब्दस्य मुख्यवाचकतया दर्शश्राद्धस्य च पार्वणत्वाच्च पत्न्यैक-
त्वम्पितामह्याद्युपलक्षणमिति अन्ये तु पुनरेकशब्देन जीवत्पिता-
पितामह्या मातुःकुर्यात्सपिण्डनं प्रमीतपितृकःपिता पितामह्या-
पित्रासुतः तन्मातातत्पितामह्या तच्छ्वश्र्वावासपिण्डनं आसुरादि-
विवाहेषु विन्नानांयोषितांस्मृतमिति वचनविहितस्य विकल्पचतु-
ष्टयस्य निवर्तकत्वमितिव्याचक्षते ततश्च पित्रादित्रयेणैवमातुः
सपिण्डनमिति उभयेषामभिप्रायः तदपरेनक्षमन्ते पत्न्याःपिण्डस्य
श्वशुरादिपिण्डेषु मेलनमनुचितत्वापत्तेः. अतश्चसत्यपिपार्वणत्वे
ऽन्वारोहणे भर्त्रैकेनकेवलंपत्न्यः सपिण्डनमित्येषामभिप्रायः एवं
चसत्यन्वारोहणेभर्तृमरणेनैव साविण्ड्यं युक्तमित्याभाति मृता-
यानुगतानाथस्य तेनसहपिंडतां अर्हतिस्वर्गवासञ्च यावदाभूतसं-
प्लवमित्यनेन विशिष्टविधानात् पार्वणादावपि तासामंशभागित्वं
पिंडदानेष्वपि कुशैरेवशिरोगोपनादि विधानोपपत्तेः तथाच श्व-
शुरस्याग्रतो यस्माच्छिरः प्रच्छादनक्रियेतिप्रागुक्तम्। तथाचहे-
माद्रिपद्धतौ पत्न्याश्चैकेनकर्तव्यं सपिंडीकरणं सुतैः सहयानेतु-
मातृणां वर्जयेत्तत्पितामहौ वचनान्तरमपि तत्रव्यासः मातुः
सपिंडीकरणं क्रियतेस्वामिनासह मातृकम्मैतृकम्पिंडमेकीकृ-
त्यविधानतः। लौगाक्षिरपि पितामह्यादिभिस्त्रीभि र्मातरन्तुस-
पिंडयेत् पितरिम्रियमाणेतु तेनैवोपरतेसति पुराणसमुच्चये पि-
तामह्यादिभिःसार्द्धं पितुःकुर्यात्सपिंडतां मातुर्भर्त्रासहैकेन नत्व-
न्यैःश्वशुरैः सहेति पद्धतिकारणन्तुप्रागेवाभिहित मित्यलंबहुना
अत्रैकेविवदन्ते सहगमनेभर्तुःसपिण्डनम् विधाय पश्चात्पत्न्या
अपिसपिंडनमिति द्वयोःसपिंडनंपृथक्पृथगिति अन्येपुनर्दंपत्योः
परस्परममन्त्रकपिंडद्वयम् मेलनंकृत्वा ऽनन्तरन्त्रिभिःसहभर्तुः स-

पिंडनेपत्न्या अपिकृतंभवेदित्येकमेवसपिंडीकरणमित्याहुः तन्न सहगमनेनुगमनेच भर्त्रैकेनसह पिंडनस्य विहितत्वादेकमेव सपिंडीकरणंयुक्तमित्याभाति तच्चासंस्कृतेन पत्यासपिंडनमयुक्त-मितिवाच्यम् असंस्कृतौनसंस्कार्यौ पूर्वैःपौत्रप्रपौत्रकैः पितर-स्तत्रसंस्कुर्यादितिकात्यायनोब्रवीत् पापिष्टमपिशुद्धेन शुद्धं पाप-कृतापिवा पितामहेनपितरं संस्कुर्यादितिनिश्चयइतिकात्याय-नवचनात् पापिष्टमगतप्रेतभावं शुद्धेनप्रेतत्वरहितेन तथाशुद्धं-गतभावं पापकृताप्रेतेनपितरंसंस्कुर्यादित्यर्थः अनेनवचनेनासं-स्कृतेनापि मेलनमभ्यनुज्ञातं तस्मादेकमेवसपिंडीकरणमितिसि-द्धं तथाचरेणुः पृथक्चित्यांसमारूढा म्रियतेनुकृतापिवा पत्या-चैकेनकर्त्तव्यं तस्याअपिसपिंडनं पृथक्चित्यांसमारूढा यानारी तुपतिव्रता स्वामिनासहपिंडत्वे तस्याअपिकृतंभवेत् दम्पत्योर्थंद्वि-जश्चैकम् भोजयेदौत्तयोत्तरे तयोःसपिंडीकरणान्तुदम्पतिपिंडयो-रिति स्मृतिरपि मृतेपितरिमातुस्तु नकुर्यात्सहपिंडनं पितुरेव-सपिंडत्वेतस्या अपिकृतंभवेत् अन्यच्च देशकालद्रव्यदेवकर्तृक्ये तान्त्रिकोविधिः भेदेपुनर्निमित्तानां कर्मावृत्तिरपीष्यते स्मृत्यर्थसा-रेपि अन्वारोहणेत्वेकचित्यारोहणेस्त्रियाः पृथक्सपिंडीकरणन्न-कार्यमिति सर्वेकेपुनराचक्षते ॥ सपिंडश्राद्धेचतुर्थ्यः पिंड-दानंकृत्वानन्तरं सपिंडात्पत्रावनेजनादिसर्वंकर्म कृतमारभ्यैवक-र्त्तव्यं पुनःप्रेतनिर्देशोदितिवचनात् एवञ्चसतिपत्रावनेजना-दिसर्वंकर्मकृतमारभ्यैव कर्मसुपितामहपिंडे पितुर्दैवतात्वं पि-तामहपिण्डे पितामहस्य वृद्धप्रपितामहपिंडे प्रपितामहस्येत्येवं चतुर्थस्यनिवृत्ति रितितेषामभिप्रायः तदयुक्तं उपक्रमोपसंहार-विरोधात् द्वौनैवारभ्यस्तेनैःसमाप्तिरितिन्यायबाधादेकस्मिन्पिंडे

ऽन्यथ निर्द्देशेद्धिदैवतैःकल्पसम्भवादुपक्रान्त क्रमस्यैव्यर्थ्यापत्तेः नचतथेष्टं स्मृत्यन्तरे श्राद्धसमाप्तावेव पिंडमेलनस्याविहितत्वात्। यत्तु पुनःप्रेतं ननिर्द्देशेदित्युक्तं तदपिसापिंड्यश्राद्धोत्तरश्राद्धेषु प्रेतशब्दनिर्देशाभावप्रतिपादनपरंनपुनर्व्युत्क्रमप्रयोगविधायकम् तस्मात्प्रकृतोपक्रांतक्रमेणैव श्राद्धंकृत्वांते पिंडसंमेलनंकर्तव्यमितियुक्तं तथाचब्रह्मपुराणे सुवर्त्तुलांस्ततस्तांस्तुकृत्वा पिंडान्प्रपूजयेत् अर्घैःपुष्पैस्तथाधूपै दीपमाल्यानुलेपनैरिति अत्रैकेऽप्याहुःपुत्रेणैवतुकर्तव्यंसपिंडीकरणं स्त्रियःपुत्रस्य मृतस्यान्येभ्रातृपुत्रादयोपिये अपुत्रायांमृतायान्तु पतिःकुर्यात्सपिंडता मित्याभ्यांपतिपुत्रयोरेवाधिकारस्ताद्भावेस्त्रीणां सपिंडनंनास्तीति अन्येतुसर्वंसर्वस्य भवतीत्याहुः एवञ्चसत्यकरणं अनपत्यास्त्रीविषयमित्यस्मन्मतिः। तथाचपठंति कुर्याद्बै ग्वतभर्तृकायद्दिमृता पुत्रः स्वभर्त्रैव तत् सापिंड्यं सचबांधवामृतयुवतिभिर्भर्तारमन्वेतिया तस्याभर्तृसपिंडनंसुतवती भर्तारमन्वेति या तस्यास्त्रीभि रनुक्रमादितिह षट्त्रिंशन्मतेनिर्णयः अस्यार्थः मृतभर्तृकायाः सपिंडनञ्चेत्पुत्रःकरोति तदाभर्त्रैवकेवलंसपिंडयेत् जीवद्भर्तृकायास्तु पितामह्यादिभिरेव यातुभर्तारमनुगच्छति तस्याअपुत्रायाभर्त्रैवसपिंडनम्॥ पुत्रिण्यास्त्वनुगमनेपि पितामह्यादिभिरेवेति। अनेनचपतिपुत्राभावेपि सपिंडनमस्तीतिगम्यते अतश्चोक्तैवव्यवस्थेति तथाचधर्मप्रदीपे अपुत्रायोषितःपिण्डं भर्तृपिंडेनयोजयेत् यदिजीवतिभर्तातु श्वश्र्वादिषुसमाविशेदिति अपुत्रासापत्यामृतास्त्री अनपत्यायाः सापिंड्या प्रयोजनानुपपत्तेः अत्रैतत्सन्दिह्यते किंसपिंडीकरणे श्राद्धद्वयमेकपाकेन उततत्पृथक्पाकेनेति उभयथावचनदर्शनात् तथाह्योदनञ्चपृथक्पृथगिति तथासपिंडीकरणम् श्राद्धं

पृथक्पाकेनशस्यतद्गति रेणुस्तुपाकैक्यमाह एवंश्राद्धद्वयङ्कु यत् कार्यैक्यादेकपाकत: एकोद्दिष्टम्पार्वणञ्च शेषम्प्रकृतिवद्भवेत् इति अत्रव्यवस्थीयते पृथक्पाकविधान मसपिंडनविषयम् पाकैक्यवि-धानन्तु पुन:सपिंडीकरणविषयमिति अन्यथाविरोधापत्ते: नच विकल्प: सम्भावनीय: अष्टदोषदुष्टत्वात् पुत्रिकापुत्रविषये बौधा-यन: आदिशेत्प्रथमेपिंडे मातरम्पुत्रिकासुत: द्वितीयेपितर न्तच्च तृतीयेचपितामहम चशब्दश्चतुर्थे चतुर्थसमुच्चयार्थ: गोत्रविषयेतु मार्कण्डेय: ब्राह्मादिषुविवाहेषु यातूढाकन्यकाभवेत् भर्तृगोत्रेण कर्तव्या तस्या: पिंडोदकक्रिया आसुरादिविवाहेषु पितृगोत्रे-णधर्मविदिति लौगाक्षि: मातामहस्यगोत्रेण मातु: पिंडोदक-क्रिया कुर्वीतपुत्रिकापुत्र एवमाहप्रजापतिरिति पत्नीकर्तृक सा-पिंड्य विरोधआभातति लौगाक्षि: सर्वाभावेस्त्रिय:कुर्यु: स्वभर्तृणा ममन्त्रकम सपिण्डीकरणंश्राद्ध मेकोद्दिष्टञ्चपार्वणं श्राद्धेषुमन्त्र-वत्पत्नी कर्मकुर्याद्यथाविधि: तदौर्ध्वदेहिकेसाहि मन्त्राहाधर्मसं-स्कृतेति अत्रविरोधेह्यमन्त्रककरणं अधर्मविवाहोढाविषयं सम-न्त्रककरणन्तु मन्त्रोढाविषयमितिव्यवस्था तथाचशातातप: धर्मे-विवाहेत्वढाया सापत्नीपरिकीर्तिता सहाधिकारिणीहेप्रषा यज्ञा-दौधर्मकारिणी तथाच मन्त्राहाधर्मसंस्कृतेत्युक्तं एतच्चानुज्ञाविषयं नारीयात्वननुज्ञाता पित्राभर्त्रासुतेनवा विफलन्तुभवेत्तस्या या-करोत्यौर्ध्वदेहिकमित्यापस्तम्बोक्ते: तदभावेविशेषमाह कात्यायन: असंस्कृतेनपत्न्याच स्वग्निदानंसमन्त्रकम् कर्तव्यतमितरत्सर्वं का-रयेदन्यमेवहि तथा सर्वबन्धुविहीनस्य पत्नीकुर्यात्सपिण्डनं ऋत्वि जङ्कारयेद्वापि पुरोहितमथापिवेति पत्नीकर्तृत्वंसाध्वीपरम्वा । अपुत्राशयनंभर्त्तु: पालयन्तीव्रतेस्थिता पत्नेवदद्यात्तत्पिण्डं कृत्स्न

मर्थंहरेदपीति वचनादिति असंस्कृतोऽनुपनीतः सचकृतचूड-
स्त्रिवर्षः तथाचमनुः श्राद्धङ्कुर्यादवश्यन्तु प्रमीतपितृकोद्विजः ।
व्रतस्थोवाव्रतस्थोवा एकएवभवेदयदिइति यत्तुमनुनेतं नाभि-
व्याहारयेद्ब्रह्म स्वधानिनयनादृते नह्यस्मिन्युज्यतेकर्म विनामौंजी
निबन्धनादिति तदत्रिवर्षकृतचूडविषयं तथाचसुमन्तुः अनुपेत-
स्तुकुर्वीतमन्त्रवत्पैतृमेधिकं । यदासौकृतचूडःस्यात् यदिस्याच्चत्रि-
वत्सरः नाभिव्याहारयेद् ब्रह्मयावन्मौञ्जीनिबन्धनम् मन्त्राननु-
पनीतोपि पठेदेवैकएवयइति तस्मात्रिवर्षकृतचूडः पित्रौर्त्यंदे-
हिकम् मन्त्रवदेवकुर्वीतेत्यलम्प्रसंगेन ॥

## सू॰ अतऊर्ध्वं संवत्सरे प्रेतायान्नं द-दाद्यस्मिन्नहनिप्रेतःस्यात् ॥ ५ ॥

अतइति सपिंडनादूर्ध्वं वीप्सानिताऽर्था प्रेतायेत्येक त्वं-
विहितपार्वणव्यतिरिक्तविषयं अहःशब्दस्तिथिवचनः अन्नग्रहणं-
मतिसम्भवे आमव्युदासार्थं तेनचयाहेपाकेनैवश्राद्धमितिज्ञापितम्
अत्रच सपिण्डनादूर्ध्वंप्रेतशब्दोपादानात् द्वादशाहादौसपिण्डने-
पि पुनर्मासिकाद्यनुवृत्तिज्ञापनार्थम् तथाचगोभिलः यस्यसंवत्सराद-
र्वाग्विहितातुसपिण्डता विधिवत्तानिकुर्वीत पुनःश्राद्धानिषोड-
शेति विधिवदितियथाधिकारं पार्वणैकोद्दिष्टविधिनेत्यर्थः तथाच-
पैठीनसिः सपिण्डीकरणादूर्ध्वं यदाकुर्यात्तदापुनः प्रत्यब्दंयोय
थाकुर्यात्तथाकुर्यात्सदापुनः सपिण्डीकरणादूर्ध्वमित्युक्तेस्ततः
प्रागेकोद्दिष्टविधिनेतिगम्यते सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धा-
निषोडश एकोद्दिष्टविधानेनकुर्यात्सर्वाणितानितिनैमित्तिकत्वात्
जातूकर्णोपिपितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः प्रत्यब्दमिति-

मासश्च विधिर्द्धेयः सनातनइति पुनर्मासिककरणमाह कात्याय-
नः । सपिण्डीकरणादूर्ध्वम् नदद्यात्प्रतिमासिकं एकोद्दिष्टवि-
धानेन कुर्यादित्याहगौतमः सपिण्डनादूर्ध्वमेकोद्दिष्टविधानेन
प्रतिमासिकन्नदद्यात्किन्तुपार्वणविधानेनेतिकात्यायनमतं गौत-
ममतेत्वेकोद्दिष्ट विधानेनेति अयंव्यवस्थितोविकल्पः सागिनकः
पार्वणविधिना निरग्निरेकोद्दिष्टविधिनेत्यर्थः तथाचजाबालः अ-
सपिंडीकृतंप्रेतम् एकोद्दिष्टेनतर्पयेत् सपिण्डीकरणादूर्ध्वम् वि-
भिःसामान्यमिष्यते पुलस्त्योपि एकोद्दिष्टेनतेताव द्यावत्पित्रोःस-
पिण्डनं सपिंडीकरणादूर्ध्वं मेकोद्दिष्टन्निवर्ततइति साग्निकवि-
षयमेतत् गौतममतोक्तमेकोद्दिष्टन्तु निरग्निविषयमित्यविरोधः
शौनकोपि तदूर्ध्वमेकोद्दिष्टविधाने नदद्यादिति पार्वणत्वेविशे-
षमाह गौतमः अदैवंपार्वणश्राद्धं सोदकुम्भं ह्यधर्मकम् दद्यात्प्रत्या-
ब्दिकश्राद्धात्संकल्पविधिनान्वान्वहं अधर्मकं दातभोक्तृधर्मशून्यं
प्रत्याब्दिकश्राद्धात्पूर्वंसपिंडीकरणादूर्ध्वमित्युक्तेः अत्रैतत्सन्दिह्यते
सापिण्ड्यादूर्ध्वंमासिकेषु किंप्रेतशब्दस्यनिर्द्देशः उतपितृशब्दस्येति

तत्रकेचिदाहुः सपिण्डीकरणादर्वाक्प्रेतशब्देनतं वदेत् तदूर्ध्वम्पि-
तृशब्देन शर्मशब्देन निर्द्दिशेदित्यनेनपितृशब्दइतिअन्येत्वाहुः पितृ
शब्दस्योच्चारणस्य मासिकादन्यश्राद्धविषयत्वात्प्रेतशब्दएव तथाच
यस्यसंवत्सरादर्वाक्सपिण्डीकरणम्भवेत् प्रेतत्वञ्च पितृत्वञ्चभवेत्त-
स्यद्विरूपतेति मासिकेषु प्रेतत्व मष्टकादौपितृत्वमित्यर्थः अतोय-
दत्रयुक्तन्तद्ग्राह्यं पार्वणत्वे ग्नौकरणमाह पाणौहुतञ्चनाश्नीयात्
प्रेतोद्देशेषुसर्वदा तद्धोमञ्चनवाकुर्या दश्नीयात्तुसपिण्डने अस्यार्थः
साग्निनाप्रेतोद्देशेषुमासिकेषुप्रेतायस्वाहेत्युद्देशेन पाणौहुतंना-
श्नीयात्किन्त्वग्नौक्षिपेत् सपिण्डनेतु प्रेतश्राद्धत्वेपि हुतमश्नीयात्

तद्धोमश्चनचेतिनिरग्निविषयं वाशब्दस्यव्यवस्थार्थत्वात् निरग्नेरे कोद्दिष्टत्वादग्नौ करणाभावइति तथाचकात्यायनः हस्तेहुतं-यदश्नीया ब्राह्मणोब्रानदुर्बलः नश्यभवतितच्छ्राध मितिशाता तपोब्रवीत् स्मृतिरपि पित्र्यविप्रकरेहोमः साग्नेरपिभवेदिह अग्नौ-करणशेषंहि पित्र्यब्राह्मणभोजने लौकिकेग्नौक्षिपेदन्नं श्राद्धेष्वन्नं करेहुतं पार्वणादौतदश्नीयादित्युक्तम् श्रीधरादिभिः पठन्तिच साग्निकेनतुविप्रेण यदन्नं हूयतेकरे तदन्नं निक्षिपेदग्नौ भुक्त्वा-चान्द्रायणञ्चरेदिति अथवासूत्रे प्रेतशब्दग्रहणं त्रिवर्षपर्यन्तमा-ब्दिकश्राद्धस्याशुद्धत्वज्ञापनार्थं तथाचवृद्धयाज्ञवल्क्यः सपिण्डीक-रणादूर्ध्वं यावदब्दत्रयं भवेत् तावदेवनभोक्तव्यं वर्जयित्वाच-येहनि पठन्तिच एकादशाहमारभ्य यावदब्दत्रयम्भवेत् ताव-च्छ्राद्धेनगृह्णीया दितिशाततपोब्रवीत् अत्रैकआहुः त्रिवर्षप-र्यन्तंश्राद्धन्नृहे नकुर्यादिति प्रेतमशुद्धं श्राद्धं अत्रैकेप्रत्यवतिष्ठन्ते आब्दिकेपादकृच्छ्रंस्या देकाहःपुन राब्दिके अतऊर्ध्वं नदोषः-स्यात् प्रमाणाभावात् बहिःश्राद्धं नकुर्वीतेति वचनाच्च पठन्तिच त्रैवार्षिकञ्चाप्रेतंस्या च्छ्रंत्स्यवचनं यथेतिवचनात् द्वैवार्षिक-मेवाशुद्धमिति तत्रतत्रउक्तवचनविरोधात् किञ्चैतद्वचनम्प्रायश्चि-त्तभावं बोधयति नशुद्धत्वंविदधाति वचनां तरविरोधात् भर-द्वाजः प्राणायामत्रयंवृद्धा वहोरात्रं सपिण्डनइति अतश्चसदाचा रानुरोधा दाब्दिकेपादकृच्छ्रंस्यादित्येतद्व चनमेव व्याख्येयम् आब्दि केऊनाब्दिकानन्तरकर्तव्यमासिके, सपिण्डनेपुनरहोरात्र-स्योक्तत्वात् पुनराब्दिकंसपिण्डनम् अतश्चवर्षान्ते मृताहएव सपिण्डीकरणंकृत्वाब्दिकमितिक्रमः तथाचजाबालः पूर्णे सम्ब त्सरेवृत्ते मृताहेपुनराब्दिके सपिण्डीकरणं कृत्वा कुर्यात्पुन-

स्तुने तरः तथाच पूर्णे संवत्सरे कुर्यात्सपिण्डीकरणं सुतः एको-द्दिष्टन्तु तत्रैव मृतेहनि समापयेत् गालवः ततः संवत्सरे पूर्णे द्वे श्राद्धे मृतवत्सरेति तथाच पूर्णे संवत्सरे चान्द्रायणन्नव मिश्रक-म्प्राजापत्य पुराणेष्वेकदृत्यर्थः एषांलक्षणान्येवैकोद्दिष्टप्रकरणे भिहितं तथाचहारीतः चान्द्रायणन्नवश्राद्धे प्राजापत्यन्तु मिश्रके॥ एकाहस्तु पुराणेषु प्रायश्चित्तम्विधीयतइति पुराणेष्विति बहुत्वं-वित्वपरं ततऊर्ध्वंनदोषइत्यर्थः चतुर्थस्याशुद्धत्वात् तथाच मासि-कान्युपक्रम्याहरेणुः दशमैकादशेमासि द्वादशेन्यूनवत्सरे ततो-परेद्युरब्दान्ते सपिण्डीकरणम्भवेत् ततोपरेब्देद्वितीयवत्सरादौ तथाब्दिकम् तृतीयवत्सरात् प्रत्याब्दिकमितिक्रमइति अपिच-पठन्ति सपिण्डीकरणादूर्ध्वं यावदब्दद्वयम्भवेत् तावद्विप्रोनभो-क्तव्यो यदि व्याससमोपिच तथाच सपिण्डीकरणादूर्ध्वं काम्य-श्राद्धे षु भोजयेत् संवत्सराश्चचत्वारो वर्जनीयाःत्रयेहनि प्रथमेब्देतु मांसानि द्वितीयेस्थानिचैवहि तृतीयेरुधिरंप्रोक्तं चतुर्थेन्नंविशुध्य-तीति ॥ द्वादशाहस्यसापिण्ड्य विषयमेतत् कात्यायनः अशुद्धे षु च श्राद्धे षु विप्रोभोक्तानजायते विप्रञ्चशामयङ्कृत्वा पात्रे कव्यंनिवे-दयेत् प्रेतायान्नन्दद्यादितिसूत्रयता तथोदककर्मेत्युपक्रम्यैकादश्या मयुग्मान्ब्राह्मणान्भोजयेदित्यादिना गृह्योक्तंप्रेतश्राद्धमात्रोपयुक्तमि ति नावपुनरुक्तमितिज्ञापितं तेनमासिकादिषोडशकङ्कृत्वा स-पिण्डयेदित्युक्तंभवति अन्यथाप्रेतश्राद्धान्यनुक्त्वा सपिण्डीकरणङ्क-थमसूचयिष्यत् मासिकान्याह याज्ञवल्क्यः मृताहनितु कर्तव्यम् प्रतिमासन्तु वत्सरम् प्रतिसंवत्सरेचैव माद्यमेकादशेहनि अस्या-र्थःअब्दपर्यन्तम् मासिमृताहे मासिकानिकार्याणि आब्दिकश्रा-द्धमपि प्रतिवर्षमेवमेव आद्यंतुश्राद्धमेकादशेन्हिकार्यमिति तत्रैत-

त्सन्दिह्यते मासिकस्यमृताहेविहितत्वात् प्रथमासिकञ्चिं मृताहे-
स्या दुतैकादशाह इति तत्रै कश्राहुः श्राद्यमासिकमेकादशाहे द्वि-
तीयादिकन्तु प्रतिमासंस्मृताहमिति तथाचरेणुः प्रतिमासम्मृता-
हेस्युः द्वादशैतानिवत्सरम् उत्क्रष्यते हितत्सदंाकुर्या देकादशेन्हि-
तदिति अन्येत्वाहुः एकादशाहेश्राद्वद्वयम् कार्यमेकं प्रथममासि-
कत्वेनापरमेकादशाह्निकत्वेनेति तत्रनादरः प्रथमासिकस्य द्वादशा
हादिकालेषुविहितत्वात् तथाचगोभिलः मरणात् द्वादशेन्हिस्था
न् मास्यूनेवोनमासिकमित्यादि नद्वितीयः नचैकादशाहश्राद्वमे-
व श्राद्वद्वयोपलब्धेः तर्योरेकै कादशेन्हितन्नियमितत्वाच्च तथाचा-
त्रिः प्रेतार्थंसूतकान्नेन ब्राह्मणान्भोजयेद्दश आदरश्राद्वनिमित्तेन चै
कमेकादशेहनीति एकादशेन्हिदशैकञ्चेत्यन्वयः तथाप्रथमेन्हितती
येच पञ्चमेसप्तमेपिच नवमैकादशेचैव तत्रचश्राद्वमुच्यते तस्मान्नव
श्राद्वमाद्यं चैकादशाहेप्रथमासिकन्तु द्वादशाहादावितियुक्तम् तथा
चकार्ष्णाजिनिः ऊनान्यूनेषुमासेषु विषमेन्हिसमेपिवा त्रैपक्षिक-
न्त्रिपक्षेस्या न्मृताहेष्वितराणितु ॥ ऊनानीत्यूनमा सिकोनषाण्मा-
सिकोनाब्दिकानि अपिचपठन्ति आदान्तैपक्षिकञ्चै व ऊनषाण्मा-
सिकेपिवा अन्यानिमासिकानिस्युः स्वस्वकालेयथाविधीति आदा
मूनमासिकम् प्रथममासिकमित्यर्थः एषांकालमाह गालवः ऊन-
षाण्मासिकंषष्ठे मासन्यून माकिकम् त्रैपक्षिकन्त्रिपक्षेस्या दूना-
ब्दंद्वादशेतथेति एषांमृताहेष्वनियमइत्यर्थः त थाचक्रतुः श्राद्वे ए-
कादशेमासि तथाश्राद्वे तुपञ्चमे ऊनाब्दिकोन ष ण्मासौ भवेतांश्राद्व-
कर्मणीति पक्षान्तरमाहगौतमः एकद्वित्रिदिनैर्न्यूनैः त्रिभागेनोनएव
बा श्राद्वान्यूनाब्दिकादीनि कुर्यादित्याहगौतमःएकद्वित्रिदिनैन्यून
इति ऊमत्रिंशत्यष्टाविंशति सप्तविंशतिदिनेषु क्रमेणोनाब्दिकोनषा

षमासिकाद्यमासिकानि कर्त्तव्यानीत्यर्थः त्रिभागेनोनइत्येकविंशद्द
दिनेशतानिकार्याणीतियथाशक्तिविकल्पः अनुकल्पोवाद्वादशाहं
यदाद्यमासिकविधानम् तद्भिन्नकर्तृविषयम् क्षत्रियादीनांत्वाशौचा
न्तेशरीरपूरक पिण्डकसमाप्तावेव मासिकश्राद्धस्य वक्ष्यमाणत्वात्
ऊनानांवर्ज्यकालमाह गार्ग्यः नन्दायांभार्गवदिने चतुर्दश्यान्त्रिपु-
ष्करेऊनश्राद्धंगृहीपुत्र धनक्षयमवाप्नुयात् मरीचिः द्विपुष्करेचनन्दा
सु सिनीवाल्यांभृगोर्दिनेचतुर्दश्यांचनोनानि कृत्तिकासुत्रिपुष्कर
इति अत्र केचिवदन्ते आद्यमेकादशेहनीत्येकादशाहश्राद्धम् क्षत्रि
यादीनामाशौचमध्येभवतीति आद्यंश्राद्धमशुद्धोपि कुर्यादेकादशे-
हनि कर्त्तुस्तात्कालिकीशुद्धि रशुद्धःपुनरेवसः एकादशेन्हियच्छ्रा-
द्धम् तत्सामान्यमुदाहृतम् चतुर्णामपिवर्णानां सूतकन्तुपृथक्पृथ
गितिवचनाभ्या मेकादशाहेविहितत्वादिति अन्येत्वाहुः एकाद-
शेहनीत्यस्याशौचान्तदिनोपलक्षकत्वा च्चातुर्व्वर्ण्यस्याथाशौचांतए
वेति अन्यथा विप्रस्या शौचान्ते क्षत्रियादीनामाशौचमध्ये इत्यर्द्ध ज-
रतीयापत्तेरिति आद्यंश्राद्धमशुद्धोपीत्यस्य मासिकापेक्षया नव-
श्राद्धस्यैवाद्यत्वा न्नवश्राद्धविषयत्वं नवश्राद्धमशुद्धोपि कुर्यादेकाद-
शेहनीति कार्ष्णाजिनिपाठादिति निबन्धकृतांविरोधः तदेतद्वि-
चारणीयम् किमाशौचमध्येकरणम् विचारसहं किंवाशौचोत्तर-
इति उभयपक्षस्यापिवाचनिकत्वात् तथाहि आशौचमध्येआह
कात्यायनः एकादशेन्हियच्छ्राद्धं प्रेतेत्कन्तत्समाचरेत् आशौचेषुच-
श्राद्धेषुविप्रोभोक्तानजायते विप्रं कुशमयंकृत्वेतिप्रागुक्तम् गालवोपि
एकादशेन्हियच्छ्राद्धन्ततत्कुर्यादृषपूर्वकम् सर्वेषामेववर्णानां सूत-
कन्तुपृथक्पृथगिति सापिण्ड्ये विष्णुरपि मन्त्रवर्ज्जं हिशूद्रस्य द्वाद-
शेहनिकीर्त्तितमिति आशौचांतेत्वंगिराः एकादशेन्हिविप्राणाम्

क्षत्रियाणांत्रयोदशे वैश्यानांषोडशे श्राद्ध मेकविंशेचशूद्रके। श्राद्ध मेकादशाहिकं मासिकादित्रं नवमादश्च मात्स्येपि क्षत्रादिःसूत कान्तेतु भोजयेदयुजोद्दिजान् द्वितीयेन्हिपुनस्त द्वदेकोद्दिष्टंसमाचरेत् तथा आशौचानन्तरंपुत्रो वृषोत्सर्गप्रपूर्वकं आरभेतशुचिर्भूत्वा श्राद्धमेकादशाहिकं अत्रिरपि प्रेतार्थंसूतकांतेतुब्राह्मणान्भोजयेद्दश आद्यश्राद्धनिमित्तेन एकमेकादशेहनीति दर्शकस्त्वेतदन्वयः एवंवचनविप्रतिपत्तौ व्यवस्थोच्यते एकादशाहेश्राद्धत्रयं प्राप्नोति एकमतदनवश्राद्ध द्वितीयमाद्यश्राद्धं तृतीयमपकर्षमासिकं तत्रापकर्षे ब्राह्मणएकादशाहेऽतदनवश्राद्धं आद्यश्राद्धञ्चेतिद्वयङ्कृत्वा प्रथममासिकादिश्राद्धचतुर्दशकञ्चकृत्वा द्वादशाहे सपिण्डीकरणङ्कुर्यात् अनपकर्षेत्वेकादशाहे नवमाद्यञ्चेतिद्वयङ्कृत्वा द्वादशाहादौविहितस्वस्वकाले मासिकादिषोडशकङ्कुर्यादिति क्षत्रियादिभिस्त्वंतदनवश्राद्ध माद्यश्राद्धञ्चेतैकादशाहे नियमितत्वादाशौचमध्येद्वयङ्कृत्वा ऽशौचान्तेप्रथममासिकादिषोडशकमपकर्षेकर्त्तव्यम् आशौचमध्ये पूरकपिंडासमाप्तौ मासिकानामविहितत्वात् आशचान्तेतिसपिंडदानस्यविहितत्वाच्च तथाचमरीचिः आशौचांतेत्वतःसम्यक् पिंडदानंसमाप्यते ततःश्राद्धप्रदातव्यं सर्ववर्णेष्वयन्विधिः हरिनाथोपि प्रदेयोदशमःपिंडो राज्ञांवैद्वादशेहनि वैश्यानांपञ्चदशके देयस्तुदशमस्तथा पिंडः शूद्रेणदातव्ये-दिनान्यष्टौनवाथवा सम्पूर्णेचततोमासे पिण्डशेषंसमापयेदिति अनपकर्षेतु यथाकालम्मासिकमिति अतश्चयेषुनिवन्धेष्वेकादशाहे क्षत्रियादीनां श्राद्धम्विहितम् तन्नवश्राद्धाद्यश्राद्धविषयम् येषुत्वाशौचांतेप्रतिपादितम् तन्मासिकादिश्राद्धषोडशकविषयमित्येवङ्कल्पनेननिवन्धकृतामविरोधोदेशाचारविषयत्वेनवेति सर्वमनवद्यम्।

इति श्री श्राद्धकाशिकायाम्पञ्चमीकण्डिका समाप्ता।

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्मनः
कृष्णमिश्रस्यकृतौ श्राद्धकाशिकायांसूत्रवृत्तौ ।
सपिण्डीकरणप्रकरणम् ॥

इत्थम्पार्वणैकोद्दिष्टसपिण्डनश्राद्धेष्वप्रादक्षिण्यादि धर्मानुपदिश्येदानींस्वीकृत्वेन तद्विपरीतप्रदक्षिणादिधर्मान्प्रतिपादयिषुराभ्युदयिकश्राद्धमारभते ॥

## मू० आभ्युदयिकेप्रदक्षिणमुपचारः ॥१॥

अभ्युदयइष्टापूर्त्तादुत्सवकाल स्तत्रक्रियतइत्याभ्युदयिकम् शेषिकष्ठञ् प्रदक्षिणमितिविशिष्टविधिः उपचारःकरणम् अतश्राद्धेसर्वमनुष्टानम् प्रदक्षिणम्भवतीत्यर्थः अभ्युदयोवृद्धिः इत्यनर्थान्तरम ॥ तथा अग्न्याधानाभिषेकेदा विष्टापूर्त्तेस्त्रियाकृतौ वृद्धिश्राद्धम्प्रकुर्वीत आश्रमग्रहणेतथेति वृद्धगार्ग्य वचनात् आदिशब्दःपुत्रजन्मविवाहादार्थः तथाचसएव पुत्रोत्पत्तिप्रतिष्ठासु तन्मौंजीत्यागबन्धने चूडायांचविवाहेषु वृद्धिश्राद्धं विधीयतइति ननुच नान्दीमुखङ्कर्माङ्गञ्चेति संज्ञाभेदात्कथमाभ्युदयिकम् वृद्धिश्राद्धमित्युच्यते वृद्धिश्राद्धएवनांदीमुखमिति संज्ञाभेदःप्रयोग विशेषणार्थः तथा चवृद्धवसिष्ठः पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् तत्रनान्दीमुखमितिविशेषः समुदाहृतइति यत्तु कर्माङ्गमिति संज्ञान्तरं तदपिवृद्धिधर्मातिदेशेन तत्तद्रूपमेवसंज्ञाभेदेपीत्यविरोधः तथाच पारस्करः । निषेककालेसोमेच सीमन्तोन्नयनेतथा ज्ञेयंपुंसवनेश्राद्धङ्कर्माङ्गं वृद्धिवत्कृतं लौगाक्षिरपि नामान्नचौलगोदान सोमोपनयपुंसवे स्नानदानविवाहेषु नान्दीश्राद्धम्विधीयतइति अत्राभ्युदयिकइति वदतामातृस्थापनाद्यंगेषु प्रागुदक्संस्थतैवोक्ता देवकृत्य

त्वादितिगम्यते अतएवप्राङ्मुखस्य कर्त्तुरुदक्संस्थतायामप्रादक्षिण्यमपि स्यादित्याहुः तत्रापि प्रादक्षिण्यमेवेत्युदङ्मुखस्यैव कर्तृत्वमित्यन्ये अत्रानूचानाःप्रमाणम् अत्र तच्चिन्त्यते किंवृद्धिश्राद्धन्दिनत्रये कार्यमुतैकदिनएवेति तत्र केऽप्याहुः एकस्मिन्कर्माहएवेति मातृभ्यःप्रथमन्दद्यात्पितृभ्यस्तदनन्तरं ततोमातामहेभ्यश्च वृद्धौश्राद्धत्रयंस्मृतमितिवचनादिति तदयुक्तं अस्यापित्रिदिनविधायकत्वं प्रतिभानात् तथाचस्मृतिः मातृश्राद्धन्तुपूर्वेद्युः कर्माहन्येवपैतृकम् मातामह्यञ्चोत्तरेद्युर्वृद्धौश्राद्धत्रयम्स्मृतेत् वसिष्ठोपि पूर्वेद्युर्मातृकंश्राद्धं कर्माहम्पैतृकन्तथा उत्तरेद्युःप्रकुर्वीतमातामहगणस्यत्विति नन्वेकदिनकरणन्दिनत्रयाशक्तौ कर्माहेवेदितव्यमितिचेत् तदपिन तत्रापिपूर्वेद्युरेव विहितत्वात् तथाच पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे श्राद्धत्रयम्प्रकुर्वीतवैश्वदेवन्तु तान्त्रिकमिति तान्त्रिकमित्येकदिने विशिष्टविधिः वृद्धमनुरपि अलाभेभिन्नकालानां नांदीश्राद्धत्रयम्बुधः पूर्वेद्युरेवकर्तव्य म्पूर्वाह्णेमातृपूर्वकमिति यत्वेकदिनएवाचरन्ति तद्वचनादर्शननिबन्धनमित्यवधेयं जातकर्मादिविषयम् वेत्यविरोधः पठन्तिच पुंसवनेच सीमन्तेत्यन्न चौलोपनायने गोदानेस्नानउद्वाहे नांदीश्राद्धम्पुरोदितमिति अतश्चविहितेषु पूर्वेद्युरेवेति तन्न अकृत्वामातृयागन्तुयः श्राद्धम्परिवेषयेत् तस्यक्रोधसमाविष्टाहिंसामिच्छन्ति मातरइत्यादिवचनान्मातृपूजनस्य श्राद्धे पूर्वभावित्वात्तत्पूजने विरुद्धानीचवाक्यानि दृश्यते अत्रकात्यायनपरिशिष्टम् गौरीपद्माशचीमेधा सावित्रीविजयाजया देवसेनास्वधा स्वाहामातरोलोकमातरः धृतिःपुष्टिस्तथातुष्टिरात्म देवतया सह गणेशेनाधिकाह्येतावृद्धौ पूज्याश्चतुर्दशेति चतुर्विंशतिमते ब्राह्म्याद्यादिस्तथासप्त दुर्गाचेत्रगणाधिपः वृद्धौवृद्धौसदापूज्याः

पश्चान्नांदीमुखान्पितॄन् ब्राह्मीमाहेश्वरी चैवकौमारी वैष्णवीतथा वाराहीचतथैन्द्रीच चामुण्डादेवमातर. तिस्रःपूज्यापितुः पक्षेतिस्रोमातामहेतथा । इत्येतामातरःप्रोक्ताः पितृमातृष्वसाष्टमीति अत्रयथाशाखंयथा जातिकुलम्वाव्यवस्थेत्यविरोधः तथाच चतुर्विंशतिमते श्राद्धआभ्युदयेप्राप्ते देवतास्थापनंस्मृतम् । जातिधर्मकुलश्रेणिलोकानां वृद्धिकारकमिति तत्रमाध्यन्दिनशाखायामनुक्तत्वात्किञ्छन्दोगोक्तम् कार्यमुतान्यस्मृत्युक्तमिति सन्देहः तत्रैकआहुःपरोक्तत्वाद्यत्किञ्चिदिच्छयेति तथाचसंग्रहकारः सर्वेषामपि पक्षाणांस्वगृह्योक्तंविधीयते स्वगृह्योक्तस्यचाभावेग्रहणंस्वेच्छयाभवेदिति तदयुक्तं सूत्रपरिशिष्टयोरेककर्तृत्वात्तस्यान्यशाखिविषयत्वात्पारस्करमतस्याश्रयणीयत्वाच्च तथाचस्मृतिसंग्रहः । नगृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते कर्तुमर्हन्तितेसर्वेपारस्करमुनीरितमिति परेषांकरोतीतिहिव्युत्पत्तेः अतश्चगौर्यादयएवाचशाखायामितितत्प्रकारमाह ॥ स्त्रएवप्रतिमासुचशुद्धासुलिखित्वावापटादिषु अपिचाचतपुञ्जेषुनैवेद्यैश्चपृथग्विधैरिति शुद्धासुरजतादिधातुमयीषुअक्षतपुञ्जाः यवमुष्टयः यथासम्भवंयथाकुलञ्च विकल्पः व्यवस्थितविकल्पोवा जातकर्मणिबालानांनामाह्व यन कर्मणि निरीक्षणेप्राशने च व्यवस्थंमातृपूजनमितिवचनात् । अतएवपृथग्विधैरित्युक्तं गन्धताम्बूलवस्त्रादिभिश्चशब्दार्थः तथा कुड्यलग्नावसोर्धारांसप्तधारांघृतेनतु कारयेत्पञ्चधारांवानातिनीचांनचोच्छ्रितां कारयेदितिस्वार्थेणिच्स्वकर्तृत्वान्नियमार्थोवा तेननातिनीचांनचोच्छ्रितामितिमातृसंमितामेव नतासामधऊर्ध्वत्वाधिकमित्यर्थः कालमाह ॥

## मू० पूर्वाह्णे ॥ २ ॥

श्राद्धङ्कुर्यादितिशेषः एतच्चसकलदैवधर्मोपलक्षणं तेनोपवीति प्राङ्मुखदक्षिणजानुपातदेवतीर्थप्रागुदक्संस्थनमस्कारादिदैवधर्मः सर्वोपिप्राप्नोतीत्यर्थः। तथाचप्रचेताः अपसव्यन्नकुर्वीत नकुर्यादप्रदक्षिणं प्राङ्मुखोदेवतीर्थेनक्षिप्रन्देवविसर्जनम् दक्षिणम्पातयेज्जानुन्देवान्परिचरन्सदा निपातोनहिसव्यस्यजानुनोविद्यतेक्वचित् यथेत्रोपचरेद्देवांस्तथाहृद्यौपितृनपि दध्यञ्चतैः सबदरैःप्राङ्मुखोदङ्मुखोपिवा तथा पूर्वाह्णे दैविकंश्राद्धमपराह्णे तुपैतृकं एकोद्दिष्टन्तुमध्याह्ने प्रातर्वृद्धिनिमित्तकमिति दैविकन्द्वादश्यादिषुवैष्णवं तथाच विश्वामित्रः देवानुद्दिश्यक्रियते यत्तद्दैविकमुच्यते तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषुयत्नतइति ननुच प्रातर्वृद्धिनिमित्तकमित्यादानेकत्यात्प्रातरेवास्यविहितत्वात्कथम्पूर्वाह्णइति उच्यते प्रातःशब्देनपूर्वाह्णस्यैवोक्तत्वादितिवक्ष्यमाणत्वात् एवञ्चसतिपूर्वाह्णः किन्द्वेधाविभक्तोह्निग्राह्यः किंवात्रेधाऽह्निवद्धायाति चतुर्धाविभागान्तर्भूतत्वात् उच्यते दैवमानुषपित्र्यकालापेक्षयाविभागौ चिन्त्यौत्रिधाविभागएवग्राह्यइत्यदोषः तथाचश्रुतिः पूर्वाह्णोवैदेवानांमध्यन्दिनोमनुष्याणा मपराह्णःपितृणामिति नन्वेवमपिश्रुतिरेवपुनरन्हः पूर्वाह्णोदेवाः अपराह्णः पितरइतिद्विधैवाह तत् कथन्त्रिधाविभागएवेति मैवं सामान्येनास्याः श्रुतेराभ्युदयिकादन्यपित्र्यविषयत्वात् यत्तु पितृनप्यत्रदेववदित्यतिदेशेनप्रागावर्त्तनादह्नः कालंविद्यादितिगोभिलसूत्रेणच द्विधाविभागेनमध्याह्नोभिहितःसपाकयज्ञादिदैवकर्मविषयः अन्यथापराह्णेपाकयज्ञसंभवात्। तस्मात्त्रिधाविभागएवग्राह्यइत्यदोषः तथाचश्रुतिः पूर्वा-

ह्लोर्विदेवानां मध्यन्दिनइति सिद्धम् तथाचगार्ग्यः ललाटसंमिते भानौप्रथमः प्रहरः स्मृतः सएवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते अध्यर्धमधिकार्धं सार्धं प्रहरइत्यर्थः। अग्न्याधानाभ्युदयिकेतु गालवः। पार्वणाञ्चापराह्णेतु वृद्धिश्राद्धन्तथाग्निकमिति। अग्न्याधान निमित्तमपराह्णइत्यर्थः।

## मू० पितृमन्त्रवर्जञ्जपः॥ ३॥

मधुमतीपितृसंहितयोरुपलक्षणञ्चैतत्। तथाचमनुकात्यायनौ मधुव्वाताजपस्थानेकुर्यात्तत्प्रयत्नतः। उपास्मैगायतेत्यादिक्कचः पञ्चजपेत्तथा मधुमध्विति यस्त्वत्रचिर्जपोशितुमिच्छताम्। गायत्र्यानन्तरं सोत्रमधुमन्त्रविवर्जितः। नचास्नन्तसुजपेदत्र कदाचित्पितृसंहितां अन्यएवजपःकार्यः सोमसामादिकं शुभमिति। पित्र्यमन्त्राअस्नन्तसुजपे दित्यत्रोक्तास्तान्वर्जयित्वाजपः कर्तव्यइत्यर्थः। अत्रजपत्वाविशेषा दुशन्तस्त्वाऽयंतुनइत्यादीनामपि प्रतिषेधइति केचित्। आवाहनार्थत्वादनयोर्न प्रतिषेधइत्यन्ये एवञ्चसतिब्राह्मणाना मग्निस्थानीयत्वात्तच्छरीर वर्तिपित्राबाहनस्य मन्त्रेणैवोचितत्वाच्च विधिरेवंयुक्तःप्रतिभाति। अन्यथामन्त्रवत्क्रियमाणानाममन्त्रकत्वेन विफलत्वापत्तेः। अत्रैतच्चिन्त्यते किंवस्वादिप्रयोगः प्रकर्तव्यउतनेति। अत्रशेषंपार्वणवदित्यति देशेनप्राप्नोतीति। तदयुक्तम् पितॄणामप्यत्रदेवरूपत्वात्। तथाचस्मृतिः पितॄणांरूपमास्थाय देवाअन्नमदन्तिते तस्मात्सर्व्येन दातव्यं वृद्धिपूर्वेषुदातृभिः नांदीमुखेतिप्रयोगस्य तत्प्रतिनिधिरूपत्वाच्च। तथाह्युक्तं तत्रनांदीमुखमिति विशेषः समुदाहृतः अपिच चतुर्विंशतिमतम् नांदीमुखमितिविशेषः सम्पादितोनान्यइत्यर्थः।

## ऋजवोदर्भाः ॥ ४ ॥

दर्भशब्दोऽत्रदूर्वादि द्रव्योपलक्षको नसमूलत्वज्ञापकः तेनाऽत्र-दूर्वासाहचर्यात मूलाऋजुदर्भाभवन्तीत्यर्थः। तथाचपुराणसमुच्चये दधिदूर्वाक्षतमधु बदराक्षतमिश्रितैः अनुलेपनगन्धादि रक्तसूत्र ञ्चशस्यते हृद्धवसिष्ठोपि अपसव्यञ्जानुपातमन्नं मांसञ्चवारिजम् रक्तांविवर्जयेदर्भा न्समूलांश्चतिलानपीति गृह्यपरिशिष्टेपि युग्मा-ब्राह्मणाअमूलादर्भाइति। तत्रैतत्संदिह्यते किंदृद्धिश्राद्धमदैवतं स्यादुतसदैवतमिति उभययापिस्मृति दर्शनात्। तथाहि विष्व-प्येतेषु युग्मांस्तुभोजयेद्ब्राह्मणांच्छुचिः प्रदक्षिणन्तु सव्येनप्रदद्या द्दैवपूर्वकमिति। मार्कण्डेयोपि वैश्वदेवविहीनन्तत्केचिदिच्छन्ति सूरयइति। तदाभ्युदयिकं तत्र केचाहुः यथाशाखंव्यवस्थेति। एवञ्चसतितत्रापिकिंश्राद्धत्रयेपि विशेषणाद्दैवतविकल्पः किंवाश्रा-द्धविशेषइति संदेहः अविशेषेणैवश्राद्धत्रयेपीत्येके तदहृदयं श्राद्धवि-शेषेत्रदैवस्य विकल्पितत्वात्। तथाचशातातपः नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैवच मातृश्राद्धन्तु युग्मैस्यादादैवं प्राङ्मुखैःपृथक् केवलमित्यर्थः। आचारतिलकेपि पितरोन्वष्टकाश्राद्धम्मातामुंक्तेसदै-वताम् वृद्धावदैवतंमाता पितरश्च सदैवतमिति तस्मान्मातृश्राद्धएव दैवतविकल्पइति सिद्धं तथाच अन्वष्टक्येपितृभ्यश्च तत्स्त्रीभ्यश्च सदैवतं ताभ्यस्त्वदैवतं हृद्धौतेभ्यश्चैवसदैवतमिति यत्तु विष्वप्ये-ष्ववितिवचनं तत् द्वादशदैवत्यापिक्षयान्यनवदैवत्ये प्युपपद्यतइ-तिविरोधः॥

## मू० यवैस्तिलार्थाः ॥ ५ ॥

(१) अर्थं प्रयोजनंप्रतिनि धुरुपलक्षणञ्चैतत् तेनयवैस्तिलप्रतिनि-

(१) अत्रयावन्तस्तिलाथास्तेसर्वेपियवैरेवकर्त्तव्याः॥

धिर्यथातथास्वधादिपदेषु स्वाहादिपदानिप्रतिनिधातव्यानीत्यर्थः तथाचेश्वरः कुर्यात्स्वाहास्वधास्थाने वाचनेप्रीयतामिति वृद्धिश्राद्धेषुसर्वत्रनमोमेवृद्धिरिष्यतइति । नचयवैस्तिलार्थाइति वदतोयवक्षेपमंत्रोपिपितृप्रत्वेषु स्यादित्युक्तं तिलार्थस्यैवयवैरूप दिष्टत्वान्नमन्त्रस्येति तिलोसीति प्रत्यक्षविरुद्धत्वाच्च अतश्चतिलोसीतिमन्त्रएवयवोसीत्यादि पदप्रक्षेपःपितृपात्रे ष्वपीतितथाचाश्वलायनः यवोसिसोमदेवत्यो गोसवोदेवनिर्मितः प्रत्नमद्भिःपृक्तःपुष्ट्यानांदीमुखांल्लोकान्प्रीणाहिनःस्वाहेति पुराणसमुच्चयेपि अस्मच्छब्दन्नकुर्वीत श्राद्धे नान्दीमुखेक्वचिदिति अत्रैकेवृद्धिश्राद्धे पितर्यपात्रं न्युब्जमित्याहुस्तद्विशेषवचनानवलोकननि बन्धनमितुपेक्षणीयं तथाचेश्वरः अपसव्यं पित्र्यमंत्रंवामजानुनिपातनम् न्युब्जंपात्रन्नकर्त्तव्यं वृद्धिश्राद्धेषुसर्वदा वसिष्ठोपि दत्त्वापिण्डान्नकुर्वीत पिण्डपात्रमधोमुखमिति तथा गुडेधूपःप्रयत्नेनपुष्पाण्येवोत्तमा निचइति ॥

## मू० सम्पन्नमितितृप्तिप्रश्नः सुसम्पन्नमितीतरेब्रूयुः ॥ ६ ॥

तृप्तास्थेत्यत्रसंपन्नमितिवदेदित्यर्थः (१) साकांक्षत्वात्सुसंपन्नमितिप्रतिवचनम् एतच्चपाकश्राद्धएवनामान्ने तत्रैतदसम्भवात् तथाच आमश्राद्धमनंगुष्ठ मग्नौ करणवर्जितम् तृप्तिप्रश्नविहीनन्तुकर्त्तव्यंमानवैर्ध्रुवमिति विहितश्चविकल्पे नामश्राद्धम् तथाचवृद्धयाज्ञवल्क्यः आमश्राद्धंप्रकर्त्तव्यं वृद्धौनान्दीमुखेसदा पाकेनवाबहिःशालेः मधुरम्बदरंदधीति अत्रयथाकुलंयथासम्भवंवाविकल्पः अत्रैतच्चिन्त्यते किमामश्राद्धे पिण्डदानमामे कार्यमुतपाकेनेति तत्रैकआहुः आमश्राद्धं यदाकुर्या । द्विधिज्ञः श्राद्धदस्तदा तेना ।

(१) सुसम्पन्नमितिप्रोक्तंशेषमन्नंनिवेदयेत् ॥

ग्नौकरणंकुर्या त्पिण्डांस्तेनैव निर्वपेत्। दद्याद्यदिद्विजातिभ्यः। श्रृतम्वायदिवाश्रृतं तेनाग्नौकरणंकुर्या त्पिण्डांस्तेनैवनिर्वपेत्इति मत्स्यपुराणव्यासवचनाभ्या मामेनविहितत्वादामेनैवेति। तद-युक्तं आमश्राद्धंयदाकुर्या त्पिण्डदानङ्कथम्भवेत्। गृहपाकात्समु द्धृत्य सक्तुभिःपायसेनवेति पाकेनविहितत्वात् एवन्तर्हि विक-ल्पोस्त्विति नव्यवस्थासंभवे ऽष्टदोषदुष्टत्वात्। तस्मात्द्विजकर्तृ-केपाकेन शूद्रकर्तृक आमेनेतिव्यवस्थोत्पदेऽत्र तन्नातीवशोभते। साग्निनिरग्न्योर्विषया व्यवस्थोपपत्तेः तस्मात्साग्नेः पाकेनाग्नौ करण पिण्डौनिरग्नेरामान्नेनेतिव्यवस्था अथवायथाकुलमिति। यच्च आमेनपिण्डांददद्यादो विप्रान्पक्वेनभोजयेत्। पक्वेनकुरुतेपि-ण्डान्विप्रेष्वामं प्रयच्छति ताबुभौमनुनाप्रोक्तौ नरकार्हौनसंशयः तस्माद्विपर्ययम्विद्वा न्नकुर्याच्छ्राद्धकर्मणीति तच्छ्राद्धान्तरविषयं॥

## मू० दधिवदराक्षतमिश्राःपिण्डाः॥७॥

अक्षतायवाः मिश्रणंमिश्रः दध्यादिभिर्मिश्रितोदनेन पिण्डा-देयाइत्यर्थः। बहुव्रीह्युपलब्धेः अत्रै कआहुः दध्यादि त्रयमेव मेल-यित्वादेयाइति तदयुक्तम् शाल्यन्नस्यविहितत्वात् तथाचांगिराःशा ल्यन्नंमधुसंयुक्तं वदराणियवास्तथा मिश्राणिकृत्वाचत्वारि पिण्डा (१) न्छ्रीफलसंमितान् ददयादिति कात्यायनोपि सर्वस्मादन्नमधृ-त्य व्यञ्जनैरुपसिच्यच संयोज्ययवकर्कन्धु दधिभिःप्राञ्मुखस्तदइति पिण्डग्रहणमपिण्डकव्युदासार्थं एतच्च साग्निविषयं तथाचनिगमः आहिताग्नेःपित्रर्चनं पिण्डैरेवेति स्मृतिरपि योग्नौतुविद्यमानो-हि व्रजौपिडान्ननिर्वपेत् पतन्तिपितरस्तस्य नरकेसतुपच्यतइति यत्तु पिण्डनिर्वपणङ्कुर्यान् नवाकुर्यान्नराधिपेति भविष्यवचनं।

(१) श्रीफलंबिल्वम्॥

यच्च वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतमिति वचनं तन्निरग्नि विषयं तथा च यावन्नाचाग्निसम्बन्ध उत्पन्नाग्निस्तथैव च तावद्वृद्धि षु सर्वासु कल्पश्राद्धमपिण्डकं अत्र विशेषः पिण्डहीनेपि कर्त्तव्यम् विकरम्पात्रपूरणं अग्नौकरणमर्घञ्च त्येतच्छ्राद्धे चतुष्टयं वर्जनेपि-ण्डहीनेपि सर्वमर्घादिकम्भवेत् कुशांस्थाप्याश्वधांकुर्यात् चिपेदग्नौ-जलेपिवेति यत्तु सङ्कल्पन्तुयदाकुर्या न्नकुर्यात्पात्रपूरण मित्या-दितत्श्राद्धान्तरविषयं अपिण्डकन्तथादेशकुलाचारविषयञ्च वृद्धि श्राद्धे कुलाचार देशकालाद्यपेच्यहीति भविष्यद्वाक्यशेषात् अत्रत-च्चिंत्यते किमत्रावनेजन मुदकेनदेयमुतान्यद्रव्येणेति तत्रैक-आहुः तत्पात्रचालनेनाथपुनरप्यवनेजयेदित्यनेन पिण्डपात्रचा-लनजलेनैवेतिअन्येत्वाहुः चालनोदकस्य छन्दोगविषयत्वात् उद-केनैवेति तदुभयमपि विशेषवचनानुपलब्धि निबन्धनमित्यवधेयं चालनोदकस्य प्रत्यवनेजनविषयत्वात् चीरेणविशिष्टविधानाच्चेति तथाच प्राङ्मुखस्त्वथदर्भेषु दद्यात्चीरावनेजनं दधिबदरयवमधु-युक्तंश्रीफलसन्निभं तथाचय्योदकस्थाने दद्यात्चीरयवोदकमिति-ब्रह्मपुराणवचनात् अतश्चचीरेणैवेति पुनश्चिंत्यते पिण्डदानमपि किन्देवतीर्थेनाहोस्वित् प्राजापत्येनेति तत्रैकआहुः दध्यचतैः स-वदरैः प्राङ्मुखोदङ्मुखोपिवा देवतीर्थेनवैपिण्डान्दद्यात्कायेनवा-नृपे त्यनेनोभयतीर्थस्य विहितत्वाद्विकल्पएवेति । अन्येत्वाहुः । छन्दोगादेवतीर्थेन वाजसनेयिप्रभृतयः प्राजापत्येनेति तथाच-मार्कण्डेयः नान्दीमुखानांकुर्वीत प्राज्ञःपिण्डोदकक्रियाः प्रा-जापत्येन तीर्थेन यच्चकिञ्चित्प्रजापतेरिति अत्रानूचानाः प्रमाणं पिण्डोदकव्यतिरिक्तं देवतीर्थेनपिण्डोदकम् प्राजाप-त्येनेतिव्यवस्थावा अत्रविशेषमाह स्मृतिः । वह्नमातृकपुत्रोयः

श्राद्धेष्वन्वष्टकादिषु सर्वासांनामसंकीर्त्य पिण्डमेकंसनिर्वपेत्। पुराणसमुच्चये एकस्यबहवोभार्या एकपुत्रस्तथायदि एकेनापिसपुत्रायाः सर्वासांपिण्डःस्नुसः बह्वीनामेकपत्नीना मेकाचेत्पुत्रिणीभवेत् तेनपुत्रेणपुत्रिण्यः सर्वास्तामनुरब्रवीत्इति अत्रैतत्वंदिह्यते किमर्घदानेपिण्डवदेकस्मि न्सर्वेनामोद्देशः किंवापृथगर्घाइति तत्रैकेआहुः अर्घस्यपिण्डवद्विधानमेवेति तदयुक्तं अर्घदानपृथक्त्वोपदेशात् तथाचगालवः अनेकमातरोयस्य श्राद्धेचापरपाक्षिके अर्घदानंपृथक्कुर्या त्पिण्डमेकन्तुनिर्वपेदिति अपरपाक्षिकइतिश्राद्धान्तरोपलक्षणम् अत्रैके दाक्षिणात्याष्टदिश्राद्धेषु प्रपितामहमारभ्यार्वाचीनम् पिण्डदानादिप्रयोगमाचरन्ति-नान्दीमुखेविवाहेच प्रपितामहपूर्वकम् वाक्यंसमुच्चरेद्विद्वा नन्यत्रपितृपूर्वकमितिवचनादिति तदनुचितम् नान्दीमुखाःपितरःपितामहाःप्रपितामहाःप्रीयंतामित्यादिप्रयोगस्यकात्यायनेनपितृप्रभृत्युत्तरोत्तरक्रमेणाभिहितत्वात् आहचपरिशिष्टे उत्तरोचारदानेन पिण्डानामुच्चारोत्तरः। भवेदधस्ताधरणा माधारः श्राद्धकर्मणि तस्माच्छ्राद्धेषुसर्वेषु वृद्धिमत्स्वितरेषुच मूलमध्याग्रदेशेषु ईषत्सक्तांश्चनिर्वपेदिति उत्तरोत्तरः पुत्रपौत्रादिभिः समृद्धः अधराणामग्रमध्यमूलक्रमेणाधोदानेनाधाराः।पुत्रादिभिर्हीनोभवेदित्यर्थः तस्मादत्रशाखायां तत्रोचितमिति यत्तु नान्दीमुखेविवाहेचेति वचनन्तदन्यशाखिविषयम् देशकुलधर्मादिविषयंवेत्यविरोधः अत्रैतच्चिंत्यते वेदिकाया लेखावयम् पिण्डदानञ्च किमुदक्संस्थं कर्त्तव्यमुतदक्षिणासंस्थमिति तत्रैकआहुः अप्रदक्षिणत्वेपि अस्यश्राद्धस्यदैविकत्वा दुदक्संस्थमेवेति तदयुक्तम् आभ्युदयिके प्रदक्षिणमुपचारइतिविरोधाच्च नचोदक्संस्थतायाम् प्रमाणमुपल-

अन्दक्षिणासंस्थत्वेच पृदक्षिणं पृमाणमस्त्विति तस्माद्दक्षिणसंस्थमेव रेखायांपिण्डदानादि तथाचकात्यायनएव द्वितीयञ्चतृतीयञ्च मध्यादेशाग्रदेशयोः मातामहादिपृभृतीन् एतेषामेववामतइति एतेषांपितृादितृयाणाम् वामतइत्यन्वयः ततृपित्रादीनांमध्ये यत्वेनसम्बोध्यत्वेनच स्वसंमुखत्वाद्दक्षिणासंस्थत्वेनतेषांवामता यत्वाशादित्येन पिण्डानामव्ययवाभावाद्वामतायां कर्त्तृगतोवयवद्दृष्यतइतुरक्तम् तदसङ्गतम् एतेषामेववामत इतेयतच्छब्देन पित्रादीनांपरामृष्टत्वात् कर्त्तुरवयवत्वेतु एषामितिचबहुत्वविरोधाच्च तस्माद्दक्षिणासंस्थत्वेनैवतद्वामतासम्भवः अत्रार्थेद्वयाज्ञवल्क्यः जीवद्भर्त्तरिवामांगे मृतेभर्त्तरिदक्षिणइति अपिचस्मृत्यंतरं श्राद्धेसदैववामाङ्गे पत्नीनामुदकंहरेत् वृद्धिश्राद्धेषुनारीणां दक्षिणांगेसदाभवेदिति श्राद्धेसदैववामांग इत्येतदापस्तंबादिविषयं तेषाम्पित्रादिपिण्डपश्चिमतश्चपत्नी पिण्डविधानात् तथाचापस्तंबगृह्यं ॥ द्विधाभूतं यथाभवति तथासहृदक्षिणाग्रान् दर्भानुल्लिखितदेशेसंस्तीर्य तत्रपूर्वभागेपित्रादि वर्गार्थंस्तरणं पश्चाद्भागेतु मात्रादिवर्गार्थमिति स्त्रीभ्यश्चपिण्डाद्दृहपश्चिमाःस्युः इतितद्गृह्यभाष्यार्थसंग्रहकारः वृद्धिश्राद्धेषुनारीणां दक्षिणांगंसदाभवेत् इतितुसर्वविषयं तस्माद्रेखापिण्डदानादिकम् प्राङ्मुखकर्तृदक्षिणासंस्थमेववृद्धिश्राद्धेषु सर्वत्रकर्त्तव्यमितिसर्वमनवद्यम् ब्राह्मणनिवेशाप्येवं प्रागारभ्य पश्चात्संस्थमेवेति ॥

## मू० नान्दीमुखान्पितृनावाहयिष्यऽइति पृच्छत्यावाहयेत्यनुज्ञातो ॥ ८ ॥

लिङर्थेलट् अत्र तद्वक्तव्यं किम्पित्रादिविकस्य नांदीमुखत्वं आहोस्वित् वृद्धप्रपितामहादिविकस्येति स्मृतिषूभयथादर्शनात् ।

तथाचब्रह्मपुराणम् पितापितामहश्चैवतथैवप्रपितामहः त्रयोह्यश्रुमुखाएते पितरःपरिकीर्त्तिताः तेभ्यःपूर्वतरायेच प्रजावन्तः सुखेषिणः तेतुनान्दीमुखानान्दी समृद्धिरितिकथ्यते प्रसन्नमुखसंसर्गान्मङ्गलीयांस्ततस्तुतइति । ततश्चवृद्धप्रपितामहादिमुखत्वेनाभ्युदयिकत्वंप्राप्नोति अथवा पितापितामहश्चैव तथैवप्रपितामहः ॥ पिण्डसंबन्धिनोह्येते पितरः परिकीर्त्तिता इत्यादिवचनैरश्रुमुखानामेव पिण्डसम्बन्धित्वा त्पित्रादित्रिकस्यापि नांदीमुखत्वमिति तथाचसूत्रम् ॥ नांदीमुखाः पितरःपितामहाःप्रपितामहाइति मार्कण्डेयोपि येस्युःपितामहादूर्ध्वं तेस्युर्नान्दीमुखाअपीति प्रपितामहस्यापि नान्दीमुखत्वं नवृद्ध।दित्रिकस्यैवेति एवंचसत्युभयेषामपि नांदीमुखत्वमविरुद्धम् यच्चाश्रुमुखादिसंज्ञाकीर्त्तनन्तत्तत्कारणपरम् प्रसन्नमुखसंसर्गादित्यादिना नान्दीमुखाःवंशवृद्धिमीहन्ते ऽश्रुमुखास्तुपितृहरणसमर्थाः सन्ततमितिब्राह्मेनिरूपितत्वत् तस्माज्जीवत्पितृमातृमातामहादिकस्य कर्त्तुरधिकारार्थं वृद्धप्रपितामहादिकस्य नान्दीमुखत्वकीर्त्तनं मृतपितृमातृमातामहादिकस्य कर्त्तुरधिकारार्थं मश्रुमुखानांनांदीमुखत्वमितिव्यवस्थयैवाविरोधः तथाच चतुर्विंशतिमतम् नांदीमुखेविवाहादौ प्रपितामहपूर्वकम्। वाक्यंसमुच्चरेद्विद्वानन्यत्रपितृपूर्वकं जीवत्पितृकःप्रपितामहपूर्वकं मन्यत्रमृतपितृकः पितृपूर्वकमित्यर्थः दाक्षिणात्यास्तुप्रपितामह पितामहपितरितिक्रमद्ध्यर्थमेतदित्याहुः कात्यायनोपि जीवन्तमतिदद्याद्वा प्रेतायान्नोदकेद्विजः पितुःपितृभ्योवादद्या त्सपितेत्यपराश्रुतिः ब्राह्मेपि उक्तमादायपिण्डंतु कृत्वाबिल्वप्रमाणकं दद्यात्पितामहादिभ्यो दर्भमूलेयथाक्रममिति पठन्तिच जनन्यांविद्यमानायाम् यजेदास्तुपितामहीं मातृमःसचविज्ञेयो वृद्धिश्राद्धादृतेक्वचिदिति अतएवजीव-

वत्पित्रादिपंक्तिविकस्यापि छडिश्राद्धे धिकारइतिसिद्धम् अत्रैक-
आहुः पितृमातृमातामहानांमध्ये योजीवतितद्वर्गंपरित्यज्य पा-
र्वणद्वयमेकंवा यथासम्भवङ्कर्त्तव्यं त्रिषुजीवत्सु मातृपूजनमेव-
नश्राद्धमिति तथाच पितृवर्गेमातृवर्गे तथामातामहस्यच जीवेत्स-
यदिवर्गादौ तद्वर्गन्तुपरित्यजेत् इति तथाच सपितुःपितृकृत्येतु
अधिकारोनविद्यते नजीवन्तमति क्रम्य किञ्चिद्दद्यादितिश्रुतिः
तथा पित्र्यज्ञेजीवतिपितुर्नोक्त सग्नौहोमोपिपाज्ञिकः नजीवन्तम-
तिक्रम्य किञ्चिद्दद्यादितिश्रुतिरिति जीवत्पितृकस्यहोमान्तम-
नारम्भोवेत्यादिवचनेभ्य इति ॥ यत्तु उद्वाहेपुत्रजनने पित्र्येष्टांसौ
मिकेमखे तीर्थेब्राह्मणमायाते षडेतेजीवतः पितुरिति मैत्रायणी
यप रिशिष्टं तन्मैत्रायणीयशाखिनां साग्नीनामेव नजीवत्पितृकः
कुर्याच्छ्राद्ध मग्निमृतेद्विजः येभ्यएवपितादद्यात्तेभ्यः कुर्वीतसा-
ग्निकइति सुमन्तुवचनेननिरग्नेर्ज्जीवत्पितृकस्य श्राद्धानधिकारा-
दिति अलोच्यते यदुक्तम् पितृवर्गेमातृवर्गे तथामातामहस्यचे
त्यादि तन्नजीवद्वर्ग परित्यागस्य तीर्थब्राह्मणसम्पत्त्यादौनिरग्निजी-
वत्पितृकविषयत्वेनचरितार्थत्वात् तथाचाधिकारमाह महानदी-
षुसर्वासु तीर्थेषुचगयांविना जीवत्पितापिकुर्वीत श्राद्धम्पार्वणधर्मंव
दिति यच्चोक्तं त्रिषुजीवत्सुमातृपूजनेनैवश्राद्धसिद्धिरिति तदप्यसं-
गतम् अङ्गिनः श्राद्धस्यलोपेङ्गस्य मातृपूजनस्यप्रवृत्त्याश्चर्योपपत्तेः
नचश्राद्धमन्तरेणमातृपूजायाः कर्मणोङ्गत्वम् यच्चाभ्यधायिसपितुःपि
तृकृत्येष्वित्यादि निषेधस्तस्यवृद्धिश्राद्धादन्यश्राद्धविषयत्वात् तथाच-
क्रतुःअष्टकासुचसंक्रान्तौ मन्वादिषुयुगादिषु चन्द्रसूर्यग्रहेपाते स्वेच्छ
यापूज्ययोगतः जीवत्पितानैवकुर्याच्छ्राद्धङ्काम्यन्तथाखिलं अखिल-
मिति।व्यतीपातोजन्मऋक्षं चन्द्रसूर्यग्रहौतथा तिथिनक्षत्रवारांश्च

उद्दिश्याभ्युदयन्तथा एतांस्तुश्राद्धकालान्वैकाभ्यानाह प्रजापतिरित्या दिकं आभ्युदयआराममहादानाद्युत्सवः यत्वाम्नातं नजीवत्पितृकः कुर्या च्छ्राद्धमग्निमृतेद्विज इत्यनेननिरग्नि जीवत्पितृकस्य श्राद्ध-निषेधइति तदपिन उद्वाहेपुत्रजननइत्यत्र साग्निशब्दाभावान्नि-रग्निविषयत्वोपपत्तेः उक्तञ्चअनग्निकोपिकुर्वीत जन्मादौष्टद्विक-र्मणीति यच्च नजीवत्पितृकइत्यनेन साग्निजीवत्पितृकस्य श्राद्धवि-धानं तस्याष्टकादिनियत श्राद्धविषयं नसामान्येनसर्वश्राद्धविधायकं गयापरपक्षादिश्राद्धनिषेधानुपपत्तेः यदप्युक्तं जीवत्पितृकस्यहोमांत मनारम्भोवेति तत्साग्नेःपिण्डपितृयज्ञादि निषेधविषयंनाभ्युद-यिकमेवेति। तेभ्यःपूर्वतरायेवेइत्यादिना भ्युदयिकस्य प्रतिप्रस-वोपपत्तेः तस्माज्जीवत्पित्रादि त्रिकस्याभ्युदयिकं श्राद्धंकर्तुमुचि-तमितिसिद्धम् ॥

मू० नान्दीमुखाःपितरः प्रीयन्तामित्य क्षय्यस्थाने ॥ ८ ॥

अत्रनांदीमुखान्पितॄनावाहयिष्य इत्यनेनैवनांदीमुखत्वात्प्राप्तौ पुनस्तद्ग्रहणंसर्वत्रप्रयोगार्थं तदुक्तं तत्रनांदीमुखमिति विशेषःस-मुदाहृतइति प्रकृतिश्राद्धेष्वक्षय्योदकदानन्तु अर्घदानवदिष्यते । षष्ठ्यैवनित्यन्तत्कुर्या न्नचतुर्थ्याकदाचनेति कात्यायनेनषष्ठ्यन्तत-न्त्वयोर्विहितत्वादत्रतन्निषेधोवाचनिकः।तेनप्रथमाविभक्त्यातन्त्रेण चाक्षय्योदकदान मत्रक्षीरयवोदकैर्भवतीत्यर्थः। तथाच तथाक्ष-य्योदकस्थानेदद्या त्क्षीरयवोदकमिति पितृग्रहणंस्वपितृप्राप्त्यर्थं तेनजीवत्पित्रादिकोपि स्वमातृमातामहादिभ्यएव दद्यान्नपितृ संबन्धिभ्यइत्यर्थः अत्रैकआहुः अनग्निकोपिकुर्वीत जन्मादौष्टद्वि

कर्मणि येभ्यएवपिता दद्यात्तानेवोद्दिश्यपार्वणमित्यादिवचनेषु यत्त ऊर्द्ध्वनिर्देशात्पितृभ्यएवदद्यान्नस्वपितृभ्य इतितदयुक्तं स्वपितृभ्यःपितादद्यात्सुत संस्कारकर्मस्विति कात्यायनेन प्रादुर्भावे पुत्रात्ययोर्ग्रहणे चन्द्रसूर्ययोः स्नात्वानन्तरमात्मीयान्पितॄन्श्राद्धेन तर्पयेदिति कार्ष्णाजिनिनाच स्वपितृभ्यएवश्राद्धविधानात् नच मातृमातामहादिकं परित्यज्य पितृसंबन्धिभ्योदातुमुचितं अतश्च स्वपितृभ्यएवेतिसूक्तम् ॥

**सू० नान्दीमुखान्पितॄन्वाचयिष्यऽइति पृच्छतिवाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरःपितामहाः प्रपितामहाः नान्दीमुखा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ ९ ॥**

अत्रप्रथमोद्दिष्ट नान्दीमुखशब्देन वृद्धप्रपितामहादित्रिकस्यैव नान्दीमुखत्वंमाभूदित्य श्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्नान्दीमुखग्रहणं एवंमातामहेष्वपि अतएवमन्त्रे पितरःपितामहाइति बहुत्वमुक्तं चकारोमातृवर्गप्राप्त्यर्थं तथाचब्रह्मपुराणे मातामहेभ्यश्चतथानांदीवक्त्रेभ्यएवच अथनांदीमुखीभ्यश्च मातृभ्यःश्राद्धमुत्तममिति । ननुचाभ्युदयिके मातृश्राद्धस्यपूर्वंभावित्वात्पितृग्रहणंकिमर्थं उच्यते अग्निहोत्रंजुहोति यवागूंपचती तिवत्पाठोर्थेनबाध्यतइत्यदोषः तथाचशाट्यायनः नांदीमुखीभ्यइत्यादि मातृश्राद्धन्तु पूर्वंस्यात्पितॄणान्तदनन्तरम् ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृत मित्यादिच अतश्चनांदीमुख्योमातरः प्रीयन्तामित्यादिक्रमेणयथा-

लिङ्गम्प्रयोगः अत्रैतत्संदिह्यते किमत्रनवदैवत्यं श्राद्धमुतद्वादशदैवत्य-
मिति उभयथावचनदर्शनात् तथाहि मातृभ्यः प्रथमन्दद्यात्पितृभ्य-
स्तदनन्तरं ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृतमित्यादि चतुर्विंश
तिमतेतुमातृपूर्वान्पितॄन्पूज्य ततोमातामहीस्तथा मातामहन्ततः
केचिदेवंयुग्मांस्तुभोजयेत् पुराणसमुच्चयेपि शस्तंनांदीमुखंश्राद्धम्पि-
ण्डैर्द्वादशभिःसदातथापि दधिदूर्वाचतयवै र्बदरैर्णविमिश्रितैःपिण्डा
नांदीमुखे देयामातृपूर्वांश्चद्वादशेति एवंविप्रतिपत्तौ यथाशाखं-
यथाकुलन्देशंवाव्यवस्थेत्यविरोधः तुल्यविकल्पोवा अथवाधनधान्य
पुत्रपश्वादि वृध्यर्थंक्रियमाणम्वृद्धिश्राद्धं अग्न्याधानाद्यभ्युदयनिमि-
त्तमाभ्युदयिकमितिभेदः। तत्र वृद्धिश्राद्धन्द्वादशदैवत्यं आभ्युदयिकं
नवदैवत्य मितिव्यवस्थेति अन्वष्टकायांयच्छ्राद्धं यच्छ्राद्धम्वृद्धिहेतुकं
पित्रादीनांपृथग्दानं स्त्रीणांपिण्डः पृथक्पृथगिति अत्रवृद्धिहेतुक-
मित्यभिधानात् तथा शरीरोपचयेश्राद्ध मर्थोपचयएवच पुष्ट्यर्थमि-
तिविज्ञेय मौपचारिकमुच्यते तथा नक्षत्रग्रहपीडासु दुष्टस्वप्नाव-
लोकने इच्छाश्राद्धानिकुर्वीत नवसस्यागमेतथेतिवचनादिति॥

## मू० नस्वधाम्प्रयुञ्जीत॥१०॥

निषेधांतरोपलक्षणञ्चैतत् तेनशर्मादिकमप्यत्र नप्रयुंजीते-
त्यर्थः तथाचपुराणसमुच्चये नस्वधाशर्मवर्मेति पितृनामनचोच्चरेत्
नकर्मपितृतीर्थेन नकुशाद्विगुणीकृताः नतिलैर्नापसव्येन पित्र्यम-
न्त्रविवर्जितं अस्मच्छब्दंनकुर्वीत श्राद्धे नान्दीमुखेक्वचिदिति अतश्च
नांदीमुखपितरमुकगोत्रेत्यादिप्रयोगः। अन्येतुपार्वणवन्नामश-
र्मादिक मपिप्रयुंजते तन्निषे धदर्शनात्कथमितिचिंत्यं पार्वणव-
दित्यतिदे शाद्यातद्विधिः अत्रकश्चिदाह प्रकृतेस्वधावाचनेस्वधां-

प्रयुंजीतेतिनिषेधइतितदयुक्तं सामान्येनाभ्युदयिकेतन्निषेधात्॥

## मू० युग्मानाशयेदत्र ॥ ११ ॥

अत्राभ्युदयिकेयुग्मान्द्विचतुरादीन्विप्रानाशयेद्भोजयेदित्यर्थः अस्यदैविकत्वाद्दैवे युग्मान्यथाशक्ति इतिपरिभाषयैवयुग्मत्वप्राप्तौ विशिष्टविध्यर्थंयुग्मग्रहणम् तेनपित्र्येपि युग्मानेवप्रातर्निमंत्र्याशयेदित्यर्थः तथाचकात्यायनः प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथेति अन्यच्च ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान् कृत्वार्घंसम्प्रदातव्यं नैकैकस्यात्प्रदीयतइति युग्मानितिपुंस्त्वमविवक्षितम् तेनयुग्माभावेस्त्रियोपीत्यर्थः तथाच मातृश्राद्धे तुविप्राणाम लाभेपूजयेदपि पतिपुत्रान्विताभव्या योषितोष्टौकुलोद्भवाइति वृद्धवसिष्ठवचनात् शंखोपि पित्रादित्रयपत्नीस्तु भोज्यामातृप्रतिद्विजैः। स्त्रीणामेवतुतद्यस्मान्मातृश्राद्धमतःस्मृतमिति आशयेदित्यपिविशिष्टविध्यर्थं तृप्तिप्रश्ने नैवभोजनोपलब्धेः अतश्चगुडशर्करादिनामधुरान्नम् भोजयेदितिविशिष्टविधिरित्यर्थः तथाचभविष्यत्पुराणम् ब्राह्मणेभ्यस्ततोदद्याद्भोजनंमधुरञ्च गुडमिश्रंसितायुक्तं संघृतञ्चोदनम्परं सरत्नान्मोदकांश्चैव नचाम्लकटुकांस्तथा कृष्णान्तु योपि अन्यश्राद्धे षुदातव्यं नमांसम्मातृपूजनमिति अपिच अपसव्यं जानुपातमन्नम्मांसविवारिजम् रक्तं विवर्जयेद्दर्भान्समूलांश्चतिलानपीति तथा द्राक्षामलकमूलानियवांस्त्वाथनिवेदयेत् तानेवदक्षिणार्थे तु दद्याद्विप्रे षुसर्वदेति ब्रह्मपुराणम् अतश्चद्राक्षामलकमूल यवनिष्क्रयिणींदक्षिणां युवाभ्यांसम्प्रददइत्यादिप्रयोगः नैकैकस्यावदीयतइत्युक्तेः तथाभ्युदयिकश्राद्ध सन्देहोनिरस्यते तत्रकात्यायनः स्वपितृभ्यःपितादद्यात्सुतसंस्कार-

कर्मसुपिण्डानोद्वाहनात्तेषान्तस्या भावेतुतत्क्रमादिति अस्यार्थः पिण्डशब्दःश्राद्धं लक्षयति आउद्वाहनादितयाङ भिविधीततश्च-पुत्रस्यनिषेकादिप्रथमविवाहपर्यंतेषु संस्कारकर्मसुपिता स्वमातृ-स्वपितृस्वमातामहेभ्यः श्राद्धं दद्यात् नपुत्रमातृमतामहादिभ्यः तस्यपितुरभावेतेषामपि तुर्भ्रात्रादीनामेवनवानां तत्क्रमादेरनक्र-मेणपित्रादीनान्तेनैव क्रमेणाधिकारीज्येष्ठभ्रात्रादिरपिदद्यादिति नन्वेवंसतिसंस्कार्यस्य पुत्रादेर्म्रतपित्रोः श्राद्धादौमुख्याधिकारित्वा त्तदतिक्रमोनायुक्तइति नचजीवत्पित्रोर्ह्यनुष्ठानक्रमः सम्मृतपित्रो-रप्युचितत्वादितिवाच्यं प्रेतेभ्योदद्यादित्यादिवचनैः प्रत्तानामवश्य-देयत्वात् तस्मात्तेषान्तस्याभावेतुतत्क्रमादित्यस्यतत्क्रमात्तदुपक्रमा न्मृतपित्रादिमारभ्यैवश्राद्धम् भ्रातादिरप्यधिकारीकुर्यादित्येवार्थः तस्याभावेसुतः क्रमादितिपाठेपितदर्थस्यप्रतीयमानत्वाच्चेति । अत्रोच्यते असंस्कृतास्तुसंस्कार्याभ्रातृभिः पूर्वसंस्कृतैरित्यादिनाभ्रा-त्रादयः पित्रभावेप्रतिनिधित्वेना विधीयन्तेप्रतिनिधेश्च सतद्धर्मा-कर्मयोगादितिकात्यायनपरिभाषायांपितृधर्मप्राप्तेभ्रात्रादिः पितृ-समानधर्मेति किञ्चतस्याभावइति अभावः पञ्चविधः प्रागभावः प्रध्वंसाभावः सन्निध्यभावः अधिकाराभावः अत्यन्ताभावश्चेति तत्रसंस्कार्येसतिप्रागभावात्यन्ताभावयोरसम्भवएव प्रध्वंसाभावसं न्निध्यभावाधिकाराभावानांसम्भवोस्तीति तत्रसर्वंचापिवचनबलात् पितुः पितृभ्यः प्रदानम्विधीयतेनसंस्कार्यपितृभ्यः तथाचस्मृतिः। पितरोजनकस्यैवयावद्व्रतमनाहितम् समाहितव्रतः पश्चात्स्वान्यजे-तपितामहानिति पितामहानितिपित्राद्युपलक्षणम् तथाब्राह्म-ण्यविहितेतातेपतितेसङ्गवर्जिते व्युत्क्रमाच्चमृतेदेयं येभ्यएवददा-त्यसावित्यादि यत्तुप्रेतेभ्योदद्यादितिवचनन्तदधिकारसम्भवविषयं

अधिकारस्तत्सहायत्वेनविवाहानन्तरम् स्वपितृभ्योदातुमर्हतीति तथाचऋष्यशृङ्गः नाम्नातियोद्विजोमांसं यस्यनोदारसंग्रहः तावेतौ मुनिभिः प्रोक्तौअनर्हौमखदूषकाविति नाम्नातिमांसंश्राद्धे । इति-शेषः ननुच समाहितव्रतः पश्चात्स्वान्यजेतपितामहानित्यनेनोप-नयनादूर्ध्वंस्वपितृभ्यो दातुमधिकारस्तत्कथं विवाहानन्तरमितिउ च्यते उपनयनादूर्ध्वं स्वपितृभ्यो दातुं कर्त्रन्तराभावएकपुत्रविषयः कर्त्रंतरसद्भावेतु प्रतिनिधिभूतःसएवतदाद्यविवाह पर्यंतंसंस्कार्यस्य पितृभ्यएवदद्यादिति तथाचसुमन्तुः श्राद्धं कुर्यादवश्यं उप्रमीतपि-तृकोद्विजः व्रतस्थोवान्नतस्थोवा एकएवभवेद्यदीति तस्मात्युक्तमुक्त-म्पित्रभावेप्रतिनिधेःप्रतिधर्मं प्राप्या संस्कार्यस्यपितृमातृपि तामहेभ्यः श्राद्धं दद्यादिति तथाचस्मृतिः नान्दीश्राद्धं पितादद्या दादेयपाणि-ग्रहेवुधः अतऊर्ध्वं प्रकर्त्तव्यम् स्वयमेवतुनांदिकमिति । अपरमपि पित्रोस्तुजीवतोःपुत्रः कुरुतेदारसंग्रहम् पितुर्नांदीमुखंप्रोक्तम् नपु-त्रस्यकथञ्चनेति ननुपित्रोर्जीवतोरेव तत्पितृभ्योनान्दीमुखंप्रोक्तं मृतयोस्त्वन्यःकरोतीति तत्कथंसंस्कार्यस्यपितॄणामतिक्रमो युक्तः सतां उद्वाहनादितत्रवधिनापितृपितृभ्यएवविधाना त्सतद्धर्मंतिप-रिभाषया प्रतिनिषेधस्तदत्वक्रमस्य वाचनिकत्वात् अपिच वच-नांतरं कन्यापुत्रविवाहेषु प्रवेशेनववेश्मनः नामकर्मणिबालानां चूडाकर्मादिकेतथा सीमन्तोन्नयनेचैव पुत्रादिसुखदर्शने नान्दीमु-खम्पितृगणम् पूजयेत्प्रयतोगृही तिगृहएवोपदेशात् चूडाकर्मादि-कइत्यादावविवाहपर्यंतंवेदितव्यं तदूर्ध्वंतु द्वितीयविवाहादावपि सर्वत्रजीवत्पितृकःपितृपितृभ्योमृतक स्वपितृभ्यइतिविवेकः तत-श्चायमर्थः पितास्वपुत्रस्यनिषेकादि विवाहपर्यंत संस्कारकर्मसु स्वमातृपितृमातामहेभ्यःश्राद्धं कुर्यात् पितुरभावेसंनिहिते वाधि-

काराभावेवा तत्प्रतिनिधिज्येष्ठभ्रात्रादिर्विवाहपर्यंतम् कर्मसुसंस्कार्यस्यपितृभ्रएवकुर्यात् कर्त्रन्तराभावे उपनीतएकपुत्रःस्वस्यैव स्वविवाहे स्वमातृस्वपितृस्वमातामहेभ्योदद्यात् विवाहानन्तरं जीवत्पितृकः पितृपितृभ्योदद्यात् मृतपितृकः स्वपितृभ्यएवेतिसर्वमनवद्यम्।

इति श्रीश्राद्धकाशिकायां षष्ठीकण्डिका समाप्ता।

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्म

कृष्णमिश्रकृतौश्राद्धकाशिकायांसूत्र वृत्तौ।

आभ्युदयिकंश्राद्धंसमाप्तम्॥

इत्थम्पार्वणादिसर्वंश्राद्धमभिधायाधुनातृप्ताःस्थेत्यादिना तस्मैरस्मै प्रथक्त्वा सामन्तरेणासंतृप्ताःपितरोयांतीत्यादिदोषदर्शनादनेकविधद्रव्यैस्तां प्रतिपिपादयिषुःसूत्रमारभते॥

## मू० अथतृप्तिः। १॥

वक्ष्यतइतिसूत्रशेषः अथशब्दोऽधिकारार्थःआनंतर्यार्थस्सूत्रादेवलब्धेः तद्यथा आरण्यौषधिमूलफलमृगपक्षिमीनादिनानाविधद्रव्यैस्तृप्तिरधिक्रियतेवक्तुमित्यर्थःतथाचादित्यपुराणे विविधान्नानिमांसानि पितॄणान्तृप्तिकारणात्। दातव्यान्यनिषिद्धानि श्राद्धेचैवानघमेतद्इति॥

## मू० ग्राम्याभिरोषधीभिर्म्मासन्तृप्तिः॥ २॥

पितॄणामितिशेषः कालाध्वनोरितिद्वितीया अव्रतप्तिरित्यनुवृत्तौ पुनस्तद्ग्रहणमपांप्राप्त्यर्थं तेनौषधिजलाभ्यामेवतृप्तिर्नकेवलौषधीभिरित्यर्थः तथाचश्रुतिः आपोहवाओषधीना ठं० रसस्तस्मादोषधयः केवलयः खादितानधिन्वन्त्योषधय उपहायाऽरस-

स्तस्मादाप:पीता: केवल्योनपिबन्ति यदेवोभय्य: सउ्हृष्टोभवंत्य-
थेवविचिन्वंतीत्यन्वयव्यतिरेकेणार्थवादइति ओषध्योधान्यानि।
तथाचश्रुति: दशग्राम्याणिधान्यानिभवंति व्रीहियवास्तिलमाषा
अणुप्रियंगवोगोधूमाश्चमसूराश्च खल्वाश्चखलुकुलाश्चेति अयमर्थ:
व्रीहयस्तण्डुलधान्यानि तानिचश्वेतरक्तवर्णानि श्राद्धेदेयानि
कृष्णधान्यानिसर्वाणि वर्जयेच्छ्राद्धकर्मणीतिनिषेधात् प्रचेतास्त्वाह
कृष्णमाषास्तिलाश्चैव श्रेष्ठास्युर्यवशालय: महायवाव्रीहियवा स्तथै-
वचमधूलिका: कृष्णाश्वेताश्चलोहाश्च ग्राह्यास्यु: श्राद्धकर्मणि।
एतद्व्याख्यातंमाधवीये यवा:सितदीर्घशूका: महायवाव्रीहियवा
श्चयवविशेषा: मधूलिकाधान्यभेद: कृष्णास्थलजा: कृष्णव्रीहय:
रोहा:रक्तशालय: अन्यस्त्वाह मधूलिकायावनालजातिविशेषा:
तद्विशेषणंकृष्णा: श्वेतलोहिता: महायवावेणुयवाइति अत्रकृष्ण-
धान्यानिसर्वाणीत्यनेन विरोधान्माधवीयव्याख्यानमनुचितम् य-
वाद्विविधा महायवाव्रीहियवाश्च तिला:कृष्णा:कृष्णानिस्तुषामा-
षा: तथाचकृष्णमाषास्तिलाश्चेति असेध्या:सतुषमाषानिस्तु-
षापिमसूरिकेतिच अणु:क्षुद्रसस्यं प्रियंगु:कंगु स्तद्धुवचनंपृथग्ग्रह-
णंचभेदापेक्षं तथाचनिर्घंटु: पीततण्डुलिकाकंगु: प्रियंगु:कुक्कुरी-
मता सितकंगुस्तुमुसटी रक्तकङ्गुस्तुसाधिक: चनक: काककंगु:स्या
च्छ्यामाकस्तृणबीजकइति मसूरा:सतुषानिस्तुषाश्च नश्राद्धदेया:
निस्तुषापिमसूरिकेत्युक्ते: खल्वा:खलकुलाश्चाप्रसिद्धा: कोद्रवच-
णकौवाच्यौवागाभ्यत्वात् दशेतिग्रामसंख्यान किन्तुहविष्यसंख्या
तथाचविष्णुतिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैशाकै: श्यामाकै: प्रि-
यंगुनीवारैर्गोधूमैर्मासंप्रीयन्तइति मसूरादिग्रहणाच्च तथा मा-
संतृप्ति:पितृणान्तु हविष्यान्नेनजायतइति क्षुद्रधान्यानिश्यामाक

प्रियंगुतिलगौररक्तसर्षपवर्ज्जंसर्वाण्यश्राद्धार्हाणि निरस्तत्वात् तथा-
च वर्ज्यौमर्क्कटकःश्राद्धे राजमाषास्तथाणवः विपूयिकामसूराश्च
श्राद्धकर्मणिगर्हिताः भारद्वाजोपि निरसान्यपिसर्वाणि भक्ष्यभो-
ज्यानियानिच तानिसुर्न्नैवदेयानि सर्वत्रश्राद्धकर्मणीति ऋष्यवःक्षुद्रा
न्नानिरुष्णानि द्वयाज्ञवल्क्योपि मकुष्टोराजमाषाश्च मसूराश्च-
णकास्तथा कोद्रवामूलकाराजसर्षपाः श्राद्धघातकाइति राजसर्षपो-
माहरिः तथाचनिघण्टुः आसुरीराजिकाराजीकृष्णिकाराजसर्षपाः
राजिकाभद्दृत्यन्याराजिकाकृष्णसर्षपाइति चतुर्विंशतिमतेपि को-
द्रवाराजमाषाश्च कुलुत्थाश्चणकास्तथा निष्पावांस्तुविशेषेणपञ्चै
तान्वर्जयेत्सदा यावनालानपितथा वर्णयन्तिविपश्चितइति राज-
माषाःपीतगौरवर्णमाषाः लोविआ गोरवांसइतिमध्यदेशप्रसिद्धाः।
निष्पावावेल्लाः शिंबिसदृशादक्षिणापथप्रसिद्धः इतिकश्चित् चर-
कावनमुद्गाः यावनालाजोंधलीतिप्रसिद्धाः। तथाचनिघंटुःया-
वनालोदेवधान्यंजुंदलिंजुन्नलोनलइति अत्रनिष्पावनिषेधःकृष्ण-
विषयः कृष्णधान्यानिसर्वाणीतिनिषेधात् यवव्रीहिसगोधूमौति-
लामुद्गाःससर्षपाः पियङ्गवःकोविदारा निष्पावाश्चावशोभनाइति
मार्कण्डेयेन कृष्णेतरस्यविहितत्वात् शोभनःकृष्णेतरः स्मृत्यन्तरे
मुद्गाढकीमाषवर्जंद्विदलानिदद्यादिति द्विदलानिदलितुंयोग्या-
निमुद्गःकृष्णः हरितमुद्गकृष्णमाषश्यामाकेति ब्रह्मपुराणेपि हरि-
तस्यविहितत्वात् माषोराजमाषः तद्ग्रहणंकुलुत्थाद्युपलक्षणम्।
तथाचमरीचिः कुलुत्थाश्चणकाः श्राद्धे नदेयाश्चैवकोद्रवाः कटुका-
निचसर्वाणि विरसानितथैवचेति। आढकीतुवरी अरहरीतिप्र-
सिद्धाः एतान्वर्जयित्वाद्विदलानिदद्यादित्यर्थः।नित्यनुवृत्तौ विष्णु-
पुराणे मसूरक्षारवात्सोक कुलुत्थशणशिग्रवइति शणशिग्वादि

शाकानि शाकप्रकरणे प्रपञ्चयिष्यन्ते चारोयवचारादि शेषंस्मृति-भ्योविज्ञेयं एतानिधान्यानिनिस्तुषानि गव्यदुग्धादिसहितानिच मासंतृप्तिकराणि तथाच हृद्रयाज्ञवल्क्यमत्स्यपुराणयो:तुषहीनानि धान्यानि यान्तिसर्वाणिमेध्यताम् वर्जयित्वामसूरान्न मकुष्टान्रा-जमाषकान् मसूरादिधान्यत्रयं निस्तुषमपिअमेध्यमित्यर्थः । तथा अन्नतुसदधिक्षीरगोघृतंशर्करान्वितं मासंप्रीणातिवैसर्वान्पितॄनि-त्याहकेशव: कलाया:सर्वेपिअग्राह्या: कलाया:सर्वएववेति व-क्ष्यमाणत्वात् ॥

## सू० तदभावआरण्याभिः ॥ ३ ॥

ग्राम्याभावआरण्याभिरोषधीभि र्मासन्तृप्तिः पितॄणामित्यर्थः । आरण्या अरण्येभवा:श्यामाकप्रभृतय: आरण्या श्चैवक्तव्यादिति सप्रत्यय: तथाचमार्कण्डेय: राजश्यामकश्यामाको तद्वच्चैवप्रसा-तिका नीवारा:पौष्कलाश्चैव धान्यानिपितृतृप्तयइति पुष्कलानी-वारविशेषा: विष्णुपुराणे व्रीहयश्चयवाश्चैव गोधूमा:कङ्गुसर्षपा: माषामुद्गासप्तमाश्च अष्टमाश्चकुलत्थका: श्यामाकाश्चैवनीवा-रा जर्तिला:सगवेधुका: कोविदारसमायुक्ता स्तथावेणुयवाश्चये ग्रा म्यारण्या: स्मृता ह्येता ओषध्यश्चचतुर्दशेति आद्या:सप्तग्राम्या: । अष्टमाद्याआरण्या: ॥

## सू० शाकमूलफलैरौषधीभिर्वा ॥ ४ ॥

अत्रानुपूर्व्या ओषधिशब्द:प्रथमंव्याख्येय: । तथाचोक्तम् अति क्रिक्रान्तस्मृत्याज्यं हीनंवाक्येनिवेशयेत् विप्रकृष्टन्तुसंदध्या दानुपू-र्व्याप्रकल्पयेदिति वाशब्दोऽभावे ओषध्यभावे मूलफलादिनामासं तृप्तिरित्यर्थ: । तथाचहृद्रयाज्ञवल्क्य: अन्नाभावेतुकर्तव्यं शाकमूल-

फलादिनेति अत्रपुनरौषधिग्रहणं आरण्यौषधिभावे विहितप्र-तिषिद्धौषधिप्राप्त्यर्थः। तथाचमार्कण्डेयः गोधूमैरिक्षुभिर्मुद्गैः स्तीनकैः श्यामाकैरपि श्राद्धे युदत्तैःप्रीयन्ते मासमेकम्पितामहाइति। मुद्गावन्याःचीणाकस्तृणधान्येषुकंगुभेदः उशनापि नोवारमाषमुद्गाश्चगोधूमाःशालयस्तथा यवाश्चचणकाश्चैव कंगुभेदःप्रशस्यतइति। ततश्चग्राम्याआरण्या विहितप्रतिषिद्धाःफलानि मूलानि पूर्वपूर्वाभावे उत्तरोत्तराणिक्रमेणग्राह्याणीत्यर्थः अथवासमुच्चयार्थमोषधीग्रहणंतेनौषधिसहितान्येवफलादीनि तृप्तिकराणिइत्यर्थः तथाहिउत्तरसूत्रंसप्तान्नेनेति मनुरपि भक्ष्यंभोज्यंचविविधं मूलानिचफलानिच हृद्यानिचैवमांसानि सर्वन्ददद्यादमत्सरीति मूलफलैरद्भिर्वेति पाठः तथाचसूत्रान्तरम् मूलफलैरद्भिर्वेति सर्वाभावेऽद्भिस्तृप्तिरित्यर्थः तथाच पराधीनःप्रवासीचनिर्धनोवापिमानवः मनसाभावशुद्धेनश्राद्धे दद्यात्तिलोदकम् अनुकल्पोपलक्षणञ्चैतत् तेनोपवासादिकमपिज्ञेयम् आपोनिषिद्धातिरिक्ताः। तथाचभरद्वाजः नक्तोद्धृतन्तु यत्तोयम्पल्वलाम्बुतथैवच वर्जयेदितिशेषः मार्कण्डेयोपि दुर्गन्धिफेनिलञ्चाम्बु तथाल्पप्रदरोदकं यन्नसर्वार्थमुत्सृष्टम् यच्चाभोज्यन्निपानजम् तद्वर्जंसलिलन्तातसदैवश्राद्धकर्मणीति मूलग्रहणान्दशविधशाकोपलक्षणम् तथाच मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् त्वक्पुष्पङ्कवचञ्चेति शाकन्दशविधं स्मृतमिति। मूलंमूलकादि पत्रपालक्यतण्डीवादि करीरम्वंशांकुरादि अग्रं आम्रपूचवेत्रादीनां फलङ्कूष्माण्डादि काण्डंसार्षपवास्तुकादि अधिरूढकन्तालास्थिमज्जादि त्वङ्मातुलिङ्गादि पुष्पन्तिन्तिडीककाञ्चनादि कवचंशिलीध्रादि॥ मार्कण्डेयः विदार्यैश्चभुरुण्डैश्च बिसैःशृङ्गाटकैस्तथा केन्दुकैश्चतथाकन्दैः कर्कन्धुबदरैरपिपालेव-

तैरानुकैश्चाप्यक्षोटैः पनसैस्तथा काकोलैःक्षीरकाकोलैस्तथापि-
ण्डालुकैः शुभैः लाजाभिश्चशिलाभिश्च त्रपुसैर्वोरुचिर्भटैः।
सर्षपैराजशाकाभ्यां इंगुदैराजतन्तुभिः प्रियालामलकैर्मुख्यैः।
फलुभिश्चातिलम्बकैः वेत्रांकुरैस्तालकंदैश्चुक्रिकाक्षीरकावचैः
मोचैःसमोचैर्लकुचैस्तथावैबीजपुरकैः मुंजातकैः पद्मफलैः भक्ष्य-
भोज्यैःसुसंस्कृतैः रागखाण्डवचैश्चश्च त्रिजातकसमन्वितैः दत्तै-
स्तुमासम्प्रीयन्ते विधिवत्पितरोन्नृणामिति अस्यार्थः विदारीतस्याः
कन्दमितिशेषइत्यन्वयः भुरुण्डोजलप्रभवः कन्दविशेषइतिमञ्ज
रीकारः केन्दुकःकचूराख्यशाकः जलप्रभवः कन्दविशेषइत्यन्यः।
बिसंमृणालम् शृङ्गाटकम् जलजंत्रिकण्टकफलं सिंघारइति प्र-
सिद्धः कन्दःसूरणकन्दः कर्कन्धुस्वादुबदरीफलम्बदरमन्यबदरफलं
पालेवतञ्जम्बीराकारंफलङ्काश्मीरप्रसिद्धं आरुकं आरुकन्दः। अक्षो
टःपार्वतेयपीलुफलम् पनसैः कण्टकिफलैः कटहरइति प्रसिद्धैः
काकोलैर्मधुराफलैः क्षीरकाकोलैस्तद्भेदैः पिण्डालुकैश्चतुर्भेदैः।
तथाचमनुः पिण्डालुकमसगन्धंमध्वालुस्यात्तुरोमशं शङ्खालुशङ्ख
सङ्काशं काष्टालुस्त्वल्पकाष्टकमितिलाजाभिर्भ्रष्टधान्यैः तथाचशंखः
लाजन्नमधुयुतान्दद्यात्सक्तून्शर्करयासहेति शिलाशैलेयं त्रपुसंत्रपु-
सीफलम् उर्वारुस्वादुकर्कटी चिर्भिटः कटुककर्कटी सर्षपोगौरस
र्षपशाकः राजशाकःशाकविशेषः कृष्णसर्षपशाकमिति माधवीये
तन्न तस्यप्रतिषेधात् इंगुदस्तापसतरुः राजतन्तुः प्रियालोराजोद-
नम्। निघण्टोक्तेः प्रियालद्राक्ष्यावा फलुका काटुम्बरिकाफलम्
अतिलम्बकैस्तालकदैस्तालमूलैः कन्दैः चुक्रिकाचिविकाफलम्।
तिन्तिडीफलमित्यर्थः। नागरखण्डातिन्तिडीतिस्थलान्तरवचनात्।
तिन्तिरीकाफलाध्यक्षं मोचाकदलीफलम् लकुचैर्लकुचफलैः बी

जपुत्रकैः मुञ्जातकैः पद्मफलैर्वदरइतिप्रसिद्धैः भक्ष्यंलड्डुकमोदकादि भोज्यव्यंजनमोदकादिसूपयुक्तम् रागखांडवाः रसालादिपानविशेषाः तथाचनिघण्टः मार्जिताशिखरिन्युक्ता रसालारम्भितस्तथा ओषधिषांडवाख्याचचतुर्जातकसंयुतेति चतुर्जातकं वक्ष्यमाणम् सुसंस्कृतैरितिमेलकविशेषैः तथाचसूपकारशास्त्रं अर्द्धाटकं सुचिरपर्युषित स्यदध्नःखण्डस्यषोडशपलानिशशिप्रभस्य सर्पिः पलम्मधुपलम्परिवर्द्धिकर्षं शुंठ्यापलार्द्धमथवार्द्धपलञ्चतुर्णां श्लक्ष्णेपटेललनयामृदुपाणिघृष्टाकर्पूरधूलिसुरभिकृतभांडसंस्था एषावृकोदरकृता सरसारसालायास्वादिताभगवतामधुसूदनेन । चोष्यैराम्रादिकैःफलैस्त्रिजातकंलवंगएलागन्धपत्रमिलनं । तथाच निघण्टुः त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धित्रिजातकम् नागकेसरसंयुक्तं चतुर्जातमुच्यतइत्यादि वायुपुराणे बिल्वामलकमृद्वीकापनसाम्रातदाडिमञ्चव्यप्राचेवताचोट खर्जूराम्रफलानिच कसेरुःकोविदारश्च तालकन्दतथाविसं तमालंशतकन्दञ्च गन्धालूशीतकन्दकम् कालेयंकालशाकञ्च सुनिषण्डंसुवर्चला मांसशाकन्दधिक्षीरं वेचुवेत्राङ्कुरस्तथा वधूलःकिङ्किणीद्राक्षा लकुचम्मोचमेवच कर्कन्धुग्रीवकम्बारन्तिन्दुकम्मधुसाह्वयं नैकङ्कतनालकेरं शृगाटकपरूषकम् पिप्पलीमरिचञ्चैव पटोलंबृहतीफलं सुगन्धिमत्स्यमांसञ्च कलायाःसर्वएवहो एवमादीनिचान्यानि स्वादूनिमधुराणिच । नागरञ्चात्रवैदेयं दीर्घमूलकमेवचेति। अस्यार्थः मृद्वीकागोस्तनीद्राक्षा पनसोव्याख्यातः । आम्रातकःकपीतनः । चव्यञ्चविका । प्राचेवतमुक्तं । आचाटोक्षुक्तः कसेरुर्भद्रमुस्ता । तालकन्तालमूलीति प्रसिद्धा । शतकन्दंशतावरी । गन्धालूःकर्चुरशाकम् । शीतकन्दं शालूकम् । कालियकन्दःदारुहरिद्रा । करालाख्यशाकमिति गोवि-

न्द्रराजः । सुनिषण्णाविसुन्नशाकं । सुसनुनीति ख्यातञ्चलमयं-
शाकमितिकश्चित् । सुनिषण्णं वांगेरीसदृशशाकम्बा । वांगेरीस-
दृशैः पत्रैःसुनिषण्णकमुच्यते । शाकञ्चलाशयेदेशेचतुः पत्रीतिगच्छ-
न्तइति सुश्रुतोक्तेः । सुवर्चला.ब्रह्मसुवर्चला । सूर्यावर्तइति गोवि-
न्दराजः । वधुलःशोकर्णिका । किङ्किणीद्राचाक्षुद्रद्राक्षा । लकु-
चोलिकुचः मोचाकदलीफलं कर्कन्धुःहस्वः ग्रीवकञ्चकाञ्चुष्यंधार-
प्रियाल,विशेषः तन्दुकोसितसारः शृंगाटकमुक्तम् पकपकाप्के-
लकसइतिप्रसिद्धफलम् बृहतीविदिग्धकाल वरेहटाइतिप्रसिद्धम
दोर्घमूलं तखिडकैरीफलम् मूलकमित्यन्यः पटोलोदीर्घपटोलोरा-
जीफलमित्यर्थः विचेण्डाइतिलोके यत्तु गन्धारिकापटोलानिश्रा-
द्धकर्मणिवर्जयेदितिपटोलनिषेधः सत्तुद्रपटोलविषयः तथाचनिब-
न्धः पटोलीयाद्वितीयाच्याखादुपत्रफलावसैदिति शेषम्प्रसिद्धं कु-
मारेश्वरसंवादेपि । पालेवतमृद्वीकाखर्जूराम्रकसेरुका बिल्वा-
मलकमाक्षोटपनसाम्रातकानिच । वेदुर्वेवांकुराःशाल्मलकुचम्मो-
चमेवच शीतकन्दंविसन्नालिङ्करकम्भूलकन्तथा । इत्यादिमेध्यम-
न्यद्प्रदेयंश्राद्धकर्मणि । वेचुःशणभेदःइतरस्यानिषेधात् । वेचुर्म-
टाकंशाकमित्यन्यः वर्ज्यशाकान्याहविष्णुःभूस्तृणशिग्रु,सर्षपसुर-
सार्कजकूष्माण्डालाबुवार्त्ता कपालक्यतन्दुलीयककुसुमःदिवर्ज-
येदिति भूस्तृणारोहिसःगन्धतृणाख्यं शाकमित्यन्य.शिग्रु,र्सहिज-
नाइतिप्रसिद्धं सर्षपोराजसर्षपः इतरस्याविहितत्वात् सुरसाश्वे-
तनिर्गुण्डी अर्कजः श्वेतार्कजः कुहेरइतिप्रसिद्धः । पालक्यः पल-
कीतिप्रसिद्धः तंदुलीयकञ्चोराइतिप्रसिद्ध वार्तकंश्वेतवृन्ताकं ।
उशना । नाशिकाश्शणकत्वाककुसुंभानांबुविद्धवाम् । कुम्भोकम्बुक-
कृत्ताककोविदारांश्चवर्जयेत् । वर्जयेद्गृञ्जनंश्राद्धे काञ्जिकम्पिण्ड-

मूलकं करंजं येपिचान्येवैरसगन्धोत्कटास्तथा । नालिका प्रसिद्धा ।
दीर्घनालाग्रेलापल्लवेतिमाधवीये छत्राकं शिलिन्ध्र: कुम्भीशीपर्णिका
कम्बुकं हस्तालाबु वृन्ताकं श्वेतं कोविदारश्चमरकम् गृञ्जनोहरि-
द्रावर्ण: पलांडुविशेष: कांजिकम्प्रसिद्धम् करंजस्थिरविल्वफलम् पुरा
णेपिवंशङ्करीरंपुरसंसर्जकम्भूस्तृणानिच अवेदोक्ताश्चनिर्यासालवणा
न्यौषराणि च।भरद्वाजोपि स्वल्पांबुकूष्मांडकलम्बञ्जकन्दञ्चपिप्पली।
विविकानिकरीराणि कोविदारगवेधुका: । कुलत्थश्वणजम्बीरक-
रम्भाणितथैवच । षजाद्रन्यदृत्तापुष्पं शिग्रुघ्नारन्तथैवच । एतानि
नैवदेयानिसर्वस्मिन् श्राद्धकर्मणीति । पैठीनसि: हन्ताकंनालिका
पोतकुसुंभाश्मंतका:श्वेति शाकनामभक्ष्याइति । स्मृत्यन्तरं पिण्डा
लुकस्वश्रुण्डीरङ्करम हृं स्वनालिकम् । कूष्माण्डंवर्तुवीजानि श्राद्धे
दत्वाव्रजत्यध: । भविष्येपि लशुनंगृञ्जनञ्चैव पलाण्डुञ्चकानिच
हन्ताकमालिकालाबुजानीया ज्जातिदूषिताइति । एषामर्थ: । वंश
ङ्करीरवंशांकुर: सरसंपर्णासद्वन्य: सर्जकंशालफलम् । पीतमा-
रकद्धत्यन्य: अवेदोक्ता:निषिद्धनिर्यासा: व्रश्चनप्रभवादय: । तथा-
चमनु: लोहितान्वृक्षनिर्यासाव्रश्चन प्रभवांस्तथेति । लोहिताश्च
निर्यासालाक्षादय: तेनपाटलश्वेतवर्णानां हिंगुकर्पूरादीनामनि-
षेध: । हिंग्वादीनां विषयमग्रे वक्ष्याम: औषराणिकृतलवणानि
वर्जीस्तवमसूराश्चकोद्रवा लवणङ्कृतमितिवचनात् । सैन्धवसामु-
द्रादीनां विहितत्वात् । तथाच लवणेसैन्धवसामुद्रे इति अपिच
सैन्धवंलवणं यच्च यच्चमानससम्भवं । पवित्रे परमेह्येतेप्रत्यक्षे अपि
नित्यश: मानससम्भवंसांभरीति प्रसिद्धमिति । हलायुध: करीरं
गूढपत्रङ्करीलइतिप्रसिद्धम् कोविदारउक्त: वज्रकादम्बोद्भव: । सूर-
णगवेधुका शणांशणपत्राणि । जंवीरोदन्तशठफलम् करम्भाणि

क्षारयवक्षारसौवर्च्चल सौवर्च्चकादिलवणानि। पोतम्पौतिका-
शाकम् अश्मन्तकोमहोलीवृक्षइति प्रसिद्धस्तच्छाकम्। वृन्ताकंश्वेतं
तथाचदेवलः काण्डूरंश्वेतवृन्ताकं कुष्माण्डञ्चविवर्जयेत्। उपमन्यु-
रपि नाश्नीयाच्छ्वेतवृन्ताकं मातुलानींतथाण्डकं अण्डकञ्छत्राकं
मातुलानिभङ्गेति काण्डूरंकपिकच्छूः। तत्फलङ्खर्जूरफलमित्यर्थः।
कुष्माण्डंवृन्तालाबुसदृशफलम् पिण्डालुपेडरुइतिप्रसिद्धं शुण्डीरं
करमर्द्दः करवन्दफलानि। वहुवीजानिवहुबीजपूरकादीनि
पलाण्डुःश्वेतकन्दः पलाण्डु विशेषः लशुनन्दीर्घपत्रञ्चपिच्छाग
न्धोमहौषधम्। करायश्चपलाण्डुश्च लताकाश्चपरालिका।
गृञ्जनम् पतनेष्टश्च पलाण्डोदशजातय इति सुश्रुतोक्तेः। कवलं
शिलीन्ध्रः कुमारसंवादेपि वर्ज्यास्तचमसूरास्तुकोद्रवालवणाङ्कृतं।
भूस्तृणं सरसं शिग्रुम्पालक्यासुमकं तथा। पिण्डंमूलञ्च वंशाग्रं
लोहितंव्रश्चनानिच। पलाण्डुं विड्वराहञ्च छत्रा, कंग्रामकुक्कुटं
लशुनंगृञ्जनं जंबूफलानिकवकानिच तण्डूलीयक मुद्दालराज-
माषासुरीरपि। कृष्णाजात्यतसीतैलम्मयश्च जाविकादिकमिति
सुमकाङ्गादिरीसं ज्ञकञ्जलभवंशाकंउद्दालःकोविदारः आसुरीरा
जिका। कृष्णाजातीकृष्णजीरकः करोञ्जीतिप्रसिद्धश्च अतसी-
तुमाशेषम्प्रसिद्धं हारीतः नवटंक्षचौदुंबरदधित्थनाल मातुलिङ्ग-
फलानिभक्षयेदिति। लक्षः पर्कटीः दधित्थः कपित्थःमातुलिङ्गो-
वीजपूरकः अत्रैतच्चिन्त्यते। किम्पिप्पलीमरीचहिंगूनां निषेधः
उतविधिः उच्चयथावचनदर्शनात्। तथाचविष्णुः पिप्पलीसुमक-
भूस्तृणेत्यादि शंखोपि पिप्पलीमरिचञ्चैव तथावैपिण्डमूलकम्।
कृतन्तुलवणं सर्वंसाग्रं शिग्रुञ्चवर्जयेत् व्यासः अश्राद्धेयानिधान्या-
निकोद्रवापुलकास्तथा हिंगुद्रव्येषु शाकेषुकालानाश्चशुभास्तथा

द्रव्येषु हिंगुशाकेषु कालानश्चशुभानिच निषिद्धेत्यर्थः पुलकाह्र-स्वश्कान्दसः। कालानलः कृष्णार्जकःकुहेरइतिप्रसिद्धः शुभाशुभा-ख्यःशाकविशेषः इत्यादिनिषेधः विधिस्तुपिप्पलीमरिचञ्चैवपटोलं बृहतीफलमितिवायुपुराणे कुमारेश्वरसम्वादे पिप्पलीमरिचंहींगुप टोलंबृहतीफलमित्यादि आदित्यपुराणेपि मधूकं रामठञ्चैवकर्पू-रंमरिचङ्गुडमित्यादि रामठंहिङ्गुः एवंवचनविप्रतिपत्तौकेचिदाहुः पि प्पलीमरिचं हिंगूनांसंस्कारकत्वेनविधिर्युक्तःप्रतिभाति केवलाना-म्प्रतिनिषेधः अपरेतु संस्कारान्तराभावेविधिरन्यथानेत्याहुः। षोड-शीग्रहणाग्रहणवद्विकल्पइत्येके एवञ्चसतिसंस्कारकत्वेन विधिर्युक्तः प्रतिभाति । संस्कारत्वेनखाद्वनिमधुराणिचेतिखाद्वत्वविधित्वो पपत्तेः तथाच शुंठीमरीचम्पिप्पल्योधान्यकाजाजिहिङ्गुकम् पिप्प-लीमूलसंयुक्तसंस्कारइतिस्मृतमिति शङ्खः कृष्णाजाजीविडञ्चैव-सीतपाकीतथैवच वर्जयेल्लवणंसर्वंतथाजम्बूफलानिच । कृष्णाजा जीकृष्णजीरकः बिडंविडाख्यम् । लवणंसर्वंसैन्धवसामुद्रसाम्भरि-व्यतिरिक्तम् ब्रह्माण्डपुराणे आसनारूढमन्नादंाम्पादोपहतमेव चअमेध्यादागते । स्पृष्टम्भुक्तम्पर्युषितञ्चयत् द्विःस्विन्नम्परिदग्ध-न्तथैवाग्रावलेहितम् शर्कराकीटपाषाणैःकेशैर्यच्चाप्युपद्रुतम् पिण्याकम्मथितञ्चैवतथातिलवणञ्चयत् सिद्धाःकृताश्चयेभक्ष्याः-प्रत्यक्षलवणाकृताः वाग्भावदुष्टांश्चातथादुष्टैश्चोपहतांस्तथा वास-साचावधुतानिवर्ज्यानिश्राद्धकर्मणीति आसनारूढमासनोपरिकृतं पादोपहतंपदास्पृष्टम् अमेध्यादागतैःचर्मकारादिअपवित्रस्थाना-दागतैरशुद्धैःस्पृष्टम् द्विःस्विन्नन्द्विः पक्वम् परिदग्धमतिदग्धम् अ-ग्रावलेहितंश्राद्धात्पूर्वमास्वादितम् पिण्याकन्तिलकल्कःमथितङ्करे-णविलोलितन्निर्जलन्दधि करेणमथितन्दधीतिनिषेधात् मथि-

तन्तक्रमित्यन्यः। सिद्धाभक्ष्याः आमलकादयः पृथक्लवणेनमि-श्रिताः तथा दधिशाकन्तथाभक्ष्यं शुक्रञ्चौषधिवर्जितम् वर्जयेच्च-तथान्यत्तुसर्वानभिषवानपि अभक्ष्यन्दधिशाकञ्चवर्जयेदित्यन्व-यः। अन्यन्निषिद्धमित्यर्थः अभिषवाःसन्धानानिशुक्तमनम्लं वस्तु कालान्तरेणद्रव्यान्तरेणवात्यम्लन्नस्वभावतोत्यम्लम् तथाचबृहस्पतिः अत्यम्लंशुक्तमाख्यातन्निन्दितंब्रह्मवादिभिरिति अत्रापवादःश-ङ्खेनोक्तः दधिभक्ष्यञ्चशुक्लेषु सर्वंचदधिसम्भवम् क्षीरपक्कम्भ-क्ष्यंस्यात्सर्पिर्युक्तमितिस्थितिः अनग्निकमुष्माक्षीरसन्तेनपक्क-माषादिघृतयुक्तम्भक्ष्यमित्यर्थः। वायुपुराणेपिभक्ष्याण्येवकरम्भा-श्चइष्टकाघृतपूरिका कृशरोमधुसर्पिश्चपयः पायसमेवच दधिग-व्यामसंसृष्टभक्ष्यान्नानाविधानपि। शर्कराक्षीरसंयुक्ताःपृथुकानि-त्यमक्षयाः। सक्तूंल्लाजांस्तथापूपान्कुल्माषाव्यञ्जनैःसह। सर्पिःस्नि-ग्धानिसर्वाणिदध्नासंस्कृत्यभोजयेत् श्राद्धेष्वेतानियोदद्यात्पित-रःप्रीणयन्तितमिति करम्भादध्यक्ताःसक्तवः इष्टकाःकासारखंडा-नि पृथुकाश्चिपिटाः असंसृष्टभक्ष्याःस्वकीयभक्ष्या लाजाभ्रष्टव्री-हितण्डुलाः अपूपाःमण्डकाःकुल्माषोयावकाःएतानिपर्युषिता-न्यपिघृतस्निग्धानिदध्नामधुनाचसंस्कृतानिभक्षयेदिति पर्युषिता पवादइत्यर्थः यत्किञ्चिन्मधुनामिश्रंगोक्षीरघृतपायसैः दत्तमक्षय्य-मित्याहुःपितरःपूर्वदेवताइतिमत्स्यपुराणवचनादित्यलम्बहुनाशेषं स्मृतिभ्योनुसन्धेयम् अन्नाभावेफलमूलैस्तृप्तिरित्युक्तन्तत्रोपाय-विधिमाह॥

## मू० सहान्नेननरास्तर्पयन्ति॥ ५॥

फलमूलैरन्नेनसहनरा.पितॄंस्तर्पयेयुर्नकेवलैरित्यर्थः लटोलि-ङर्थत्वात् अन्नेनेतिहतीययैवसहार्थेलब्धेसहेति ग्रहणं विस्प-

ष्टार्थन्नाम्नस्याप्राधान्यार्थं अथमहयुक्तेप्रधानइतिपाणीनिस्मरण-विरोधादस्यस्यकथमप्राधान्येनेति उच्यते अविवक्षितत्वेनास्यदो-षपरिदूषितत्वात् तथाच विवक्षस्यहिशब्दस्यप्रधानङ्कारणन्नचा-स्तुसतेति नचाम्नमन्तरेणतृप्तौमूलफलादेःसामर्थ्याभिप्रायः प्रधा ननगुणसम्भावसम्भवोपत्तौ तस्याद्विस्पष्टार्थमेवसहेतुरुक्तं। सहा-न्नेनोत्तरास्तर्पयन्तीतिक्वचित्पाठस्तत्रोत्तरामूल फलादयस्तेनैवस-हतर्पयन्तितृप्तान्कुर्वन्तिनकेवलानित्यर्थः एवंनहिंस्यात्सर्वभूतानी-त्यहिंसाधर्मेणतृप्तिमभिधायेदानींहिंसाधर्मेणाह।

## मू० छागोस्रमेषानालभ्य ॥ ६ ॥

छागोर्वर्करःउस्रस्तूपरः सचशृंगहीनछागादि तथाचश्रुतिः स्तूपरोवाअविषाणइति मेषोमेढ्रः एतान्पितृउद्देशेनहत्वापचेदित्य-र्थः तथाचात्रिः मधुपर्केचसोमेचदैवेपित्र्येचकर्मणि अत्रैवपशवोहिं-स्यान्नान्यत्रेतिकथञ्चन स्कन्दसंवादेपि अर्थेदैवपितॄणांहियोहिन-स्तिपशून्द्विजः सयज्ञफलमाप्नोतितेचयान्तिपराङ्गतिम्। जावालो-पि हिनस्तियःपशून्स्वार्थमुद्दिश्यैवसपापभाक्। आज्ञापदेशतोहिं-सन्नपिस्वार्थेनदुष्यतीति अनेकआहुः। उस्रोवलीवर्दः तथाच म-होक्षंवामहाजंवाश्रोत्रियायोपकल्पयेदिति तदयुक्तम् महोक्षत्व-शब्देनतूपरस्योक्तत्वात् तथाचजावालः विषाणोद्भवकालेतुयोवि-षाणविवर्जितः तंमहोक्षंवदन्त्याद्यास्तूपरञ्चापिपावनमितिमहो-क्षःपक्षीवामहोक्षइतिप्रसिद्धः तथाचजातूकर्ण्यः किञ्चिल्लोहित-वर्णोहिदीर्घपुच्छोगुरुस्वरः ह्रस्वश्चोटित्वयःपक्षीसमहोक्षेतिपाठन-इति किञ्च वृषस्याभक्षत्वमुक्तम् तथाचेश्वरः साक्षाद्धर्मोवृषः-मोक्तोमन्मूर्त्तिर्ममवाहनः तंयदापिहियोहन्तितेनाहंस्कन्दताडितः

वृद्धदेवलोपि वेसरांश्चगजश्चांश्चव्रषभान्करिमाचलं रासभम्प्राश्यच-
भवेद्विट्कृमिर्वा भवेभवन्नति करिमाचल: शृगाल: । उक्त:शतवच्छि-
न्नामद्वत्यनो उक्त.शतबलादुक्तस्तूपरोच्चगभस्तिष्वित्यभिधानात् ।
तदपिन पश्वालम्भप्रकरणात् नहन्यान्मत्स्यसूकराविति निषेधात्
अतस्तोक्तशब्देनकलौच्छागमेषावेव पशुपञ्चकमध्येतयोरेव भक्ष्य-
त्वाद्वचनोक्तत्वाच्च तथाचश्रुति: पुरुषोश्वोगौरविरजोभवन्तेताव-
न्तोवैसर्वेपशवइति गोभिलसूत्रञ्च छागोक्तमेषाआलभ्याइति ।
ननुचछागमेषग्रहणेनैवतल्लब्धे: किमर्थमुस्रग्रहणं उच्यते विशेष-
विध्यर्थत्वादित्यदोष: । तथाच स्कन्दसम्वादे वार्ध्रीनसम्महाश
ल्कोलाहाजस्तुपरंघ्रुतमिति । ददद्यादेतद्भवेदत्तं मानन्त्यायतिला-
मधु अन्यच्च अनन्ताखड्गमांसेनलोहच्छागाच्च नूपरादिति । अत्र-
कश्चिन्नाध्यक्ृदाह । छागोस्रमेषानिति पुंस्त्वमविवक्षितं उपादीय-
मानत्वा त्पशुनायजेतेतिवत् सर्वासांपशुजातीनांमारणंभक्षण-
न्तथा । विधानेतुनदोषस्स्यादन्यथानरकंव्रजेदिति । अन्येत्वाहु:
पशुनायजेतेत्यत्रापिपुंस्त्वस्यैवविवक्षितत्वात् पुंव्यक्तिरेवध्यानस्त्री-
व्यक्तिरिति । अत्रानूचाना: प्रमाणम् ॥

## मू॰ क्रीतालब्ध्वावाऽस्वयम्मृतानाहृत्यपचेत् ७

वाशब्द:पशुवस्त्वाभावे अस्वयंमृतग्रहणम् । निषिद्धवर्जनोप-
लक्षणं तेनपश्वभावेविहित मृगपक्ष्यादिमांसानिक्रय लाभाभ्या-
माहृत्यपचेन्न निषिद्धमित्यर्थ:। विनामांसेनयच्छ्राद्धं कृतमप्यकृतंभ-
वेदिति । श्राद्धवैकल्यापत्ते: पद्मपुराणे विनामांसेनयच्छ्राद्धन्तन्न
तृप्तिकरम्भवेत् । क्रव्यादा: पितरोयस्मात्तस्मातेनैव तान्यजेदिति
अत्रैकअकारविश्लेषम बुध्वास्वयंमृतानपिपचेदित्याहु:। तदयुक्तं

तेषांनिषिद्धत्वात् तथास्मृतिः उच्छिष्टस्यघृतादानंस्वतमांसस्यभक्षणम् अंगुल्यादंतकाष्ठञ्चतुल्यंगोमांसभक्षणैः तथा शणशाकम्मृतस्मांसञ्चरिणमथितंदधिअंगुल्यादन्तघर्षंचतुल्यङ्गोमांसभक्षणैरिति महाभारतेपि विषच्छन्नहतञ्चैवव्याधितिर्यग्घतन्तथा नप्रशंसन्ति वैश्राद्धे यच्चशस्त्रविवर्जितम् विषच्छन्नारण्येपतितपलादौविषप्रक्षेपस्तेनहतं तिर्यग्घतंसंहाति रिक्तहकादिहतं तयोरभ्यनुज्ञानात्। तथाचसिंहव्याघ्रहतंचयत् इति प्रशस्तमितिशेषः अथवाश्राद्धेतस्यापिनिषेधोविधिर्नित्यभोजनविषयः एकमूलकत्वात् शस्त्रविवर्जितंस्वयंमृतं अनुपाकृतमांसानिसौनंवल्लूरमेवच स्मृतिलोकनिषिद्धांश्चमृगमीनाण्डजानपि सौनंहिंसास्थानभवम्। अनुपाकृतंसंस्कारहीनम् वल्लूरंशुष्कंवर्जयेदिति। पृष्टमांसंवृथामांसंवर्ज्यंमांसञ्चपुत्रक। नभक्षयन्तिसततम्प्रत्यक्षलवणानिचेति। मार्कण्डेयः। पृष्टमांसम्मरुइतिप्रसिद्धं तथाचवामनपुराणे पृष्टमांसाशिनोमूढास्तथैवक्रौञ्चजीवनः क्षिप्यंतेवृषभक्ष्येतेनरकेरजनीचरैरुक्त शेषमन्यतोज्ञेयम् ननुवाफलमूलैरौषधीभिर्वेत्यहिंसाधर्मेणाहरिमुत्वानन्तरंछागोश्वमेषानालभ्येति हिंसाविधायेदानीं क्रयलाभौसूत्रयतावाशब्देनहिंसानिषिद्धेति। तथाच कन्दमूलफलाभावेमांसान्याहुर्मनीषिणः पुण्यानिमुनिगीतानिलब्धानिच वधम्बिनेति। चतुर्विंशतिमते महाभारतेपि क्रीत्वास्वयम्वाप्युत्पाद्यपरोपहृतमेववा। देवान्पितृनर्च्चयित्वाखादन्मांसन्नदुष्यति एषउक्तोविधिर्ब्राह्मः। सर्वकामफलप्रदइति तस्माद्वाशब्देन हिंसान्निषिध्यक्रयलाभावेव सूत्रकाराभिमताविति। अत्रोच्यते यदुक्तं। हिंसानंतरंक्रयलाभौसूत्रयताहिंसानिषिद्धेति। तन्न पशुवन्धासम्भवेक्रयलाभयोरनुक्तत्वात् तथाचस्कन्दसम्वादे। मांसाभावेकृतेश्राद्धे ध्यायन्तेपितृ-

देवताः करिष्यतिसुतोलब्ध्वाश्राद्धं पश्चात्स्वामिषं । ददातिलब्ध्वामांसन्नतंशपन्तिरुषामुहुरिति मांसाभावेपश्वसंभवे । यत्वभिहितं कन्दमूलफलाभावइत्यनेन हिंसानिषिद्धेति तदप्ययुक्तं । कंदमूलफलाद्यभावेवधंविनेत्यहिंसाधर्मेण प्रतिपादकत्वान्नहिंसानिषिद्धेति । यच्चाभ्यधायिक्रीत्वास्वयंवाप्युत्पाद्येत्यादिनाब्राह्मविधिरिति तदपिमन्दमिति तस्याप्यमांसभुग्दाक्षिणात्यपरत्वेनतद्देशविषयत्वात् दृश्यतेच देशविषयात्याचारः तथाच बृहस्पतिः । उदुह्यतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः । मध्यदेशेचर्मकाराः शिल्पिनः खगवासिनःमत्स्यादाश्चनराः सर्वेगच्छान्तणारजस्वलाः । पर्वतमद्यपानार्यानैतेदण्डस्यचार्हकाइत्यादि पठन्तिच पृथिव्यास्त्रिषुभागेषुमांसभक्षण माचरेत् यत्तु बृहत्प्रचेतोवचनम् । नदेशानांनविप्राणांनयुगानांद्विजोत्तमाः । धर्म शास्त्रेषुवैभेदोदृश्यमांसभक्षणइति । तद्दक्षिणव्यतिरिक्तदेशविषमित्यविरोधः किञ्चयद्येवन्नामभविष्यतद्यग्नीषोमीयम्पशुमालभते छागोस्यमेषानालभ्येत्यादिविहितहिंसाप्रतिपादकानिवाक्यान्यनर्थकान्यभविष्यन्निति तस्मात्पशुवधासंभवेक्रीत्वालब्ध्वेति सूक्तमितिसिद्धं । इदानीं स्वगोरभ्रकिरिच्छागपर्यंतरूपतव्रिणाम् । मांसंविशाणशशयोरुरोश्चक्रमतः सुरान् धिनोतिचपितॄंश्चैवमांसान्पायसमेवचेत्यादिवचनविहितांतृप्तिमुपक्रमते ॥

## मू० मासद्वयन्तुमत्स्यैः ॥ ८ ॥

मत्स्याःपाठीनादयोविहिता ननिषिद्धाः तैर्द्विमासंतृप्तिरित्यर्थः । तथाचमनुः । द्वौमासौमत्स्यमांसेनेति तुशब्दोविशेषणार्थः तेनमत्स्यविशेषकालविशेषइत्यर्थः तथाचापस्तंबः शतवलेर्मत्स्यस्यमांसेना-

भक्ष्यात्तृप्तिरिति" यत्तु मत्स्यैश्चतुरोमासानिति पैठीनसिवचनन्तच्छ-
शल्कविषयम् । तथाचयम: । शशल्काश्चतुरोमासानिति । प्रीण-
यन्तीतिशेष: । ननुच मत्स्यांश्च कामतो जग्ध्वासोपवासस्त्र्यहंवसे
दिति प्रायश्चित्तस्योक्तत्वात् कथमेवमिति उच्यते तस्यनित्यभोज-
नविषयत्वाद्दैवपित्र्यनिवेदनविषयत्वाच्च तथाचागस्त्य: । कृतेयो-
हव्यकव्याभ्यांमत्स्यमांसंसमश्नुते लभतेपातकंसौसर्वमांसाशिनां-
व्रणाम् । कात्यवोपि । कालशाकञ्चमत्स्यांश्चपरमान्नन्तिलोदनं ।
अनिवेद्यनभुञ्जीतपितृणांदैवतै: सहेति एवंतर्ह्येकत: सर्वमांसा-
निमत्स्यमांसानिचैकत: एकत: सर्वपापानिब्रह्महत्यातथैकत: ।
तथा मत्स्याद: सर्वमांसाद: इत्यादिवचनद्वन्द्वन्निरर्थकमिति मैवं-
वोच: कार्त्तिकादिकालविशेषविषयत्वेनसामर्थ्यकत्वाद्दाक्षिणात्यादि-
देशेनिषेधकत्वाच्च । तथाचनारदीये नमात्स्यमश्नीयन्मांसंनकौर्म-
न्नान्यदेवहीतिकार्त्तिकादिवैष्णवकालइतिशेष: । मत्स्यादाश्चनरा:
सर्वइति मध्यदेशे बृहस्पतिनोक्तं । किञ्च एकतइत्यर्थान्तरम् । स-
र्वमांसानिभक्ष्यामांसा:येकत्रतथा भक्ष्यमत्स्यमांसानिचैकत्र तथा
पापानिसर्वैर्यज्ञा: एकत्रहत्याब्रह्मज्ञानंचैकत्रेति पापायज्ञादिक-
र्म्मेति शब्दरत्नावली हत्याश्चाज्ञमनेज्ञानइति चन्द्रगोमी एकत्रश
माद्दिसर्वमांसान्येकत्रमत्स्याएकत्रसर्वेयज्ञा एकत्रब्रह्मज्ञानमेकतस्तु-
लायांसमानमित्यर्थ: । तथाचप्रचेता: याभिस्तृप्तिः पितृणांस्यादजवा-
ध्रीनसादिभि: साभवेन्मत्स्यमांसेनदत्तेनश्राद्धकर्मणीति तस्माच्छ्र-
द्धेमत्स्यै: पितृन्सन्तर्प्यस्वयमपि भुञ्जीतेतिनिरवद्यम् । तथाचब्रह्म-
पुराणम् हव्यकव्यार्थतो विप्रान्भोजयित्वाविधानत: वैसारिणां-
स्तुभुञ्जानोनलिप्येतनसाद्द्विजइति । मत्स्यानाहयाज्ञवल्क्य: राजी-
वान्राजतुण्डांश्चसशल्कांश्चैवसर्वश: शङ्कोपि राजीवान्सिंहतु

गडांश्च सशल्कांश्च विशेषतः। पाठीनरोहितौ भक्ष्याविते मत्स्येष्वतिपावनाद्धति। राजीवाः पद्मवर्णाः सिंहतुण्डाः सिंहमुखाः सशल्काः शुक्त्याकारावयवयुक्ताः जातूकर्ण्योपि शशश्च मत्स्येष्वपिहि सिंहतुण्डक रोहिताः। चुद्रमत्स्येषु कङ्कोतिमेध्यो रोहितवन्मतइति निषिद्धमत्स्यानाहस एव। गोमत्स्यो गुच्छ मत्स्यश्च चर्मकाराह्वयस्तथा नैते द्विजातिभिर्भक्ष्यास्तथा चिलिचिमाभिधः। शृङ्गीन्न केचिदिच्छन्ति प्रशस्तान्हव्यकव्ययोः अयं विकल्पो नित्यभोजने व्यवस्थितः। प्रावुणकादौ तथा मत्स्यश्चिलिचिमो नाम नभक्ष्यो हि द्विजन्मनां चिलिचिमः सितगौरो नरवाङ्गसदृशः समुद्रज इत्यायुर्वेदः। नान्द्यावर्तालिमत्स्यइल्लिसद्द्वांग विकराटकग्राहि प्रभृतयः चुद्रमत्स्यश्चस्त्वत्यन्तरेतावदेवावगन्तव्याः॥

## मू० मासत्रयन्तुहारिणेन॥ ६॥

हरिणस्ताम्रमृगस्तन्मांसेन त्रिमासन्तृप्तिरित्यर्थः। एषः कृष्णमृगः प्रोक्तस्ताम्रो हरिण उच्यतेइति सुश्रुतत्वात्। कृष्णसारेणाभिकतृप्तेः तथो चोशनाः चतुरो मासान् कृष्णसारेणेति। यत्त्वष्टावैणेयेणेति पैठीनसिनोक्तम् अष्टावैणेयमांसेनेति च मनुना तत्तूपर कृष्णसारविषये भवतुमर्हति। तूपरस्य विशिष्टोक्तेः अन्यथोशनसा विरोधात्। तथाचोक्तम् स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथगिति। तुशब्दो विशेषार्थः तेन मृगविशेषे कालविशेष इत्यर्थः। तथा च मार्कण्डेयः करोति तृप्तिन्नववैकरौ मांसं न संशयः। रुरुः शम्बरः शरदि गलितशृङ्ग इत्यायुर्वेदः। मनुरपि रौरवेणनवैवतु यत्तु रुरुः प्रीणाति पञ्चवैइति यमोक्तं यच्च पञ्चरौरवेणेति। गोभिलसूत्रम् तदङ्गशाखं शृङ्गरुरुविषयं यत्पुनर्देवलेनोक्तम्। त्रीन्मासान् रुरुभि

मृगैरितितद्धरिणसदृशरुरुविषयम् । नचयथाशब्दविषयोविकल्पः शक्यतेवक्तुं गृहणाणामनेकत्त्वात्तद्विषयानुपलब्धेः । तस्माज्जीवविषयोविकल्पोभवितुमर्हति । मार्कण्डेयः पुष्णातिचतुरोमासाञ्छशस्य पिशितंपितॄनिति यत्तुदेवलेनोक्तम् शशैःषण्मासिकीतृप्तिरिति शशः प्रीणातिषण्मासानितिचयमेनतद्बृहच्छशविषयमिति अविरोधः अन्यथाविरोधाद्धर्मबाधापत्तेः । तथाचव्यासः धर्मंयोबाधतेधर्मोनसधर्मः कदाचन । अविरोधात्तुयोधर्मः सधर्मः सद्भिरुच्यते । तस्माद्विरोधेधर्मस्यनिश्चित्यगुरुलाघवं । तयोर्भूयस्तरं विद्वान्कुर्याद्धर्मविनिर्णयं तत्त्वेविप्रतिपन्नानां वाक्यानामितरेतरं । विरोधपरिहारोविनिर्णय स्तत्त्वदर्शिनइति । नचश्वापदजातेरनेकत्वादेवं नघटतइतिवाच्यम् । तथावामनः कदलीकन्दलीचीनश्चमूरुप्रियकावपि समुरुश्चेतिहरिणाअमी अजातयोनयः । कृष्णसाररुरुन्यंकुरं कुशम्बररोहिणाः गोकर्णपृषतैणस्य रोहिताश्चमरोमृगाः गन्धर्वःशरतोगामसृंगयोगवयः शशाइत्यादयो मृगेन्द्राद्याइति । एवमन्यत्रापि ॥

## मू॰ चतुरऽऔरभ्रेण ॥ १० ॥

पितॄणान्तृप्तिरित्यर्थः । तथाचमनुः अरसणोथचतुरइति उरभ्रआरण्यमेषः नवमेषमांसेनेति ग्राम्यस्यवक्ष्यमाणत्वात् । अन्येत्वाहुर्मेषएवेति । तदयुक्तम् श्रुतिविहितत्वात्पौनरुक्त्यदोषाच्च तथाचश्रुतिः । वरुणायारण्योमेषइति यत्तु मेषेणपञ्चमासानिति पैठीनसिनोक्तम् । तदारण्यरूपविषयं अत्रैतस्मिन्दिह्यते किंगवयमांसंभक्ष्यमभक्ष्यञ्चेति तत्रैकआहुः विहितत्वाद्भक्ष्यमिति तथायमः । गावयंरुद्रसम्मितात् एकादशमासांस्तृप्यन्तीतिशेषः मार्क-

षडेयोपि गवयस्यतुमांसेनतृप्तिःस्याद्दश मासिकीति तदप्युक्तम् श्रुतिविरुद्धत्वात् तथाचश्रुतिः। सयंपुरुषमालभन्तस किंपुरुषोभव द्यावश्वंगाश्चतौगौरश्चा गवयश्चाभवनांयम विमालभन्तसउष्ट्रो-भवद्यमजमालभन्त सशरभो भवत्तस्मादेतेषां पशूनां नाशितव्यम-पक्रान्तमेधाह्येतेपशवइति। श्रुतिस्मृतिविरोधेतु श्रुतिरेवबलीयसी-तिश्रुतेर्बलवत्त्वाच्च। नचश्रुतिविरुद्धस्मृतिरादरणीया तथाचचतु-र्विंशतिमतं स्मृतिर्वेदविरोधेन परित्याज्यायथाभवेत्। तथैवलौ-किकंशाक्यं स्मृतिबाधापरित्यजेदिति श्राद्धविषयत्वेन गवयस्यवि-धिरित्यन्ये। अत्रानूचानाःप्रमाणम्॥

## सू० पञ्चशाकुनेन॥ ११॥

शाकुनिर्भक्ष्यपक्षीतन्मांसेनेत्यर्थः। तथाचमनुः शकुनेनाथप-ञ्चैवइति। यत्तु शाकुनैश्चतुरोमासानिति देवलेनोक्तम् यच्चचतुरः शाकुनेनेतिचगोभिलेन तद्विहितप्रतिषिद्धहारीतादि पक्षिविषयं यच्चशकुनेनसप्तेति पैठीनसिनोक्तम् तदतिपवित्रकपिञ्जलादि पक्षिविषयं सोमपानोद्भवत्वेन पवित्र्यात्। तथाचश्रुतिः सयत्सो-मपानमासततः कपिंजलःसमभवदिति। जरत्कारुरपि गौरःक-पिंजलोमेध्यः ककपालाचवर्हिणइति। वर्हीनीलकण्ठः सुमेधाः किञ्चिल्लोहितवर्णेति दीर्घपुच्छोगुरुतरः। कृष्णचोटिस्तुयःपक्षीस-महाचेतिपावनइति चोटिश्चंचुः भक्ष्यानाह शङ्खः तित्तिरञ्च-मयूरञ्चलावकञ्चकपिंजलम् वार्ध्रीनसंवर्त्तकंचभक्ष्यानाहयमः सदा सदेतिश्राद्धादेरन्यत्रापि जावालः भक्ष्याःकपिंजलोनीलस्त्वा-टीवन्यपदायुधाः भक्ष्याविति नीलःकृष्णतित्तिरिः कपिंजलोगौ-रः वन्यपदायुधोवन्यकुक्कुटः वनेजलेभवो जलकुक्कुटइत्यन्ये तत्र

कलविङ्कं प्लवं हंसमिति मनुना प्लवशब्देन तस्य निषिद्धत्वात् चक्राङ्कं प्लवङ्कोकमिति शङ्खनिषेधाच्च भारद्वाज्या मांसेनेति कात्यायनोक्तेर्भरद्वाजो भक्ष्यः यत्तु न खादेत्तु भरद्वाजमिति सुमन्तुर्नोक्तस्तत्र भरद्वाजोन्य इत्यनु विषयः कोजिल्हियाइति प्रसिद्धः तथा च निघण्टुः वटीवटकदूतुरक्तो भरद्वाजोन्य इत्यनुटः वटङ्कोन्योहितो यस्तु खंजरीचित्रपुच्छकः इति सुमन्तुः भक्ष्यास्तु नीकण्ठः स्याद्धारीतो खावतित्तिरी हारीतो विहितप्रतिषिद्धः। कुक्कुटहारीतभक्षणे द्वादशरात्रमनाहार इति शङ्खप्रतिषेधात् अन्यस्तन्तिरब्धीऽयम् वर्ज्यानाह मनुः क्रव्यादः शकुनीन्सर्वांस्तथा ग्रामनिवासिनः अनिर्दिष्टांश्चैकशफांटिट्टिभञ्च विवर्जयेत्। कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम् सारसं रज्जुदालञ्च दात्यूहं शुकसारिका। प्रतुदाञ्जालपादांश्च कोयष्टिनखविष्किरान् निमज्जतश्च मत्स्यादान्सौलंवल्लूरमेव च। बकञ्चैव बलाकांश्च काकोलं खञ्जरीटकम्। मत्स्यादान्विड्वराहांश्च मत्स्यानेव च सर्वश इति। क्रव्यादो गृध्रादयः ग्रामवासिनः पारावतादयः अनिर्दिष्टभक्ष्यत्वेनाज्ञातः एकशफा अश्वादयः टिट्टिभो निष्ठुरशब्दभाषी टिटिहिरीति प्रसिद्धः कलविङ्को गृहचटकः प्लवो जलकुक्कुटः चक्राह्वः चक्रवाकः रज्जुदालो वृक्षकुक्कुटः दात्यूहः कालकण्ठः प्रतुदः श्येनः जालपादा जालाकारपादाः कोयष्टिः शिखरी नखविष्किराश्च कोरादयः निमज्जन्तो मत्स्यादा निमज्य मत्स्यदा काकोलो गिरिकाकः मत्स्यादा अनिमज्जन्तोपि अन्ये प्रसिद्धः देवलः उलूककुररश्येनगृध्रकुक्कुटवायसाः चकोरः कोकिलो रज्जुदालकश्चकमज्जको पारावतकपोतौ च न भक्ष्याः पक्षिणः स्मृताः। जरत्कारुः कारापिकान्कपोतञ्च स्तोतकं रक्ततुण्डकम् सकृप्रजं सारिकाञ्च कलविङ्कञ्च वर्जयेत् कारापिका शकुनशास्त्रो-

ता: स्रोतकश्चातक: रक्ततुण्ड:शुक: सकृत्प्रज:काक: लोमश:ग्रामकुक्कुट:। आतापीमांसानपिवर्जयेत् आतापीचिल्ल:वेदनिधि: काकारिपिङ्गलाक्रौञ्च: वकोटोटेद्दसारसौ चापभासौ भृङ्गराजञ्चान्द्रस्तुग्ध्वाव्रतञ्चरेत् काकारिरुलूक: पिङ्गलामुखूमरइतिप्रसिद्ध: वकोटोवक: चाषोनीलपक्षी स्वर्णपक्षीतिप्रसिद्ध: जग्ध्वाप्राश्य-चान्द्रञ्चान्द्रायणमित्यर्थ:। शङ्ख:हंसमद्गुञ्चकङ्काकङ्काकोलङ्ग-ञ्जरीटकम् मत्स्यादाश्चतथामत्स्यान्वलाकांशुकसारिके। चक्रवा-कम्प्लवङ्कोकम्मण्डुकम्भु जगङ्गपिम् मासमेकंव्रतङ्कुर्यादेतांश्चैवनभो-जयेत् मद्गुर्जलवायस: व्रतञ्चान्द्रायणम् मत्स्यव्यवस्थाप्रागुक्ता निषिद्धमत्स्याश्चात्रेत्यर्थ:। धौम्य: पारावतंरथांगञ्चमरालञ्चकु-लिङ्गकम् जग्ध्वाह्निकुक्कुरंग्राम्यंव्रतेनापिनशुध्यति रथांगश्चक्र-वाक: मरालोहंस: कुलिङ्गकोव्रतेनचान्द्रायणेनेत्यर्थ:अन्यत्स्मृति-ष्वोह्यम।

## मू॰ षट्छागेन ॥ ११ ॥

पितॄणांतृप्तिरित्यर्थ: तथाचमनु:। षण्मासञ्छागमांसेनेतिछा-गोमहोक्ष: वाध्रीनसादन्य: तद्विधेर्विशिष्टत्वात्। यत्तु। छागलं-सप्तवैमासानिति मार्कण्डेये नोक्तम् तदारण्यछागविषयम् तथा-चश्रुति:। सोमायकुलुङ्गआरण्योजइति। यच्चनचत्वारंत्र्यजेनत्वि-तिदेवलेनोक्तम् तद्वाध्रीनसव्यतिरिक्तपशुविषयं यत्पुनर्द्वादशमा-सांछागेनेति पैठीनसिनोक्तम् तत्तूपराजविषयम् तस्यातिपावन-त्वात् तथाचसमहोक्षोतिपावनइतिप्रागुक्तमित्यविरोध:।

## मू॰ सप्तकौर्मेण ॥ १२ ॥

कूर्म:कच्छप:तन्मांसेनेत्यर्थ: तथाचदेवल: कूर्म:स्यात्सप्तमासिकी

ति यमोपि कूर्मः प्रीणातिसप्ततिवति यत्तु शशकूर्मयोर्मांसेनमासैरे-
कादशभिस्त्विति मनुनोक्तम् तद्बृहत्कूर्मविषयमारण्यविषयमेवेत्य-
विरोधः यत्तु नखादेत्कूर्मसूकरावितिनिषेधस्तद्विषयमग्रेवच्याम:।

## सू० अष्टौवराहेण ॥ १३ ॥

वाराहआरण्यसूकरस्तन्मांसेनेत्यर्थः तथाचदेवलः अष्टौमा-
सान्वराहेणेति यत्तु दशमासांस्तुतृप्यन्तिवाराहमहिषामिषैरि-
तिमनुनोक्तम्। तन्मांसलवराहविषयं तस्यघृतसम्भूतत्वेनौचि-
त्यात् ।तथाचश्रुतिः अग्नौहवैदेवाघृतंकुम्भम्प्रवेशयांचक्रुस्ततोवरा-
हाःसम्बभूवुस्तस्माद्वराहं मेदुरोघृताद्धिसम्भूतइति यत्तु त्रयमासा-
च्छूकरामिषमितिमार्कण्डेयेनोक्तम् तदमांसलविषयम्भवितुमर्ह-
ति अन्यथाविरोधात् अत्रकेचिदाहुः। नखादेत्कूर्मसूकरावितिनि-
षेधाद्वराहकूर्ममांसन्नभक्ष्यमिति। तन्न। तस्यकार्त्तिकादिवैषा-
वकालविषयत्वाच्छूतवराहविषयत्वाद्वा तथाचनारदीये। का-
र्त्तिकेसूकरंमासंयस्तुभुंक्तेतिदुर्मतिः तद्भुक्तेजायतेपापोविष्टा-
शीग्रामसूकरः नमात्स्यंभक्षयेन्मांसन्नकौर्मंनान्यदेवहिइतितद्भु-
क्तौरौरवान्भुक्ता नेत्यनुवृत्तौ हारीतः पारावतपाण्डुसूकरसारि-
केतिउपमन्युरपि ग्राम्यश्वेतवराहौतुनभक्ष्यौद्विजपुङ्गवैरिति।

## सू० नवमेषमांसेन ॥ १४ ॥

मेषोग्राम्यभेदः तन्मांसेनेत्यर्थः। तथाचयमः मेषैः प्रीणातिवैन-
वेति यत्तु तृप्यत्येकादशाविकैरितिदेवलेनोक्तम्। यच्च तथैकादश-
मासंवाअरभ्नम्प्यितृप्तिमितिच मार्कण्डेयेनतत्तु परविषयम् अव-
विकारप्रत्ययेप्रकृतेतत्परिहारेणपुनर्मांसग्रहणम् मासविकारप्रा-
प्त्यर्थं तेनतद्विकाराद्यधिकालान्तरसाधितादेयाइत्यर्थः। तथा-

चस्कन्दसम्बारे अस्नेहाअपि गोधूमयवगोरसविक्रियाः तथा मांस-विकाराश्चदधिक्षीरगुडश्चचेति । भक्षयेदितिशेषः ।

## मू० दशमाहिषेण ॥ १५ ॥

तृप्तिरित्यर्थः तथाचदेवलः । दशमाहिषमांसेनेति । यत्त्वे-कादशमासान्महिषेणेतिपैठीनसिनोक्तन्तदारण्यविषयंतुपरविष-यं ग्राममहिषभक्षणञ्च देशविशेषेव्यवस्थितम् तथाचयमः । कासरो-हिगिरौमेध्याइति आहप्रजापतिरिति कासरोमहिषः । ननुचअ-भक्ष्याः पशुजातीनाङ्गोखरोष्ट्राः सकुञ्जराः सिंहव्याघ्रार्क्षशरभाः । सर्पाजगरकास्तथा शशमूषकमार्जारनकुलग्राम्यसूकराः सृगा-लऋषभद्वीपिगोलांगूलमर्कटाइति।तथा वार्दंमौर्दञ्चनारञ्चहारङ्का-रंचरासभं।कौंग लोमशिकम्मांस ञ्जग्ध्वाभवतिविट्कृमिः। वेशरो-ष्ट्रगज वाश्वऋषभान्करिमाचले रासभम्प्राश्यचभवेद्विट्कृमिर्वाभवे भवइतिदेवलव्याघ्रपा दन्वइदेवलादिवचनैरभक्ष्यमध्येमहिषानुक्तेः सार्वत्रिकमहिषभक्षणञ्जिन्नस्यादितिचेत् मैवंभाषीः गिरिमन्तरे-णतद्भक्षणमहादोषापत्तेः। तथा चभारद्वाजः । शल्लमूषकसर्पास्तुसै-रभंचगिरिंविना । जग्ध्वाद्विजानशुध्यन्तिप्रायश्चित्तशतैरिति । तस्माद्देशविशेषएवतद्भक्षणं व्यवस्थितमितिसूक्तम् वार्दंवार्षभंउ-र्द्रोजलपशुस्तस्य । जलमानुषइत्येके । नरश्चा नुषम् हारं हरिण-व्द्वाच्यानांसिंहाव्रकव्यक्षिभिकादीनां कारङ्कारिणां कौगोवन्यः श्वातस्य लोमशिकालोखरीतिप्रसिद्धा ।तस्य लोमकम् विटकृमि-विड्कृमिः। द्वीपीव्याघ्रविशेषः गोलांगूलोवानरविशेषः मर्क टइगृध्रश्वादिपञ्चनखोपलक्षणम् ।

## मू० एकादशपार्षतेन ॥ १६ ॥

पृषतश्चित्रमृगस्तन्मांसेनेत्यर्थः । तथाचगोभिलः एकादशपार्ष-

तेनेति। तत्रै तद्वक्तव्यम् पृषतशब्देनकिञ्चिद्गुणोवाच्यः किंवाचित्र
मृगजातिरिति तत्रयदि चित्रगुणोवाच्यःस्यात्तर्हिरुरुच्छागादीनामपि
पृषतः गुणेएकादशमासतृप्तिहेतुः स्यात्। ततश्चविहिताः सर्वेपि
पृषताः सन्तः एकादशमास तृप्तिहेतवइत्यर्थःस्यात्। अथपृषत-
शब्देनचित्रमृगजातिर्वाच्यं स्यात्तर्हितज्जातेर्दैववशात्कथञ्चिदपृ-
षतत्वे एकादशमासतृप्तिहेतुत्त्वं नस्यात् प्रत्युतविहितजातेः परि
त्यागश्चेत्यर्थःस्यात्।तस्मात्पृषतशब्दस्यकथङ्गतिरित्याक्षेपः इतुरच्य
तेव्याख्यानतोविशेषः प्रतिपत्तिरितिन्यायेनव्याख्यातचित्रमृगसंज्ञै
वैतरथ्यावर्त्तकत्वाच्चित्रमृगस्यैव तावन्मासतृप्तिहेतुनान्यस्येति
एवंसतिमृगशब्दस्या न्वेषणाच्छागादिवाचकत्वा भावात्पृषतत्वे
सत्यपिनतस्यान्वयोयुक्तः तस्माच्चित्रमृगेणैवताव न्मासतृप्तिरिति
सिद्धम्। ततश्चपञ्चतृप्यन्तिपार्षतैः पार्षतेनेहसप्तवैनवमासान्पार्ष
तेनएकादशपार्षतेनेति देवलमनुपैठीनसि कात्त्यायनवचनानां
विषयानुपलब्धेर्विकल्पाएव शक्यन्तेवक्तुंनविषयाः। अथवासर्वमृ
गजातिषुपृषतत्वं विशेषस्तेनैकादशेतिसर्वेभ्य स्तृप्तिराधिक्यमित्यर्थः
ततश्चैषंविषयः। पञ्चतृप्यन्तिपार्षतैरिति देवलवचनं हरिणसादृश्य
चित्ररुरुविषयं पार्षतेनेहसप्तवाइति मनुनोक्तंवङ्कुशाख शृङ्गचित्र
रुरुविषयं। नवमासान्पार्षतेनेति पैठीनसिनोक्तं वरचित्ररुरुविषयं
एकादशपार्षतेनेति चित्रतूपरविषयमित्यविरोधः अयमाशयः।या-
न्मासान्रुरुभिर्मृगैरिति त्रिमासतृप्तिविषयस्य रुरोःपृषतत्वेन पञ्च-
तृप्यन्तिपार्षतैरिति तृप्तिविशेषः रुरुःप्रीणातिपञ्चकैरिति पञ्च-
मासतृप्तिविषयस्यतु रुरोःपृषतत्वेन एकादशपार्षतेनेहसप्तवैइति
तृप्तिविशेषः। रौरवेणनवैर्वाल्विति नवमासतृप्तिविषयत्वेन एका-
दशपार्षतेनेतितृप्तिविशेषः। सर्वपृषतानान्तूपरत्वेसति अनन्ता-

तृप्तिरिति । अनन्ताखड्गमांसेन लोहछागाच्चतूपरादिति वच-
चनादेवंविषयविभागा हरिणमेषशराहमहिषशशानाम् पृषतत्वा-
संभवात् एवञ्चकल्पनागौरवमप्यविरुद्धं । प्रमाणकल्पनेदोषाभावात्
तथाचाङ्गिराः । प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः सीद-
न्तिहिप्रमाणानि प्रमाणैरव्यवस्थितैः भट्टोपि । प्रमाणवन्तिक-
ल्प्यानि सामान्यानिबहून्यपि अदृष्टशतभागोपि नकल्प्योनिः-
प्रमाणकइति ॥

## मू॰ सम्वत्सरन्तुगव्येनपयसा ॥ १७ ॥

गव्यग्रहणमितरव्युदासार्थं । तुशब्दोविशेषः इतरपयोनिषेधे
प्यारण्यमहिषीक्षीरंप्रशस्तमिति विशेषित्यर्थः । तथाचब्रह्मपुराणम्
आरण्यमहिषीक्षीरं शर्करासुंठिसंयुतं । मधुयुक्तन्तुहितं दद्या-
दमृतमेवच तदिति निषिद्धमाहयाज्ञवल्क्यः । सन्धिन्यनिर्दशाव-
त्सागोपयः परिवर्जयेत् । औष्ट्रमैकशफंस्त्रैणमारण्यक मथाविकं
सन्धिनीवृषाक्रान्ताकामुकी अनिर्दशाऽनतिक्रान्तदशाहा अव-
त्सावत्सरहितान्यवत्साच । स्त्रैणंस्त्रीभवं द्विस्तन्युपलक्षणमेतत् यच्च
सर्वासांद्विस्तनीनां क्षीरमभोज्यमजावर्जमिति शंखिनाजाक्षीरस्य
भक्ष्यत्वमुक्तम् तच्छाद्धेतरविषयं । कृष्णाजाऽज्यतसीतैलं पयश्चा-
जाविकादिकम् । महिषञ्चामरक्षीरं जलमल्पजलाशयादिति ।
स्कन्दसंवादोक्तत्वात् वर्ज्यमितिशेषः । महिषंग्राम्यं आरण्या-
नाञ्चसर्वेषां मृगाणांमहिषींविनेतिमनूक्तेः । गौतमोपि यमसू स्य-
न्दिनीनाञ्चेति पयोवर्जमितिशेषः । यमसूर्युग्मप्रसूः स्यन्दिनीस्र-
वत्य यस्तक्षीरमपेयं विवत्सायाः अन्यवत्सायाश्चेति बौधायनः ॥

## मू॰ पायसेनवा ॥ १८ ॥

पयसाशृतंपायसं पयोविकारश्च तेनवासंवत्सरंतृप्तिरित्यर्थः ।

तथाचविष्णुः संवत्सरन्तुपयसा तद्विकारेणवेति। अपिचमार्कण्डेयः संवत्सरन्तथागव्यम् पयःपायसमेववेति। आदित्यपुराणे विविधं-पायसन्दद्यादिति तथामांसविकाराश्च दधिक्षीरगुडश्चेतिवचनात् पयोविकाराः कूर्चिकाक्षीरवटकादयः॥

## मू० वार्ध्रीनसमांसेनद्वादशवर्षाणि॥१९॥

तृप्तिरितिशेषः वार्ध्रीनसस्त्रिविधः तथाचविष्णुधर्मोत्तरे। त्रिपिबन्त्विन्द्रियक्षीणम यूथस्याग्रहणन्तथा। रक्तवर्णन्तुराजेन्द्र छागम्बाद्धृर्ध्रीनसंविदुरिति मुखकर्णौजलपानेपतन्तौ जलन्त्रिपिब-इत्यर्थः। त्रिपिबन्त्विन्द्रियक्षीणम् श्वेतंवृद्धमजापतिम्। वार्ध्रीन सन्तुतंप्राहु र्याज्ञिकाःपितृकर्मणीत्यन्यत्र निगमोपि। कृष्णग्रीवो रक्तशिराः श्वेतपक्षोविहंगमः सवैवार्ध्रीनसःप्रोक्त इत्येषानैगमीश्रु-तिरिति। अत्रानूवानाःप्रमाणं रक्तवर्णोवार्ध्रीनसो ऽक्षयतृप्ति विषयोवेत्यविरोधः वार्ध्रीनसंमहाशल्को लोहाजस्तूपरोक्तं। आ-नन्त्यायभवेदत्रइति वचनात्। लोहामिषङ्कालशाकं मांसंवार्ध्री-नसस्यवेति याज्ञवल्क्यवचनाच्च। वार्ध्रीनसशब्देनात्रोच्चारणमना लोचितं। उष्ट्रोष्ट्रग्रीवान्वार्ध्रीनसस्तेमत्या अरण्यायस्मरोरुरुरौद्रः इतिश्रुतेस्तवर्गीयपाठात्। श्राद्धशिष्टस्यामांसस्यावश्य भक्षणत्वम-वगन्तव्यम्।तथाचविश्वामित्रः धर्मशास्त्रात्तुविज्ञाय भक्ष्यञ्चाभक्ष्य-मेववा प्रदायपितृदेवेभ्यो भुञ्जीतातिथिपूर्वकमिति। अत्रागप्राप्ते भोजनेभुञ्जीतेतिनियमार्थं। तथाचोपमन्युः मृगजाविचभक्ष्याणां मांसंशाकादिमेध्यवदिति। पवित्रताभिधानादिति॥

इति श्रीश्राद्धकाशिकायां सूत्रवृत्तौ तृप्तिकरणंसामान्यं समाप्तमिति॥

सप्तमीकण्डिकाचसमाप्ता॥

इत्थं ग्राम्यारण्यौषधिमूलफलै रनेकमत्स्यमांसैश्च तृप्तिमभिधाया-ऽधुनाक्षय्यतृप्तिं विवक्षुः सूत्रमारभते ।

**मू॰ अथाक्षय्यतृप्तिः ॥ १ ॥**

अथशब्दः प्रश्ने कार्त्स्न्ये वा अक्षय्यातृप्तिः कथङ्किं वाक्षय्यतृप्तिकरन्द्रव्यमिति प्रश्नमित्यर्थः कार्त्स्न्ये नाक्षय्यतृप्तिरुच्यतइतिवार्थः । अक्षय्योनन्तता तथाचमनुः कालशाकम्महाशल्कःखड्गोलोहामिषंमधु । आनंत्यायैवकल्प्यन्ते मुन्यन्नानिचसर्वशइति । प्रश्नोत्तरमाह ।

**मू॰ खड्गमांसंकालशाकँल्लो हच्छागमांसं ॥ २ ॥**

खड्गस्तू परःखड्गमृगस्तन्मांसंनिषिद्धएण्यादिव्यतिरिक्तम् । तथाचविष्णुः कालशाकंमहाशल्कोमांसंवाध्रीनसस्यच विषाणवर्जयेखड्गानासूयतांस्तुभक्षाहइति यत्तुखड्गमांसैनवयोदशमासानितिपैठीनसिनोक्तन्तत्सशृंगविषयम् लोहःसर्वलोहितच्छागः तथाचपैठीनसिः सर्वलोहच्छागेनानंत्यमिति लोहितशब्दोत्रावयववृत्तिः एवमादिद्रव्यमक्षय्यतृप्तिकरमिति पूर्वप्रश्नस्योत्तरमित्यर्थः । खड्गलोहितयोर्मध्येकालशाकोक्तिस्तत्तुल्यफलार्थः ।

**मू॰ मधुमहाशल्कः ॥ ३ ॥**

मधुमाक्षिकः महाशल्कोमत्स्यभेदः महसिनइतिमध्यदेशेप्रसिद्धः महाशल्कामहाकालिनोमत्स्याइतियमस्मृतिःब्रहन्निवलइतियस्यरूढिरितिहलायुधःटेकार्यादौप्रसिद्धइतिकल्पतरुःकंवत्राख्यइतिकश्चित् शल्ककोवेत्यन्ये एवमनेकविप्रतिपत्तौपुलस्त्योक्त एवाद-

त्तं व्यः एकशलकोर्द्ध चन्द्रश्चललाटेखड्गसंयुतःशुक्लवर्णस्तुमतस्यो-
हिमखाशलकःसउच्यते इति अत्र केचाहुः। कलौश्राद्धे मधुनिषि-
द्धमिति। तथाचश्राद्धे मांसन्तथामध्विति लिखितम्प्राक्। तन्नवि-
चारसहम् निबन्धकृद्भिर्निर्मूलप्रतिपादनादित्युक्तम्। कलौविधाय-
कवचनोपलब्धेश्च तथाचपैठीनसिः परमान्नं कालशाकम्मधुमांसं-
घृतम्पयः मुन्यन्नानितिलाविप्राःप्रकृत्याहविरष्टधा। शस्तान्यष्टौ-
तुसर्वेषुयुगेषुमुनिसत्तमाः पितॄणांदेवतानाञ्चदुर्लभानिकलौयुग-
इति। परमान्नम्पायसम्। देवलोपि दर्भास्तिलागजच्छायादौहित्रं
मधुसर्पिषी कुतपोनीलकण्ठ श्चपवित्राणीहपैतृके इहकलौ तथा
तुलसीमधुदर्भाश्चतिलाःसर्पिर्गामिषं एतन्मेध्यतमन्नित्यंसदा-
चाराश्चयेद्विजाइति सुमेधाअपि त्रिमांसंत्रिमधुश्राद्धंत्रिघृतम्प्रीति
भोजनम् विनासमलरङ्गामोव्योमालिङ्गनवन्नयमिति॥

## मू० वर्षासुमघाश्राद्धम्॥ ४॥

वर्षांतोमघानचत्रे श्राद्धमक्षय्यतृप्तिकृदितरार्थः एतच्चापिण्ड-
कं ज्येष्ठपुत्रिणाकर्त्तव्यं तथाचदेवीपुराणम् तत्रापिमहतीपूजाक-
र्त्तव्यापितृदैवते ऋक्षेपिण्डप्रदानन्तुज्येष्ठपुत्रीविवर्जयेदिति तथाम-
घायांपिण्डदानेनज्येष्टःपुत्रोविनश्यतीति अत्र केचाहुः ज्येष्ठःआ-
द्यगर्भोन्निवइति। तदयुक्तम्। तद्व्यतिरिक्तस्यापिज्येष्ठत्वात् तथा-
चशातातपः अनाद्यपुत्रोज्येष्ठोपिभ्रातापुत्रोनिगद्यतइति अत-
श्च ज्येष्ठपुत्ररहितेनमघायांसपिण्डमेवकर्त्तव्यमितिगम्यते महा-
फलत्वात् एतच्चमघान्वितदिनान्तरेनत्रयोदश्यांमघायांपिण्ड-
दानेनज्येष्टपुत्रोविनश्यति कनीयांस्तुत्रयोदश्यांचयाहाभ्युदयाद्दते
इतुभयथोगोपुत्रिमात्रस्यपिण्डनिषेधात् अत्रवाविभक्तभ्रातॄणांपौत्र

स्यचपुत्राभावे महाफलत्वात्पृथग्पृथगधिकारः । तथाचपैठीनसिः अत्रापिपितृगीतागाथा छागेनसर्वलोहेनवर्षासुच मघासुच पुत्रो-वायदिवापौत्रोयोनोददात्त्रयोदशीमिति तथात्रिभक्तावात्रिभक्ता-वाकुर्युःश्राद्धमदैवतम् । मघासुचततोन्यत्रनाधिकारः पृथग्विना अदैवतञ्चयाहैकोद्दिष्टं पृथपदमुभयत्रान्वेविभक्ताअविभक्तावादैवंम-घासुचश्राद्धंपृथक्कुर्युः ततोन्यत्रपृथग्विनानधिकारइत्यन्वयः अथ-वाततइतिसार्वविभक्तिस्तसिः । ततोविनादैवतंमघाश्राद्धञ्चविना-न्यत्रपृथङ्नाधिकारइत्यन्वयः उभयान्वयेपिच्चयाहमघाश्राद्धयोरे-वविभक्ताविभक्तयोः पृथक्पृथगधिकारोन्यत्रनकिंत्वविभक्ता नैवैकश्रा-द्धंकर्त्तव्यन्नपृथगित्यर्थः । तथाचप्रचेताः अर्वाक्संवत्सरात्सर्वेकुर्युः श्राद्धंसमेत्यवै । संवत्सरेव्यतीतेतुकुर्युःश्राद्धं पृथक्पृथक् । पठन्ति-च । एकादश्यामघामशोजेरष्टम्य विधिवत्क्रियां । कुर्युर्नैकैकशः श्राद्धमाब्दिकन्तुपृथक्पृथगिति किञ्च नवश्राद्धंसपिण्डत्वंश्राद्धा-न्यपिचषोडश । एकेनैवतुकार्याणिसविभक्तधनेष्वपि । अपिश-ब्दादविभक्तेष्वितिपरिगणनात् यत्तुविभक्तास्तुपृथक्कुर्युःप्रतिसंव-त्सरादिकम् एकेनैवाविभक्तेषुकृतेसर्वेषुतत्कृतम् यच्चभ्रातॄणाम-विभक्तानामेकोधर्मःप्रवर्त्तते विभागेसतिधर्मोपिभवेत्तेषांपृथक्पृ-थगितिवचनादविभक्तामत्र्यदेशादावेकमेव कुर्वन्तितदशक्तविषय-मित्यविरोधः । वर्षास्वितिचन्द्रमासाभिप्रायं ननुबर्षास्वित्यभिधा-नान्मासद्वयात्मकत्वात्तत्र्वैकमासेमघाश्राद्धमितिसन्देहः । मैवं । अपरपक्षेश्राद्धमितुपक्रमादित्यदोषः अतश्चापरपक्षमघायामिति तथाचवृद्धयाज्ञवल्क्यः । याम्यंवापैतृकंवापिपितृपक्षेविशेषतः तत्र सङ्कल्पनंकुर्यात्पितृणांपुष्टिदःसदेति ।

## मू० हस्तिच्छायायाञ्च ॥ ५ ॥

श्राद्धमक्षय्यकृदिति शेषः । साचात्र गजस्यैव छाया पूर्वं दिशि वर्त्तते सा मुख्या । तथाच विश्वामित्रः परमान्नन्तु यो दद्यात्पितॄणां मधुना सह छायायान्तु गजेन्द्रस्य पूर्वस्यान्दक्षिणामुख इति परिभाषिक्षी तु सा गजस्य छायेव छाया यस्याः सा गजच्छाया व्युत्पत्त्या गौणी । तथाच । नानावचनानि ब्राह्मादिषु सैंहिकेयो यदा सूर्यङ्ग्रसते पर्वसन्धिषु हस्तिच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् । प्रचेताः हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशीति तिथिर्वैश्रावणीया तु सा छाया कुञ्जरस्य तु तथा हंसे हस्तस्थिते यासा द्रादमा त्राख्याकरान्विता साज्ञेया कुञ्जरच्छाया इति बौधायनी स्मृतिः वायवीये वनस्पतिगते सोमे छायायां प्राङ्मुखी भवेत् गजच्छाया तु सा प्रोक्तेति चकारो रक्तवार्ध्रीनसादिद्रव्यसमुच्चयार्थः तथाचापस्तंबः खड्गोपस्तरणेन खड्गमांसेनैवा ऽनन्तकालांशतवलेर्मत्स्यस्य मांसेन वार्ध्रीनसस्य चेति खड्गोपस्तरणं खड्गासनं वार्ध्रीनसश्चारक्तः । तथाच मार्कण्डेयः । वार्ध्रीनसामिषं लोहं कालशाकन्तथा मधु । अनन्ताप्रयच्छन्ति तृप्तिं गौरसुतस्तथा । अष्टवर्षा विवाहिता गौरी तत्सुतो गौरः । महाभारते । वर्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् नवाकामेन दातव्यं तिलश्राद्धं । कथञ्चनेति वर्द्धमानतिलन्तिलबहुलम् स्कन्दसम्वादेपि कालशाकं महाशल्कालोहाजस्तूपरो घृतं आनंत्यायैव भवति तथा पैठीनरोहिताविति घृतं घृतबहुलं घृतेन भोजयेद्विप्रां न्घृतम्भूमौ समुत्सृजेदिति वायवीयवचनात् । भूमौ समुत्सृजेदिति । तथा पायस्पूरणीयं यथा घृतम्भु विपततीति घृतबहुलमित्यर्थः एवमक्षय्यतृप्तिकृत्द्रव्यमुक्त्वा तत्तृप्तिहेतून्पङ्क्तिपावनानाह ॥

## मू० मन्त्राध्यायिनःपूताः ॥ ६ ॥

पङ्क्तिपावना इति शेषः । मन्त्रशब्दः संहितावचन बहुवचनमेकद्वित्रियथापेक्षं ऋग्वेदाद्यनेकसंहितापेक्षंवा मन्त्राध्यायित्वमात्रे णैवकेवलम्पङ्क्तिपावनाएतेपूताइतिविशेषणं । तच्चौचित्यादुत्तरत्रापिसार्वत्रिकम् मनोवाक्कायकर्मभिः । शास्त्रोक्तकृत्यातिशयेननिषिद्धवर्जनेनचवाह्याभ्यन्तः शुद्धियुक्ताः पूताः इत्युच्यन्ते । अथवापूताः पञ्चविधाः । तथाचविष्णुः । तीर्थपूतोयज्ञपूतःपयःपूतः सत्तपूतोमन्त्रपूतइति उच्यते ॥

## मू० शाखाध्यायी ॥ ७ ॥

पूतः पङ्क्तिपावनइतिशेषः शाखाशब्दे मन्त्रब्राह्मणात्मकवेदापेक्षः । अंगानांवक्ष्यमाणत्वात् । तथाच शङ्खः यजुषांपारगोयश्चऋचांसाम्नाञ्चपारगः अथर्वशिरसोध्येताब्राह्मणाः पङ्क्तिपावना इति ।

## मू० षडङ्गवित् ॥ ८ ॥

षडंगोवेदस्तमर्थतः पाठतश्चयोवेत्तिसपूतस्ताद्दृशइतिशेषः अनूचानइत्यर्थः तथाचस्कन्दसंवादे अनूचानाः श्रोत्रियाश्चब्राह्मणाः पङ्क्तिपावनाइति शिक्षाकल्पोव्याकरणन्निरुक्तंज्योतिषांगतिः छन्दोविचितिरित्येतैः षडंगोवेदउच्यते । अत्रमन्त्राध्यायिनःप्रभृत्येतावत्पर्यंतगुणाधिक्योपक्रमादुत्तरोतरंप्राशस्त्यंसूचितम् । अत्रकश्चिदाह षडंगानितेषामेकंवापियोवेत्तिसएवेति । तन्नोचितं । वहुव्रीह्युपलब्धेः । अनूचानोक्तिपरित्यागप्रसक्तेश्च । एवंवेदाध्ययनेन पङ्क्तिपावनत्वमुक्त्वातदसंभवेप्याह ॥

## मू० ज्येष्ठसामगः ॥ ९ ॥

ज्येष्ठसामगशब्दोऽद्विधाविवेचितः तथाहि ज्येष्ठसामसंज्ञकंसाम-
त्रयंयोगायतिसतथा अथवा ज्येष्ठसामसंज्ञकंव्रतं तद्योगच्छत्याचरि-
तुञ्जानाति सज्येष्ठसामगः ज्ञानार्थस्यगमेर्डप्रत्ययः । ततश्चज्येष्ठसा
मत्रयंगायतायेनतद्व्रतंचीर्णं सज्येष्ठसामगस्तावन्मात्रेणैवपावनद्वत्यर्थः

## मू० गायत्रीसारमात्रोपि ॥ १० ॥

गायन्तन्त्रायतइति गायत्री ॥ सैवगायत्रीतांवेदसारत्वेनो-
पादायतज्जपादिमात्रपरोगायत्रीसारमात्रः । तथाचविष्णुः । गा-
यत्रीजपनिरतइतिअथवागायाः प्राणास्तांस्त्रायतेगायत्रीसैवगाय-
त्रीसारमात्रंसर्वमन्त्रभूतं यस्यनमन्त्रान्तरं सगायत्रीसारमात्रः ।
तथाचश्रुतिः । साहैषागयांऽस्तत्रप्राणा वैगयाः स्तत्प्राणांस्तत्र-
तत्सयत्, स्तस्मै तस्माद्गायत्रीनामेति । मनुरपि । गायत्रीमात्रसारोपि
वरंविप्रः सुयन्त्रितः नायन्त्रितस्त्रिवेदोपिसर्वाशी सर्वविक्रयीति ।
गायत्रीव्रतचारीति कश्चित् अपिशब्दादन्येपिशास्त्रोक्ताः तथाच-
यमः येसोमपाविरजसोधर्मज्ञाःशान्तबुद्धयः व्रतिनोनियमस्थाश्च-
तुकालाभिगामिनः अथर्वशिरसोऽध्येतासर्वेते पंक्तिपावनाइति ॥

## मू० पञ्चाग्निः ॥ ११ ॥

पूतस्त्वाहयद्यतिशेषः सभ्यावसथ्यौवेताचयस्यस्युःसपंचाग्नि-
होत्री अथवा पञ्चाग्नयोमनुष्येणपरिचर्य्याःप्रशस्ताः । मातापिता-
चाग्निरात्मागुरुः अभरतर्षभेतिमहाभारतोक्ताः पञ्चाग्निः पञ्चा-
ग्निर्ब्रह्मचारीतिकश्चित् । उपनिषत् पठ्यमानपञ्चाग्निविद्यावे-
त्त्यन्यः पञ्चाग्निरेकाग्नेरुपलक्षणम् तथाचमनुः त्रिणाचिकेत-
एकाग्निरिति ।

## मू॰ स्नातकः ॥ १२ ॥

व्याख्यातचरः इहपुनस्तद्गृहणञ्चांद्रायणादिव्रतचारिप्राप्त्यर्थम्। तथाचयमः। चांद्रायणादिव्रतचरःसत्यवादिपुराणवित्। निष्णातःसर्वविद्यासुशान्तोविगतकल्मषः। गुरुवेदाग्निपूजासुप्रसक्तोज्ञानतत्परः। विमुक्तःसर्वदाधीरोब्रह्मभूतोद्विजोत्तमः। अनन्मितोनचामितोमैत्रश्रात्माविदेवच। स्नातकोजपनिरतःसदापुष्पबलिप्रियःऋजुर्मृदुःक्षमादान्तःशान्तःसत्यव्रतःशुचिः विदज्ञःसर्वशास्त्रज्ञःउपवासपरायणः। गृहस्थोब्रह्मचारीचचतुर्वेदविदेवच वेदविद्याव्रतस्नातावाह्मणाः पंक्तिपावनाइति।

## मू॰ त्रिणाचिकेतः ॥ १३ ॥

पंक्तिपावनइतिशेषःश्रवाङ्गः। तउशन्हवैवाजश्रवसःसर्ववेदसन्ददावित्यादावनुवाकेचश्रुतौ पठ्यमानेत्रिणाचिकेतनाम्नोमुनिपुत्रस्यप्रश्नत्रयविषयउच्यतेइतिव्युत्पत्त्याचिनाचिकेतस्तत्पाठस्तदर्थो श्र्यांवाह्मणोपित्रिनाचिकेतइति। चिश्चितोनाचिकेतोग्निर्येनसइत्यन्यः। तन्नोचितम्। त्रिणाचिकेतशब्दस्ययौगिकस्यपरिभाषिकत्वाविवक्षितत्वात्। तथाहि कितज्ञानेधातुःव्रतातिशयेनतपोविशेषेणचहृणवत्सर्वमाचिकेतिजानातीतितृणाचिकेतः तथाच ब्रह्मपुराणम्। आचिकेतीतियोविश्वंतृणवत्सर्वनिस्पृहः तृणाचिकेतःसगृहीरागद्वेषविमत्सरइति पठन्तिच फलमूलदधिक्षीरगोमयांबुहुताशनः त्रिणाचिकेतउक्तोसौयोन्नं त्यजतिनित्यशइति। अथवा अध्वर्युर्वेदभागज्ञस्तद्व्रतीनियतोद्विजः चिणाचिकेतःसज्ञेयस्तद्योगात्पुरुषोपियइतिवाब्रह्मपुराणोक्तोवा।

(१) त्रिणाचिकेतोयजुर्वेदैकदेशस्तद्व्रतञ्चरन्सइतिकर्कः। गदाधरस्तु अध्वर्युर्वेदभागस्तद्व्रतंतदुभयंयोधीतेयश्चकरोतिसोपितद्योगात्त्रिणाचिकेतः॥

## मू ० त्रिमधुः ॥ १४ ॥

तादृशद्वतिशेषः त्रिमधुऋग्वेदैकदेशस्तद्व्रतञ्चतदाचरणेनतदध्यायीत्येके त्रिमधुरथर्ववेदव्रतन्तच्चारीत्यन्ये । अपरेन्यथोचुः त्रीणित्रीणिविशुद्धानिविद्यायोनिश्चकर्मच ॥ पुरुषत्रयविख्याता-स्त्रिमधुः परिकीर्तितइति ॥

## मू० त्रिसुपर्णी ॥ १५ ॥

पङ्क्तिपावनइतिशेषः । त्रिसुपर्णमृग्यजुषयोरेकदेशस्तद्व्रतञ्च तदाचरणेनतद्व्रताध्यायीत्रिसुपर्णीत्येके तैत्तिरीयशाखापठितस्य-ब्रह्मनेनुमात्यादिब्राह्मणास्त्रिसुपर्णं पठन्त्याआसहस्रात्पंक्तिंपुनं-तितेःसोमम्प्राप्नुवन्तितस्यानुशाकत्रयस्याध्येतो गृन्यतश्चाध्येतात्रिसु-पर्णीइत्यन्यथोचुः पितरः सप्तपूर्वेचयस्त्रानोभूरिदक्षिणाः । यस्ये-दृशोमातृवंशस्त्रिसुपर्णीतिसस्मृतइति ॥

## मू० द्रोणपाठकः ॥ १६ ॥

पूतस्तादृशइतिशेषः । द्रोणशब्दोऽवयवशक्तिः । धर्मद्रोण-इत्यर्थः । तथाचगोभिलसूत्रम् धर्मद्रोणपाठकइति धर्मद्रोणोधर्म-शास्त्रं । तथाचस्कन्दसम्बादे । पुराणस्मृतिवेत्तारः कृतव्याकरण-श्रमाः अनूचानाः श्रोत्रियाश्चब्राह्मणाः पंक्तिपावनाः यश्चोपि मन्त्रब्राह्मणविच्चैवयश्चस्याद्धर्मपाठकइति ॥

## मू० ब्राह्मोढापुत्रश्चेतिपंक्तिपावनाः ॥१७॥

ब्राह्मविवाहेनोढा ब्राह्मोढास्तत्पुत्रः पूतः पंक्तिपावनइत्यर्थः चकारोब्रह्मोढापत्यादिसमुच्चयार्थः तथाचशङ्खः । ब्रह्मदेयानुसं-तानोब्रह्मदेयाप्रदायकः । ब्रह्मदेयप्रतिश्चैवब्राह्मणाः पंक्तिपाव-नाइति । ब्रह्मदेया ब्रह्मविवाहेनदत्तातदनुसन्तानस्तत्सन्ततिः ।

इतिशब्दआद्यर्थेनसमाप्तौइत्याद्यन्यपौत्यर्थः। तथाचमनुः। वेदार्थवित्प्रवक्ताचब्रह्मचारीसहस्रदः शतायुश्चेतिविज्ञेयाब्राह्मणाः पंक्तिपावनाइत्यादि। ब्रह्मचार्यधीयानः जटिलश्चानधीयानमित्यनधीयानस्यतेनैवप्रतिषिद्धत्वात्। यमोपि। गृहस्थोब्रह्मचारीचचतुर्वेदविदेवचेति चतुर्वेदविदितिब्रह्मचारिविशेषणत्वात् सहस्रदोगवांसुवर्णस्यवा स्कन्दसंवादोपि अग्न्याःसर्वेषुदेवेषुसर्वप्रवचनेषुच। दानयज्ञतपः सत्यतीर्थपूताः कुलान्विताः श्रोत्रियान्वयजाश्चैवविज्ञेयाःपंक्तिपावनाइति

## मू०वागीश्वरीयाज्ञिकश्चपावनाः॥ १८॥

उच्यतेसर्वमनयेतिवाक्व्याकरणं ईश्वरशब्दः समर्थव्याख्यातृपरः यज्ञंवेत्तीतियाज्ञिकःक्रतूक्थादित्वाट्ठक् पुनःपावनग्रहणम्पंक्तिपावनेष्वपिपावनत्वज्ञापनार्थं तथाचोक्तं यश्चव्याकुरुतेवाचंयश्चमीमांसतेऽध्वरम्। उभौतौपुण्यकर्माणौपंक्तिपावनपावनाविति चकारोन्यद्व्रसमुच्चयार्थः तथाचवृहस्पतिः यदोकम्भोजयेच्छ्राद्धे छंदोगन्तत्रभोजयेत् ऋचोयजूंषिसामानित्रितयन्तत्रविद्यते अटेत्तुपृथिवींसर्वां सशैलवनकाननां यदिलभ्येतपित्रर्थेसाम्नामक्षरचिन्तकम् ऋचातुतृप्यतिपितायजुषातुपितामहः। पितुःपितामहसाम्नाछन्दोगेभ्योधिकोह्यतइति अक्षरचिन्तकः सामविभागज्ञः तथाचगोभिलः आमन्त्रितेजपेद्दोहान्ग्नि युक्तास्तृषभांजपेत् अतिषङ्गांश्च तत्रैवत्यक्ताश्रीयात्समंततः भुक्त्वाचम्यपदस्तोभांजपेत्तत्रसमाहितः गोसूक्तञ्चाश्वसूक्तञ्चचन्द्रसूक्तञ्चसामनी तरत्समस्यत्सामतच्चज्ञैःकधीर्वधः गांत्रासीनः शुचौदेशेवामदेव्यन्ततोजपेत् एवंसामभिराकृन्नोभुंजानस्तुद्विजोत्तमः श्राद्धभोजनदोषैश्चमहद्भिर्नोपलिप्यते। अन्यथे

वह्निभुञ्जानोहव्यकव्येषुमन्त्रवित् आत्मानमन्नदातृंश्चगमयत्यासुरीङ्गतिमिति। आज्यदोहंविदोहइत्याद्या आज्यदोहाःसुरूपक्षत्नुमुतयेधियासोममिन्द्रमन्दन्तुत्वा। स्वादोरित्थाविविषूवतइति अश्वान्तर्गदितासूत्पन्नानि सामानीत्यनुत्पन्नानि सामानिऋषभाःस्त्रियः पुराजितोयान्वसइति। असर्जिवक्कारथ्येयथाजाविति अमीनवतेअन्दुइति अश्वान्तर्गदितासूत्पन्नानि सामानिअनिषङ्गाःचत्वारः घर्तोदिवःपचते रथ्योत्तरसइत्यादि ऋत्सुत्पन्नानि सामानिपदस्तोमाः गोसूक्तानिसर्वसामगप्रसिद्धानि । अश्वसूक्तंप्रसिद्धं यदिन्द्राहं। यदाग्नमस्वांगोति भेदेनेन्द्रशुद्धे सामानी । एतोन्विन्द्रंस्तवामेत्यस्यासामद्वयंतरत्समन्दीधावतीत्येकम् । कयानश्चित्रआभुवेत्यादि वामदेव्यम् । एवंसामभिराच्छन्नोरक्षितः । श्राद्धभोजनदोषैर्नलिप्यते मन्त्रविदित्यर्थः ।

## मू० नियोज्याभावेप्येकंवेदविदम्पङ्क्तिमूर्द्धनिनियुञ्ज्यात् ॥ १६ ॥

नियोज्याः पूर्वोक्ताःस्मृत्युक्ताश्च तेषामभावप्राप्तौ एकम्वेदविदविदंवेदार्थज्ञमेव मुख्यपंक्त्यादौनियुंज्यादुपवेशयेत्। तेनैवेतरपंक्त्युपविष्टाअमुख्याः पूताभवन्तीत्यर्थः। अथवावेदविदंवेदपारगम् तल्लक्षणञ्च उत्पत्तिप्रलयौचैव भूतानामगतिङ्गतिम् वेत्तिविद्यामविद्याञ्चसभवेद्वेदपारगइति अपिशब्दोभावेनुकल्प विशेषसमुच्चयार्थः । तथाचापस्तंबः । ब्राह्मणान्भोजयेद्ब्रह्मविदो योनि गोत्रमन्त्रान्तेवासिसंबन्धीनिति योनिसंबन्धाः मातुलश्वशुरादयः । गोत्रसंबन्धाः सपिण्डसगोत्रादयः मन्त्रसंबन्धावेदमन्त्रादि अनुशिष्टाः । अन्तेवासिसंबन्धाः शिष्यानुशिष्यादयः एवंविधसंबन्ध रहितानभावेभो-

जयेदित्यर्थः । ननुचाभावोपिशिष्यानित्यत्रापि शब्देनानुकल्पसंगृहीतस्तत्कथं पुनरिहापिशब्देनानुकल्पे विशेषाभिधानमिति । उच्यते अनुकल्पेपिविशिष्ट विध्यर्थमित्यदोषः । तेनमातामहमातुलस्वस्त्रीयंश्वशुरंगुरुं दौहित्रं विट्पतिंबन्धुं ऋत्विग्याजौचभोजयेदित्यच मन्वादिवचनेद्वति विशेषेणबन्धुमातुलशिष्याणा मनुकल्प उक्तस्तत्रविशेषविधिः पुनरपिशब्देनगृहीतइत्यर्थः । तथाचपराशरः पञ्चभिःपुरुषैर्युक्ता अश्राद्धेयाश्चगोत्रिणः । षड्भ्यस्तुपरतः पुम्भ्यः श्राद्धे भोज्याःस्वगोत्रिणः । पञ्चभिर्युक्ताः पञ्चपुरुषपर्यन्तं अश्राद्धेया इत्यन्वयः । मातुलेतुस्कन्दसंवादः स्वसांहिमातुलसुतां यस्तामुद्वहतेद्विजः गुरुतल्पगएवासौ सचास्यात्पङ्क्तिदूषकः सचेतिमातुलः शिष्यस्त्वधनहारीति विशिष्टविधिरिति । श्वसुरस्वस्त्रीयादीनां गुणत्वविधिर्निर्गुणत्वे योनिसंबन्धत्वेननिषेधइत्यविरोधः । नियोज्याभावेवेदविदेकेनैव सिद्धिरित्यत्रहेतुमाह ॥

## मू० आसहस्रात्पङ्क्तिं पुनातीतिवचनात् ।२०॥

यतः सहस्रविप्रयुतांपङ्क्तिमेको वेदवित्पुनातीतिवचन न्तस्मादेकमपितावृशंपङ्क्ति मूर्द्धन्युपवेशयेदित्यर्थः वचनञ्चात्रभवति तेषामेकंपङ्क्तिमूर्धनियुक्तो वेदवित्सहस्रैरप्युपक्लृप्तां पङ्क्तिंपुनातीति । नित्यंयोगपरोविद्वान्समलोष्टा श्मकाञ्चनः । ध्यानशीलोयतिः शान्तोब्राह्मणः पङ्क्तिपावनइति । वर्ज्यानाहमनुः यस्तेनाःपतिताः क्लीबायेचनास्तिकवृत्तयः । तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् जटिलंवानधीयानन्दुर्बालम् कितवन्तथा । याजयन्तिचये पूगांस्तांश्चश्राद्धे नभोजयेत् । चिकित्सकान्देवलका न्मांसविक्रयिणस्तथा विपणेनचजीवन्तो वर्ज्याःस्युर्हव्यकव्ययोः । प्रेष्योग्रामस्यराज्ञा-

ष्णश्च कुनखीश्यावदन्तकः। प्रतिरोद्धागुरोश्चैव त्यक्ताग्निर्वार्द्धुषि-
स्तथा यक्ष्मीचपशुपालश्चपरिवेत्तानिराकृतिः ब्रह्मद्विट्परिवि-
त्तिश्चगणाभ्यंतरएवच कुशीलवोवकीर्णीच वृषलीपतिरेवचपौ-
नर्भवश्चकाणश्चयस्य चोपपतिर्गृहे भृतकाध्यापकश्चैवभृतका-
ध्यापितस्तथा। ब्राह्मैर्यौनैश्चसंबन्धैःसंयोगम्पतितैर्गतः आगार-
दाहीगरदःकुण्डाशीसोमविक्रयी। समुद्रयायीवन्दीचतैलिकःकू-
टकारकः पित्राविवदमानश्च(१)कितवोमद्यपस्तथा पापरोग्यभि-
शस्तश्चदांभिकोरसविक्रयी धनुःशराणांकर्त्तायचयश्चाग्रेदिधिषूप-
तिः मित्रध्रुग्द्यूतवृत्तिश्चपुत्राचार्यस्तथैवच भ्रामरीगण्डमालीच-
श्वित्र्यथोपिशुनस्तथा। उन्मत्तोंधश्चवर्ज्याःस्युःवेदनिन्दकएवच ह-
स्तिगोश्वोष्ट्रदमकोनक्षत्रैर्यश्चजीवति पक्षिणांपोषकोयश्चयुद्धाचा-
र्यस्तथैवच स्रोतसांभेदकश्चैवतेषांचावरणे रतः गृहसंवेशकोदूतो
वृक्षारोपकएवच। श्वक्रीडीश्येनजीवीचकन्यादूषकएवच हिंस्रो-
वृषलवृत्तिश्चगणानांचैवयाजकः आचारहीनःक्लीवश्चनित्ययाच-
नकस्तथा कृषीजीवीशिल्पजीवीसद्भिर्निन्दितएवच औरभ्रिकोमा-
हिषिकः परपूर्वापतिस्तथा प्रेतनिर्यातकश्चैववर्जनीयाःप्रयत्नतः।
एतान्विगर्हिताचारानश्राद्धे यान्नराधमान्। द्विजातिप्रवरोविद्वा-
नुभयत्रविवर्जयेदिति एषामर्थाः स्तेनोब्रह्मस्वान्यद्रव्यहारी तस्य-
पतितत्वेनोपादानात् नास्तिकानास्तिकधर्मफलमित्यभिमानि-
नस्तेभ्योर्थवृत्तिर्येषांते जटिलोब्रह्मचारीअनधीयानस्तद्विशेषणम्
अधीयानस्यश्राद्धे यत्नात् दुर्बलःखल्वाटकःकपिलकेशोवा दुश्च-
र्मतिकश्चत् कितवोद्यूतासक्ताः पूगयाजकागणयाजकाः चिकि-
त्सकाभिषजः देवलकाधनार्थंदेवार्चकाः देवार्चनपरोविप्रोवित्ता-
र्थीवत्सरत्रयम् असौदेवलकोनामहव्यकव्येषु गर्हितइतिवचनात्

(१) केकरइतिपाठान्तरम्॥

मांसविक्रयिणश्चापत्स्वपि विपणो न तज्जीवनस्तद्वृत्त्वेनैव निषेधसिद्धौ-
प्रेष्योधनार्थमादेशकारी प्रतिरोधाविरोधी त्यक्ताग्निर्विहितत्याग-
स्त्रिनैवोसयाग्नित्यागी वार्धुषिःद्रव्यवृध्युपजीवीयथासमर्घंधान्य-
मुद्धृत्यमहर्घंयःप्रयच्छति सर्वेवार्द्धुषिकोनामेति यज्ञीमयी पशु-
पालोनापदिवृत्त्यर्थः । परिवेत्ताऽकृतविवाहाधानेज्येष्ठेभ्रातरि-
कृतदाराग्निसंग्रहः निराकृतिरधीतनष्टवेदः अधीत्यविस्मृतवेदे-
भवेद्विप्रोनिराकृतिरिति देवलोक्तेः यस्त्वाधायाग्निमालस्याद्देवा-
दीन्नेभिरिष्टवान् निराकर्त्तामरादीनांसविज्ञेयोनिराकृतिरितिवा
ब्रह्मद्विट्ब्राह्मणद्वेषी नानाजातीयाअनियमकृतयोगणास्तन्मध्य-
वर्त्तीगणाभ्यन्तरः ग्रामीणइतिकश्चित् कुशीलवोनटवृत्तिः अव-
कीर्णीस्खलितब्रह्मचर्यः वृषल्यनेकविधातत्पतिः । तथाच संध्यासु-
वृषलीज्ञेयावृषलीमृतप्रजा चाण्डालीचरितायाचकुमारीयार-
जस्वलेति । स्कन्दसंवादोक्तेः यस्यगृहेभार्यायाः उपपतिर्जारः ।
वाग्दुष्टोनिष्ठुरः । पुनर्भूरनेकविधातत्पुत्रःपौनर्भवः भृतकोभृत्या-
परिक्रीतोध्यापकः तेनैवाध्यापितस्तच्छिष्यःगुरुश्चेतिशूद्रस्येत्यनुष-
ङ्गः अकारणमपातित्यक्तेमपित्रोर्गुरोश्चत्यागी ब्राह्मैरध्ययना-
ध्यापनैर्यौनैर्वैवाहिकैःसंबन्धैःपतितैःसावित्रपतितैर्व्रात्यैर्यःसंय-
गंगतःसविवक्षितः गरदोविषदोविप्रादन्येषांतस्यदानेमहापात-
कित्वेनसंग्रहात् कुण्डंवष्टिपलामितावत्परिमिताम्नभोजी जार-
जान्नभक्षीत्यन्यः । समुद्रयायीनौकया वन्दीस्तावमानः । केकरो-
ध्याङ्गदृष्टिरितियावत् । मद्यपोद्राक्षादिमद्यपः । पापरोगीकुष्ठा-
दिनिन्द्यरोगी । अभिशस्तोवाच्यमुक्तः । दाम्भिकः पाखण्डकूटध-
र्मधारी रसविक्रयीगुडलवणादिविक्रेता अग्रेदिधिषूपतिर्ज्येष्ठा-
यामनूढायांकनिष्ठोढातत्पतिरिति दूतवृत्तिजीवकः । पुत्राचार्यो-

चरपाठकः । पुत्राननुशिष्टइतिकश्चित् । भ्रामरीभ्रमरवदर्थार्जकः । अग्न्यागारीतिकश्चित् । गृहसंवेशकोवास्तुकिधर्मेवर्त्तमानः मूल्योगृहकारीत्यन्यः हस्तिगोऽश्वोष्ट्रदमकोदमनेनजीवनः नक्षत्रैर्ज्योतिषवृत्त्याजीवकः युद्धाचार्योयुद्धोपदेष्टातदुपायी स्रोतसांभेदकःस्रोतोनिरोद्धातेषामाचरणेरतः सेतुकृत् दूतोदूत्यवृत्तिः वृक्षारोपकः-इत्यर्थः श्वःक्रीडीश्वभिः क्रीडावान् कन्यादूषकोमूल्यादिनायोनिविदारकः वृषलपुत्रोवृषलएवपुत्रोऽस्यनान्यः क्लीबोधर्मोद्यमशून्यः षण्ढस्योक्तत्वात् सद्भिर्निन्दितोऽकारणेपिअथवाकृषिजीवीविशेषणं चीर्णव्रतागुणैर्युक्ताभवेयुर्येपिकर्षकाः सावित्रीघ्नाःक्रियावन्तस्तेराजन्नेनराधमाइति धार्मिककार्षकाभ्यनुज्ञानात् औरभ्रिकामेषपोषकः माहिषिकोमहिषीपालः व्यभिचारिणीपुत्रः महिषीत्युच्यतेभार्यासाचैवव्यभिचारिणी तस्यांयोजायतेगर्भःसवैमाहिषकःस्मृतइतिवचनात् परपूर्वाप्रागन्यस्मैदत्तातस्याःपतिःपरिणेताद्वितीयविवाहेनसंस्कृत्येत्यपौनरुक्तांपुनर्वा प्रेतनिर्यातकोमूल्येनप्रेतहारकः अपांक्तेयानित्येषांपंक्तावपिनभोक्तव्यमित्यर्थः उभयत्रेतिदैवेपित्र्ये यमोपि काणाःकुब्जाश्चषण्ढाश्चकृतघ्नागुरुतल्पगाः ब्रह्मघ्नाःसुरापाश्चस्तेनगोघ्नाचिकित्सकाः राष्ट्रकामास्तथोन्मत्ताः पशुविक्रयिणश्चये मानकूटास्तुलाकूटाःशिल्पिनोग्रामयाजकाः राजभृत्यान्धबधिरामूकखल्वाटपुंगवाः वाणिज्योमधुहर्तारोगरदावनदाहकाः समयानांचभेत्तारः प्रदानांयेनिवारकाः प्रव्रज्योपनिवृत्ताश्च वृथाप्रव्रजिताश्चये यश्चप्रव्रजिताज्जातःप्रव्रज्यावसितश्चयःसमुद्रयायीवांताशीकेशविक्रयिणश्चये अवकीर्णीचवीरघ्नागुरुघ्नःपितृदूषकः अस्यार्थः गुरुतल्पगः गुरुराजसुहृद्धृत्तमाधमजनस्त्रियःसुतास्वसमवीर्गच्छन् गुरुतल्पगउच्यते इत्येवंलक्षणः राष्ट्रकामान्नृप-

धर्माभिलाषकः मानकूटाधान्यादिमानपात्रवञ्चकाः मधुहर्त्तारो-
माक्षिकचोराः प्रव्रज्योपनिवृत्ताः संन्यासिनःवृथाप्रव्रजितः पुत्रा-
नतुत्पाद्यसंन्यासीप्रव्रज्यावसितोनवविधप्रत्यवसितोपलक्षकः वां-
ताशीभुक्तंवमित्वालालसयापुनर्भोजी केशविक्रयीचामरादिवि-
क्रेता वीरघ्नस्त्यक्ताग्निः पुत्रहाशाऽपाठयता। शासनाप्रदानाच्छ्रु-
तपुत्रस्यस्मृतिष्वदोषात् स्कन्दसंवादे। वर्जयेत्कुण्डगोलौतुना
स्तिकंरंगजीवनम्। जपहोमविरक्तञ्चशाकुनंराजसेवकम् चिकि-
त्सकञ्चगणकञ्चितवंहेतुवादिनम् वृथामिषपरित्यागिवृथापाकभु-
जौद्विजौ ब्राह्मणायेविकर्मस्थावैडालवृत्तिकाःशठाः रोगहीनाति-
रक्तांगाःक्रूरोधूर्त्तपुरोहितौ अनध्यायेष्वधीयानाः सूचकश्चनियाम-
कः स्त्रीजितश्चकदर्यश्चसुदूष्यश्चाहितुण्डिकः ग्रामयाजीशूद्रया-
जीवेदसोमोपजीवकइत्यादि। अस्यार्थः कुंडगोलौप्रसिद्धौ रंगजी-
वीवस्त्रादिरञ्जकः शाकुनःपक्ष्युपजीवी हेतुवादीतर्कबलेनसर्वत्रसं-
शयकृत् वृथेतिश्राद्धादौमांसत्यागी एवंपाकरुचिः विकर्मस्थोनि-
षिद्धकर्मा वैडालव्रतिकःपारिभाषिकः तथाचयस्यधर्मध्वजोनि-
त्यंसुरध्वजइवोच्छ्रितःप्रच्छन्नानिचपापानिवैडालंनामतद्व्रतं तदस्या-
स्तीतिवैडालव्रतीकोलोकदम्भकइत्यर्थः। तथाच। धर्मध्वजीसदा-
लुब्धःछद्मिकोलोकदंभिकः। वैडालव्रतिकोज्ञेयोहिंस्रः सर्वातिस-
न्धकइति शठोवञ्चकः। अनध्यायेष्वपूर्वपाठी सूचकोराजकर्णे-
जपः नियामकोविवादद्रष्टा कदर्यः परिभाषिकः यथा आत्मानं-
धर्मंकृत्यञ्च पुत्रदारांश्चपीडयेत्। लोभाद्यःपितरौभृत्या न्सकदर्य-
इतिस्मृतइति। सदूष्यःकुत्सिताचारः अहितुण्डिकःसर्पदन्तोत्पाटी
इतियाज्ञवल्क्योपि। सदासेवीचखल्वाटः कुप्रतिग्रहकारकः अज्ञात
कुलगोत्रोयोद्विजन्मः शिल्पिकर्मकृत्। अव्रतानामुपाध्यायः काण्ड-

पृष्टाश्चयेद्विजा: । अयतिर्मोक्षवादीच चतुर्थाश्रमवर्जित: कुणपायु-धजीवीच पुत्रप्रतिनिधिश्चय: । धर्माचारविहीनाये श्राद्धेष्वेतान्वि वर्जयेत् । अस्यार्थ: अव्रतानामुपाध्याय इत्यक्षरादिशिक्षक: काण्ड-पृष्ठा मातुलस्यसुतोद्वाही विप्रोथश्राद्धजीवक: । काण्डपृष्ठस्तुवि-ज्ञेय: श्राद्धेयस्मातिनामिषमित्युक्त: । तथा द्विजशाघनिकायेच पुत्रप्रतिनिधिस्तथा सर्वेतेह्यविशाप्रोक्ता: काण्डपृष्ठानराधमा: । हारीतोपि शूद्रापुत्रस्वदत्तश्चये तथाक्रीतकासुत: । सर्वेतेमनुना-प्रोक्ता: काण्डपृष्ठाद्विजाधमा इति अयतिर्गृहस्थोमोक्षवादी मुक्तिवादेरत: तथाचब्रह्माण्डे । श्राद्धार्हगुणयोगेपिनैतेजातुकथञ्चन निमन्त्रणीयाश्राद्धेषु सम्यक्फलमभीप्सतेति । श्राद्धार्हागुणावेदा-ध्ययनादय: । शेषंस्मृतिभ्योविज्ञेयमित्यलं प्रपञ्चेन ।

इ तिश्रीकृष्णमिश्रकृतौश्राद्धक ाण्डियांसूत्रवृत्तौ

अक्षयतृप्तिप्रकरणं समाप्तम् ॥

अष्टमी कण्डिका च समाप्ता।

इत्थंश्राद्धोपयोगि सर्वमभिधायइदानीं गृहस्थस्यकाम्य कर्मो चित्याक्छ्राद्धेषु काम्यकालानुपचिक्रंसु: सूत्रमारभते ॥

## मू० अथकाम्यानिभवन्ति ॥ १ ॥

श्राद्धानीतिशेष: तत्राथशब्द:कार्त्स्न्यार्थ: । नकेवलन्तिथयएव काम्यकाला:किन्त्वन्येपि स्मृत्युक्ताज्ञेयाइत्यर्थ: । तथाच संक्रान्तिवि षुवच्चैव विशेषेणायनद्वयं । व्यतीपातोजन्मऋक्षंचन्द्र सूर्यग्रहौतथा तिथिनक्षत्रवाराश्च उद्दिश्याभ्युदयन्तथा । एतांस्तुश्राद्धकालान्वैका-म्यानाह प्रजापतिरिति । संक्रान्तिविषुवायनादित्यनयो: पुण्या-तिशयेन विशेषोपादानात् । व्यतीपातस्त्रिविध: महाल्पनित्यभेदेन

तथाच सिंहस्थौगुरुभौमौच मेषस्थौचरविसितः । द्वादशीहस्तसंयुक्ताव्यतीपातौ महांस्तुसः अन्यस्तु । श्रवणाश्विधनिष्ठा र्द्रानागदैवतमस्तके यद्यमारविवारेणव्यतीपातः सउच्यते । इत्युक्तः नित्योनित्ययोगः अभ्युदयःशरीरोपचयादिः । अन्येपि स्मृत्यन्तरोक्तायोगाद्रष्टव्याः एतेषुश्राद्धविधानं स्मृत्यन्तरेभ्यउपलब्धव्यम् ग्रन्थगौरवभयान्नेहलिखितम् । ननुचाथशब्दोनस्मृत्युक्त कालस्यासंगृहीतत्वादत्र भाद्रप्रदीमारभ्यकिमिति श्राद्धं सूत्रकृताबुद्धिस्थ एवेत्यविरोधः । तस्मात्पौर्णमास्यामेवोपक्रमः श्राद्धषोडशकस्येतिप्रागुक्तम् । तथाच वायुपुराणे पुष्टिंप्रजांस्मृतिंमेधां पुत्रानैश्वर्यमेवच । कुर्वाणःपौर्णमास्यान्तुसम्पूर्णं फलमश्नुते । प्रतिपद्धनलाभायेत्युपक्रम्य अमायान्तुप्रयत्नेन श्राद्धङ्कुर्याच्छुचिःसदा । सर्वान्कामानवाप्नोति स्वर्गस्थानंसमश्नुतइति श्राद्धषोडशकम्प्रतीतं । प्रपञ्चितञ्चास्माभिरादि सूत्रइत्यलम्पौनरुक्त्येनेति । फलानितिथिष्वाह ॥

## मू० स्त्रियोऽप्रतिरूपाःप्रतिपदि ॥ २ ॥

श्राद्धकृल्लभतइतिशेषः । अप्रतिरूपाः अद्वितीयरूपाः स्त्रियोभार्याः एतच्चकामनान्तरोपलक्षणम् । तथाचमनुः कुर्वन्प्रतिपदि श्राद्धं सुरूपांलभतेसुतामिति । वायुपुराणेपि प्रतिपद्धन लाभायलब्धञ्चास्यननश्यतीति । कन्यामिति याज्ञवल्क्यइत्यादि अत्रैतच्चिन्त्यते । मृतपितृकोजीवन्मातामहः किंषट्पिण्डकंश्राद्धङ्कुर्यादुतत्रिपिण्डकमिति । अत्रैकेआहुः द्विपार्वणस्यविहितत्वाज्जीवन्मातामहमतिक्रम्यापिकुर्वीतेति । तथाचमनुः म्रियमाणेतुपितरि पूर्वेषामेवनिर्वपेत् । विप्रवद्वापितंश्राद्धे स्वकं पितरमाशयेत् पितायस्यनुवृत्तःस्याज्जीवेद्वापिपितामहः पितुः सनामसङ्कीर्त्य कीर्तये

ऽप्रपितामहं । पितामहोवातच्छ्राद्धम् भुञ्जीतेत्यब्रवीन्मनुरिति तदविचारितरमणीयं । अस्य गार्ह्यश्लोकद्वयस्य साग्नेरन्वाहार्या-दिनियतश्राद्धविषयत्वात् । तथाचनिगमः योवाजीवत्पितृणा-न्तंपिण्डस्थानइत्येके जीवतांवादेयमिति हिरण्यकेतुः । कस्मा-दप्रवृत्तविधित्वादङ्गाङ्गत्वादिति । नन्वेवञ्जीवत्पितृकस्य होमा-न्तमनारंभोवेति कात्यायनेनान्वाहार्यादिनिषेधात्कथमेवमिति सत्यम् कात्यायनेनोक्तेर्वाजसनेयि मात्रनिषेधविषयत्वा दित-रसाग्नीनांमनुवचने जीवदतिक्रम्यविहितत्वात् । किञ्चार्थान्त-रंसूत्रस्यवाजसनेयि मात्रस्यपितास्वांशेजीवति तदाहोमान्तमना-रंभोवाविकल्पितः । यदिचसंन्यासीपतितोवा जीवति तदावाज सनेयिनोपिजीवदतिक्रमः सूत्रकृतोभिप्रेतइति । तथाचकात्या-यनः ब्राह्मणादिहतेताते पतितेसङ्गवर्जिते । व्युत्क्रमाच्चमृतेदेयं येभ्यएवददात्यसाविति । किञ्च नजीवत्पितृकःकुर्याच्छ्राद्ध मग्नि-मृतेद्विजः येभ्यएवपितादद्यात्तेभ्योदद्याच्चसाग्निकइत्यनेनसाग्नि जीवत्पितृकस्यैवातिक्रमोविहितो ननिरग्नेरिति । अपिच दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकं नजीवत्पितृकःकुर्यात्तिलैः कृष्णैश्चत-र्पणमित्यादौपितृग्रहणम् जीवन्मातामहाद्युपलक्षणम्तेनापिजीव-न्मातामहस्यनिषेधः अन्यच्च । उद्वाहेपुत्रजननेइत्यत्रापिषड्ग्रहणे-नापरपाक्षिकन्नविहितम् । यत्तु जीवत्पितरिवैपुत्रः श्राद्धकालंवि-वर्जयेत् तेषांवापिपितादद्यात्तेषामेके प्रचक्षतेइतिहारीतोक्तिः यच्च पितुः पितृभ्योवाददात्सपितेत्यपरा श्रुतिरिति। कात्यायनादिभिरु क्तम् तत्सपिण्डीकरणविषयमाभ्युदयिकविषयंवा तथाच इन्दोतीर्थेच सन्यस्तेताते चपतितेसति । एभ्यएवपिताददातेभ्योददात्स्वयंसु-तःयत्पुनः पितरोयत्रपूजंत्यतेतत्रमातामहध्रुवम् अविशेषेणकर्तव्यं-

विशेषान्तरकंव्रजेत् यच्च पिण्डास्युः षडितिस्थितिरित्यादिवचनम् वृद्धमातामहश्राद्धविधायकं तन्मातृवर्गद्वयविषय मित्यविरोधः । तस्माज्जीवन्मातामहकर्तुः पितृवर्गोद्देशेनैव त्रिपिण्डकंश्राद्धमित्युचितं तथाचस्मृतिः। पितृवर्गेमातृवर्गे तथामातामहस्यच जीवेत्तुयदिवर्गाद्यौतद्वर्गंतु परित्यजेत् । चशब्दोमातामहीसंग्रहार्थः प्रजापतिरपि संक्रान्त्या बुपरागेचवर्षोत्सवमहालये । निर्वपेद्त्वपिण्डांस्त्रीनितिप्राह प्रजापतिरिति । अतएवप्राप्तैकवर्गे श्राद्धस्यवयोदश्यांनिषेधः । श्राद्धत्रैकस्यवर्गस्य त्रयोदश्यामुपक्रमेदिति एवमन्यपंक्तावपि। अत्रचजीवेत्तु यदिवर्गाद्याविव्यनेन वर्गाद्यावेवजीवतोनातिक्रमो नजीवत्पितामहा देरपीत्यर्थादुक्तम् । तेनमृतपितृकोजीवत्पितामहादिकमति क्रम्यापिदद्यादित्यर्थः। तस्मान्निरग्निजीवत्पितृकस्य सपिण्डनाभ्युदयिक श्राद्धयोरेवसाग्नेस्तु सर्वश्राद्धेषुजीवदतिक्रमेण श्राद्धंनेतरवेतिचतुरस्रम् ॥

## मू० द्वितीयायांस्त्रीजन्म ॥ २ ॥

श्राद्धकर्तुःस्यादितिशेषः स्त्रीजन्मेतिकन्याजन्मेत्यर्थः । तथाच मनुः कन्यकातुद्वितीयायामिति उपलक्षणञ्चैतत् । तथाचवायु पुराणम् द्वितीयायान्तुयःकुर्या द्विपदाधिपतिर्भवेत् । मार्कण्डेयोपि द्वितीयाहिप्रजाप्रदेति । कन्यावेदिनइति याज्ञवल्क्यइत्यादि कन्यावेदीजामाता । अत्रैतच्चिन्त्यते किमत्रपितामहादि तिथौपौत्रेण श्राद्धङ्कार्यमुतनेति। तत्रैकेधिकाराभावान्नेत्याहुः तदयुक्तम् विहितत्वात्। तथाचस्त्रपमात्स्ये नान्दीमुखानाम्प्रत्यब्दं कन्याराशिङ्गतेरवौ पौर्णमास्याञ्चकर्तव्यम् वाराहवचनंयथेति । नान्दीमुखाःपितामहादयः चकारादन्यतिथावपि । तथाचवृद्धयाज्ञवल्क्यः

कुरुपूर्णेन्दुपञ्चम्यांय: श्राद्धङ्कुरुतेनर:। कामिकन्तुवरंपुत्रं लभतेनात्रसंशय:। तथाच कांचन्तिपुत्रपौत्रेभ्य: पायसंमधुसंयुतम् तस्मात्चीं स्तत्रविधिनातर्पये त्पायसेनत्विति। पूर्णेन्दुप्रौष्ठपदी श्रयन्तुविशेष: पितृपूर्वमिति॥

## सू० अश्वास्तृतीयायाम्॥ ४॥

श्राद्धकर्त्तुरितिशेष:। उपलक्षणञ्चैतत् तथाचमनु:। तृतीयायांसंवन्धिनइति वायुपुराणेपि नरार्थिनांतृतीयाचशत्रुघ्नीपापनाशिनीति। अत्र तदुच्यते भरण्यादावत्रकिमपिण्डकस्यादुतनेति। तत्रनिषेधादपिण्डकमित्येके तन्न तिथिनिमित्तकत्वात् तथाच ऋक्षयोगादियुक्तेपितद्दिनेपिण्डपातनम्। तथा तिथिनक्षत्रयोगेषुप्राधान्यन्तुतिथेस्मृतं। तिथिमूलानिसर्वाणियथाद्दृश्येगुणादिकमिति। यत्तुभरण्यादौतन्निषेध: सनक्षत्रादिनिमितकविषय: प्रपञ्चितन्तदादिसूत्रे॥

## सू० चतुर्थ्यांक्षुद्रपशव:॥ ५॥

कर्तुस्युरितिशेष:। क्षुद्राअजादय:। उपलक्षणञ्चैतत्। तथाचवायु:। श्राद्धञ्चतुर्थ्यांकुर्वाण: शशिच्छिद्राणिपश्यतीत्यादि अत्र तच्चिन्त्यते किमत्रमातृतिथौमातृश्राद्धं पृथक्स्यादुतनेति। तत्रैकेआहु:। अन्वष्टकासुवृद्धौचगयायाञ्चक्षयेऽहनि। मातृश्राद्धं पृथक्कुर्यादन्यत्रपतिनासहेति महालयेगयाश्राद्धे वृद्धावन्वष्टकासुच नवदैवतमत्रस्याच्छेषंषाड्पौरुषं विदु: चतुर्विंशतिमतेपि। सर्वेभ्यश्चपितृभ्यश्चतत्पत्नीभ्यस्तथैवच पिण्डांस्तेभ्य:पृथग्दद्यात्सदाभाद्रपदेद्विजइति स्मृतिसमुच्चयेपि पृथक्श्राद्धं तुमातृणांप्रकर्त्तव्यं विचक्षणै:। नवम्यांपितृपक्षेतुवृद्धौतीर्थेमहालये स्मृतार्थसारेपि ततृमा-

तृश्राद्धम्पृथक्प्रशस्तमिति रेणुरपिमातुर्गयाष्टकाष्टद्धौस्मृताह्नि चम-हालये अत्रश्राद्धं पृथग्देयंतन्त्वं चानुगतापदीति अयंविशेषःमृतेपि-तरितमूर्ध्वं कजीवतितुमृतवर्गस्यैवेति पृथक्श्राद्धं जीवत्पितृकस्यने तोक्नेनवर्मविषयमितग्न्ये ।

## मू° पुत्राःपञ्चम्याम् ॥ ६ ॥

कर्त्तुःस्युरितिशेषः पुत्रशब्दःपुन्नामनरकम्नःपुत्रहेतुः पूर्णाति-थित्वात् । तथाचमनुः ।पञ्चम्यांशोभनान्सुतानिति उपलक्षणं चै-तत् तथाचवायुः पञ्चम्यांचैवकुर्वाणःप्राप्नोतिमहतींश्रियं मार्कंडे-योपि श्रियमाप्नोतिपञ्चम्यामिति अत्रैके मातुःक्षयाहेपार्वणं स्या-दितराहुः तथाचहृद्धयाज्ञवल्क्यःपितृपक्षेत्वमायांवापितृमातृक्षये-यदि पितुस्तुपार्वणंकुर्यादेकोद्दिष्टंतुमातृकं तथापितुस्तुपार्वणंकु-र्यादेकोद्दिष्टंतुमातृकम् तथापितुस्तुपार्वणंकुर्यात्प्रेत पक्षेमृतस्यतु पितृव्यभ्रातृमातॄणामेकोद्दिष्टंसदैवहि प्रेतपक्षेतिपित्र्यस्यपितुरेक-स्पार्वणम् मातृभ्रातृपितृव्याणामेकोद्दिष्टंसदैवहीत्यादिवचनैभाः तदयुक्तम् एकोद्दिष्टस्यसापत्नविषयत्वेनाविरोधात् तथाचपुराण-समुच्चये अमायाञ्चक्षयोयस्यप्रेतपक्षेतथाभवेत् निरग्निरपिकु-र्वीतमातापित्रोस्तुपार्वणम् अनग्निःपार्वणंयोनमातापित्रोःक्षयेह-नि करोतिवुद्धिमोहेनसभवेत्पितृघातकः जमदग्निरपि आपा-द्यसहपिण्डत्वमौरसोविधिवत्सुतः कुर्वीतदर्शवच्छ्राद्धंमातापित्रो-क्षयेहनि गौतमोपि आषाढ्याःपंचमेपक्षेप्रेताख्येतुक्षयोयदि पा-र्वणन्तत्कुर्वीतवर्जयित्वाचतुर्दशीम् हेमाद्रावपि सपिण्डीकरणादू-र्ध्वंपित्रोरेवहिपार्वणम् पितृव्यभ्रातृमातॄणामेकोद्दिष्टंसदैवहीत्य-लंबहुना ॥

## मू० षष्ठ्यांद्यूतर्द्धिः ॥ ७ ॥

कर्त्तुःस्यादितिशेषः क्षद्धिर्द्यूतविजयः उपलक्षणञ्चैतत्। तथाचवायुः षष्ठ्यांश्राद्धं तुकुर्वाणोद्विजास्तंपूजयन्तिहि मार्कण्डेयोपि षष्ठ्यांपूज्योभवेन्नरइति अत्रविशेषःपुराणसमुच्चयेपि एकमातृद्विपितृकौभ्रातरावन्यगोत्रजौ मातुःश्राद्धन्तुकुर्यातांषष्ठ्यांपुत्रावुभावपि स्मृतिसमुच्चयेपि देयंश्राद्धन्तुषष्ठ्यांतैर्येद्विरंशायनाःसुताः चेत्रिणश्चपितुश्चादौदद्युःपश्चात्तुवीजिनः अनेकमातृकस्यविशेषोगालवेनोक्तः अनेकामातरोयस्यश्राद्धेचापरपक्षिके। अर्घदानंपृथक्कुर्यात्पिण्डमेकंतुनिर्वपेदिति।

## मू० कृषिःसप्तम्याम् ॥ ८ ॥

कर्त्तुःस्यादितिशेषः उपलक्षणञ्चैतत् तथाचवायुः कुरुतेयस्तुसप्तम्यांश्राद्धानिसततन्नरः महामन्त्रमवाप्नोतिगणानांचाधिकोभवेत् मार्कण्डेयोपि गणाधिपत्यसप्तम्यामिति अत्रैतचिन्त्यते रजस्वलायांपत्न्यामत्रश्राद्धंकार्यंनवा। तत्रैकेआहुः नेति तथाच। श्राद्धीयाहनिसंप्राप्तेयस्यभार्यारजस्वला। श्राद्धन्तचनकर्त्तव्यं कर्त्तव्यम्पञ्चमेहनीति तन्न मृताहेअपुत्रपत्न्याःस्वयङ्कर्त्तृकनिषेधपरात् तथाचगौतमः नपुत्रातुयदाभार्यासंप्राप्तेभर्त्तुराब्दिके। रजस्वलाभवेत्सातुकुर्यात्तत्पञ्चमेहनीति।

## मू० वाणिज्यमष्टम्याम् ॥ ९ ॥

कर्त्तुःस्यादितिशेषः वाणिजशब्देनयथावणिजोऽनेकलाभःस्तथाष्टमीश्राद्धेनानेकफलमित्यर्थः तथाचवायुः संपूर्णांवृद्धिमाप्नोतियोष्टम्यांकुरुतेनरः मार्कण्डेयोपि अष्टम्यांवृद्धिमुत्तमामिति उपलक्षणंचैतत् तेनयाफलमपीत्यर्थः। तथाचब्रह्माण्डे आषाढ्याः

पंचमेपक्षे गयामध्याष्टमीस्मृता त्रयोदशीगजच्छायागयाहुल्यन्तु दै-
तृकमिति अत्रैतदुच्यते किमपरपक्षिकंश्राद्धं सूतकान्तेस्यादुतनेति
तत्रैकआहुः मासिकेऽब्दे तु सम्प्राप्तेऽन्तरामृतसूतके वदन्तिशुद्धौ-
तत्कार्यंदर्शेऽपिविचक्षणइत्यादि वचनान्मासिकाब्दिकयोरेवाशौ-
चान्तेविहितत्वादपरपाक्षिकस्तेन तदयुक्तम् अस्यापिविहित-
त्वात् तथाचपुराणसमुच्चये पक्षश्राद्धे समारब्धेसूतकन्निपतेद्यदि
समाहृताहिपितरः सूतकांतेविसर्जयेत् यदिनैवंनरः कुर्यात्सूतकां-
तेक्षमापनम् प्राग्दत्तानिमलुप्येणश्राद्धान्यसुरतृप्तये इति पक्ष-
श्राद्धं इत्यापरपक्षकोपलक्षणम् कृष्णस्य गोपि शुचीभूतेनदातव्यं-
यातिथिःप्रतिपद्यते सातिथिस्तस्यकर्त्तव्यानत्वन्यावैकदाचनेति।

## मू॰ एकशफन्नवम्याम् ॥ १० ॥

कर्तुःस्यादितिशेषः एकशफा अश्ववेसरादयस्तेषांद्वन्द्वमेकश-
फम् समूहेत्युपलक्षणं चैतत् तथाचवायुः श्राद्धं नवम्याङ्कर्त्तव्यमैश्व-
र्यंस्त्रीषुकांक्षतेति स्त्रियोनवम्यामाप्नोतीति मार्कण्डेयः अत्रैत-
त्सन्दिह्यते जीवत्पितृकःकिम्मातुः श्राद्धन्नवम्याङ्कुर्यादुतनेति तत्रै-
केआहुः अमाश्राद्धङ्गयाश्राद्धं श्राद्धं चापरपक्षिकम् नजीवत्पितृकः
कुर्यात्पितृहादुरपजायतइत्यादिवचनान्निरग्निर्नेति अन्ये त्वाहुः।
अन्वष्टक्यस्यविहितत्वात्कुर्वीतेति तदेतद्विचारणीयम् नजीवत्पि-
तृकशब्दे नकिम्मुख्यजीवत्पितृकमातृविव क्षयापरपाक्षिकश्राद्धस्यैव-
निषेधः आहोस्विज्जीवत्पितृकशब्देनजीवन्मातामहादुरपलक्षकेन
जीववर्गश्राद्धनिषेधः तत्रयदिजीवत्पितरिमुख्याधिकारिणोदाना-
भावाच्छ्राद्धमावस्यैवनिषेधइत्युच्यते तदाजीवेत्सयदिवर्गादौतद्व-
र्गंतुपरित्यजेदित्यस्यमृतवर्गश्राद्धविधायकस्यवैयर्थ्यंस्यादन्यत्रक्षया-

हेपिमातृश्राद्धस्याकरणप्रसङ्गश्चस्यात् अथचयाहत्वे नतत्कर्त्तव्य-न्तर्हिमृतवर्गविशायकवचनस्यवैयर्थ्यंतदवस्थमेव यदिजीवत्पितृक-शब्देनजीवद्वर्गश्राद्धनिषेधः इत्युच्यते तर्हिमृतमातृकेसदाचारप्रा-प्ताकरणस्यपरित्यागस्यादितितस्मात्कथमत्रसमाधिः उच्यते य-द्यपि धर्मंजिज्ञासमानानांप्रमाणम्परमंश्रुतिः द्वितीयंधर्मशास्त्रं-तुतृतीयंलोकसंग्रहइतिपराशरेणलोकसंग्रहस्यप्रमाणत्वमुक्तम् तथा-पिस्मृतिसदाचारयोर्बाधेश्रुतिविरोधं विनास्मृतिबाधस्यान्याय्यत्वं-स्मृतिविरुद्धाचारस्यबाधोन्याय्यइत्युक्तम् । तथाचचतुर्विंशतिमतम् स्मृतिर्वेदविरोधेनपरित्याज्यायथाभवेत् तथैवलौकिकंवाक्यंस्मृति-बाधात्परित्यजेत् । वसिष्ठोपि श्रुतिस्मृतिविहितोधर्मस्तदविरोधि-शिष्टाचारःप्रमाणमिति तस्मात्सर्वोपिजीवत्पितृकोमृतमातृवर्गंन-वमीश्राद्धेस्वीकुर्यादित्यर्थः तथावचनमपि अन्वष्टक्यांगयाप्राप्तौ-सत्यांयच्चमृतेहनि मातुःश्राद्धंसुतः कुर्यात्पितर्यपिचजीवति गया-प्राप्तःप्रासङ्गिकोनतूद्देशतः । ननुचैवमन्वादग्रादौसर्वत्रजीवत्पि-तृकःकुर्यादितिनचवाच्यम् अन्वष्टकादिकालत्रयस्यैवविशेषविधे-रितरत्रनिषेधसिद्धेः यत्वन्वष्टकासुनवभिःपिण्डैःश्राद्धमुदाहृतमि-तिनवदैवतमुक्तम् तत्साग्नेरन्वष्टकात्रयविषयम् जीवन्मातामहो-त्रिषयंवा नवभ्यांत्रिपिण्डकादिनिबोरकंवा अतश्चात्रविदेवत्यादि कंयथाधिकारङ्कर्त्तव्यमितिसिद्धं । अन्यथाजीवत्पितृकोऽवत्त्या-हादिकंकुर्यान्मृतमातृकोनवम्यांनेत्यनुचितापत्तेः एवमेकादशा-हादावपिनियतश्राद्धेष्वेवगन्तव्यमितिसर्वसमञ्जसं द्वादशदैवत्यं-वात्रप्रपञ्चितमस्माभिरादिसूत्रइतिनात्रपुनरुक्तम् । निमित्तबहुत्वे-त्वत्रप्रतिनिमित्तंश्राद्धानिकुर्यात् । तथाचकात्यायनः । देवहूनि-निमित्तानिजायेरन्नेकवासरे । नैमित्तिकानिकार्याणिनिमित्ता-

त्यत्यनुक्रमात्। यत्तु नैकःश्राद्धद्वयंकुर्यात्समानेह्नि कुत्रचिदितिप्रचेतसोक्तोनिषेधः सएकनिमित्ते नैवपुनःकरणविषयः। तथाचजाबालः। श्राद्धंकृत्वातुतत्रैवपुनःश्राद्धन्नतद्दिने नैमित्तिकन्तुकर्त्तव्यन्निमित्तानिक्रमेणत्विति।

## मू० दशम्यांगावः॥ ११॥

गावइतिद्विशफादुपलक्षणम्। तथाचमनुः दशम्यांद्विखुरंवहुः। वायुरपि। कुर्वन्दशम्यांतुनरोवा ह्मीँश्रियमवाप्नुयादिति अत्रगवांसर्वसम्पत्तिमूलत्वात्तदभिधानेन दशम्यांप्राशस्त्यं सूचितम्। तथाचपुराणसमुच्चयेप्रशस्ताः पूर्णिमामुख्यास्तिथयःषोडशैवताः। तासांश्रेष्ठतमाप्रोक्तादशमी श्राद्धदायिनामिति दशम्यांपूर्णकामतामिति मार्कण्डेयः गवांसम्पत्तिमूलत्वाच्छ्रुतिराह। गौर्वाइदं सर्वंबिभर्त्तीति दुग्धाज्यादिनादेवादितृप्तेरित्यर्थः तदुक्तं ह्यग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नन्ततःप्रजाइति। अत्रैतदुच्यते पार्वणैकोद्दिष्टयोरेकदिनसम्भवेकिम्पार्वणंपूर्वंकर्त्तव्यमुतैकोद्दिष्टमिति तत्रैकआहुः। यद्येकन्नभवेत्तावदेकोद्दिष्टन्तुपार्वणम्। पार्वणंत्वभिनिर्वर्त्त्य एकोद्दिष्टं समाचरेदिति जाबालोक्तत्वात्पूर्वंपार्वणमिति। तन्न। पाठादर्थस्यबलवत्वात् अतश्चैकोद्दिष्टं निर्वर्त्त्यपार्वणं समाचरेदितितत्रान्वयः। तथा वृद्धयाज्ञवल्क्यःएकाह्निकेसमुत्पन्ने पार्वणे चक्षयाह्निके प्राक्क्षयाहंप्रकुर्वीतपश्चात्पाकेनपार्वणम्। अन्यच्च दर्शक्षयाहश्रासन्नेकथंकुर्वंतियाज्ञिकाः। पूर्वंक्षयाहंनिर्वर्त्त्य पश्चाद्दर्शंसमाचरेत्। अथवापार्वणस्यपूर्वमुक्तिःपित्रोःपार्वणविषयः एकोद्दिष्टस्यपश्चादुक्तिःसपिण्डैकोद्दिष्टविषयेयुक्तमेव नचैकपाकेनश्राद्धद्वय-

माशङ्कनीयम् । एकपाकेनयःकुर्यादेकोद्दिष्टञ्चपार्वणम् सम-वेद्धाम्यबाराहोविष्टाग्नौसप्तजन्मखितितेनैवोक्तत्वात् ।

## सू० परिचारकाएकादश्याम् ॥ १२ ॥

भवन्तीतिशेषः परिचारकादास्यादुपजीविनः । उपलक्षणञ्चै-तत् तथाचमनुः । एकादश्यान्तथारूप्यं ब्रह्मवर्चस्विनः सुतानिति वायुरपि वेदांश्चैवाप्नुयात्सर्वान्विप्राणांसंपदन्तथा । एकादश्यांपरं स्थानमैश्वर्यंसन्ततिन्तथेति । अत्रैतच्चिन्त्यते अपुत्रादीनामेकोद्दि ष्टेतत्किन्तिथिनियमोस्ति वानवेति तत्रैकआहुः संबन्धिवान्धवा-दीनामकोद्दिष्टंमदैवहि । अपुत्रायेमृताकेचित्पुरुषावा स्त्रियोपिवा तेषामपिचदेयंस्यादेकोद्दिष्टंनपार्वणम् । सपिण्डीकरणादूर्ध्वंयत्र यत्रप्रदीयते । भ्रात्रेभगिन्यैपुत्रायस्वामिने मातुलायच मित्राय-गुरवेश्राद्धमेकोद्दिष्टं महालयइति कात्यायनापस्तंवादि वचना न्महालयेयत्रतत्रापीति। तदयुक्तं तिथिनियमस्योक्तत्वात् तथाचपु-राणसमुच्चये अपुत्राणाञ्च बन्धूनाम्ऋत्विगाचार्ययोर्गुरोः । एकोद्-दिष्टंसदाकार्यंपितृपक्षे विशेषतः । नपार्वणेऽधिकारोस्तियेषा ञ्चन्यागतेरवौ। एकादश्यांतुकृष्णायां तेषांश्राद्धंसमाचरेत् अन्यच्च एकादश्यांनकुर्वीत एकोद्दिष्टानिकृत्स्नशः । यस्माद्धिदैवतोविष्णुः पितृवर्गस्यनित्यशः । वृद्धशातातपोपि पितृस्वसृमातृस्व सुत्रादिपितृ व्यभ्रातृमातुलैः अनपत्यासुभार्यासु एकोद्दिष्टंसमाचरेत् । मातु-लोभागिनेयाश्चस्वस्त्रीयोभ्रातृजस्तथा । श्वशुरश्चगुरुश्चैव सखामा-तामहस्तथा एतेषाञ्चैवभार्याणांस्वसुर्मातुः पितुस्तथा । श्राद्धमात्र न्तुकर्तव्यमितिवेदविदांस्थितिरिति । भागिनेयःपितृव्यपुत्रोपुत्र-इत्यपौनरुक्त्यं मातामहःसपत्नमातृ पितासाग्नेरप्यत्रैकोद्दिष्टमेव ।

तथाचपुराणसमुच्चये अग्निमन्तोद्विजायोतु तेषांकन्यागतेरवौ । पितृव्यभ्रातृ वन्धूनामेकोद्दिष्टम्प्रशस्यतइति ॥

## मू० धनन्धान्यम्पुत्त्रपशून्रौप्यं हिरण्यन्द्वादश्याम् ॥ १३ ॥

कर्त्तुःस्यादितिशेषः धनंरजतादि । तथाचमनुः द्वादश्यांजातरूपन्तुरजतंरूप्यमेवचेति । उपलक्षणञ्चैतत् तथाचवायुः द्वादश्यां जनलाभञ्चराज्यमाहु र्वसूनिचेति । अत्रैतदुच्यते दैवशात्पित्रोः क्षयाहैक्येकथंक्रमइति । तत्रकार्ष्णाजिनिः पित्रोःश्राद्धे चसम्प्राप्तेनवे पर्य्युषितेपित्रा पितृपूर्वंसुतःकुर्या दन्यत्रासन्नियोगतः । अन्यत्रसपिण्डश्राद्धेषु आसत्तिःसंवन्धासत्तिःसंवन्धनैकटंग्रक्रमेण त्यर्थः।तथाचऋष्यशृङ्गःभवेदादिसपिण्डानान्तन्त्रेण अपराह्णन्तथा । संवन्धासत्तिमालोच्यतत्क्रमाच्छ्राद्धमाचरेदिति । ननुचापित्रोःक्षयाहैकिमेकपाकेनोत-पृथक्पाकेनश्राद्धद्वयमिति ।तत्रैके एककालेगतासूनां वहुनामथवा द्वयोरित्यादिना एकपाकेनेत्याहुः । तदयुक्तम् तस्यएककालविषयत्वात् अन्यदैकदिनेतुपृथग्विधिः । तथाचपठन्ति मातापितृमृता हैक्यंकालेनापिभवेद्यदि । पृथक्पाकंपितृश्राद्धं मातुश्चतदनन्तरमिति सपिण्डान्तुनृसिंहपुराणे । एकेनैवतुपाकेन सपिण्डानांमहालये तन्त्रेणश्रपणङ्कुर्य्याच्छ्राद्धं दद्यात्पृथक्पृथगिति । विष्णुधर्मोत्तरेच प्रेतपक्षेगयायाञ्च गतासूनांसमेहनि । तन्त्रेणश्रपणङ्कुर्याच्छ्राद्धन्दद्यात्पृथक्पृथगिति ॥

## मू० कुप्यंज्ञातिश्रेष्ठ्यञ्चत्रयोदश्याम् ॥ १४ ॥

कर्त्तुः स्यादिति कुप्यंहेमरजतेभ्योन्यधातुजम् । उपलक्षणञ्चैतत्

तथाचमार्कण्डेयः । प्रजांमेधाम्पशून्पुष्टिम् स्वातन्त्र्यंवृद्धिमुत्तमाम् दीर्घमायुरथैश्वर्यं कुर्वाणस्तुत्रयोदशीमिति । ननुचत्रयोदश्यांकृष्णा पक्षे यःश्राद्धङ्कुरुतेनरः । पञ्चत्वंतस्यजानीयाज्ज्येष्ठपुत्रस्य निश्चित-मिति अङ्गिरसाश्राद्धस्यैव प्रतिषिद्धत्वात्कथंफलश्रुतिरितिउच्यते तस्यैकवर्गश्राद्ध विषयत्वादित्यदोषः । तथाचकार्ष्णाजिनिः श्राद्धं-नैकस्यवर्गस्य त्रयोदश्यामुपक्रमेत् । अतृप्ताअस्ययेऽवस्युःप्रजांहिंसंति तत्रतद्धतिअत्रैतच्चिन्त्यत्ते । किमनुगमनमृतानां स्वमृताहेश्राद्धं स्यादुतभर्तृमृताहइति । तत्रकेचिदाहुः मासपक्षतिथिस्पृष्टे यस्मि-न्याम्रियतेहनि । प्रत्यब्दन्तत्तथाभूतंक्षयाहं तस्यतद्विदुरित्यादि वचनात्स्वमृताहएवेति।तदयुक्तम् भर्तृक्षयाहेविहितत्वात् तथाच पुराणसमुच्चये अग्रतःपृष्ठतोवापितद्भक्त्या म्रियतेतुया । तस्याः श्राद्धम्प्रदातव्यम्भर्तुरेवक्षयेहनि । रेणुरपि एकचित्यांसमारूढाद्वि-तीयेह्निपतिव्रता । तस्याःपिण्डोदकम्पुत्रः प्रकुर्यात्पितृवासरे । पठन्तिच प्रत्यक्षेवापरोक्षेवातद्भक्त्याम्रियतेतुयः । तस्याःश्राद्धम्प्रकु-र्वीत भर्तुरेवक्षयेहनि । अत्रैतत्सन्दिह्यते भर्तृक्षयाहेकिन्तस्यापृथ-क्पिण्डतैक पिण्डेद्वयोरुद्देशः । तत्रलौगाक्षिः मृतेहनिसमासेन पिण्डनिर्वपणम्पृथक् । नवश्राद्धन्तुदम्पत्योरन्वारोहणएवतु इत्यस्यार्थः । दम्पत्योरन्वारोहणेमृताहेसमासेनपिण्डनिर्वपणं नवश्राद्धम्पृथगित्य न्वयः नवश्राद्धंषोडशोपलक्षणम् । समासःपाकाद्यैक्यन्तुशब्दोविशेषः ततश्च दम्पत्योरेकचि तान्वारोहणे षोडशश्राद्धेष्वेवपृथक्पाकैः पिण्डौअन्यत्रपाकैक्येनैकपिण्डेद्वयोरुद्देशः मृततिथौभिन्नेत्वाब्दिक प्रेतश्राद्धयोः पृथक्पिण्डएवेति । निश्चितप्रेतदिनेत्येव शब्दार्थः । त-थाच एकचित्यांसमारूढौ दम्पतीनिधनंगतौ । पृथक्श्राद्धन्तयोः । कुर्यादोदनञ्चपृथक्पृथगिति तथा । एकचित्यधिरोहेच तिथिरेकै

वजायते एकपाकेनैकपिण्डेद्वयो र्गृहीतनामनीइति देशकालद्रव्य-
देवकर्त्तृ क्रेतान्विकोविधिरितिच । अत्रैके भर्तुःक्षयाहेसर्वासामेव
पृथक्पिण्डइत्याहुः । तन्न तस्यपतिव्रताविषयत्वात् तथाचभृगुः
यासमारोहणङ्कुर्याद्भर्तुः श्चित्यांपतिव्रता । तांमृताहनिसंप्राप्ते पृथक्
पिण्डेनियोजयेत् । प्रत्यब्दञ्चनवश्राद्धं युगपत्तुसमापयेत् । अपिच
पुराणसमुच्चये । याकाचिन्म्रियतेनारी पत्यासहपतिव्रता तस्याः
श्राद्धंपृथक्कुर्यादेकोद्दिष्टंविधानतः । विधानतइति युगपत्समा-
पयेदितिच । भर्तुःक्षयाहेपूर्वं भर्त्तुर्द्विजोपवेशनंपश्चात्स्त्रिया इत्ये-
वंक्रमेण कर्त्तव्यसर्वं श्राद्धमित्यर्थः । पतिव्रातत्वात् तथा अथकेचि-
न्नेच्छन्तिपृथक् श्राद्धन्तुयोषितां । वदन्तिपतिनासार्द्धंमूढास्तेमेम-
तेनतु सपिण्डीकरणादूर्ध्वं पृथक्कमविधीयते । नबालिशानांतेषां
वैग्राह्यंवाक्यमजानतां पृथक्श्राद्धञ्चमातॄणां कर्त्तव्यंवाप्रदक्षिण-
मिति । पठन्ति परदेशेमृतोभर्ताश्रुत्वानारीपतिव्रता तिथिरेकाधि-
शुद्धौस्यात्पिण्डन्दद्यात्पृथक्पृथगिति । अत्रविशेषः अनेकस्त्रीभिर-
नेकभृत्यैर्वास्वामिना सहस्नेहान्मरणे पाकैक्यं नैव स्वामिगोत्रेणैव
पृथक्पिण्डदानंकर्तव्यम् । तथाचपुराणसमुच्चये मृतानामथभृत्या-
नांभार्याणांपतिनासह । तन्त्रेणश्रपणङ्कृत्वा श्राद्धं स्वामिक्षयेहनि
श्राद्धम्पृथक्पृथक्कुर्या त्स्वामिगोत्रेणक्रमशः । स्वामिचित्यधिरोहे
णभृत्याःतस्यस्वगोत्रतइति । भृगुरपि एककालेगतासूनां बहूना-
मथवाद्वयोः तन्त्रेणश्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक् । पूर्वंकस्य
मृतस्यादौद्वितीयस्यततः पुनः । तृतीयस्यततःकुर्या त्सन्निपातेष्व-
यंक्रमः पूर्वंकस्यमृतस्येति ज्येष्ठानुक्रमेणलघूना मुत्तमाधमक्रमेणे-
त्यर्थः । यत्वेकचित्यांसमारूढाविति वचनेपृथक्पिण्डदानमुक्तम्
तदेकपतिव्रतस्त्रीविषयमित्यविरोधः । स्मृत्यर्थसारे सहदहनेतुपि-
ण्डश्राद्धादौ पाकैक्यङ्कालैक्यङ्कर्तव्यमिति ।

मू० युवानस्तत्र म्रियन्ते शस्त्रहता-
श्चतुर्द्दश्याम् ॥ १५ ॥

युवानो ये म्रियन्ते ते शस्त्रहताश्च तत्रापरपक्षे चतुर्द्दश्यामेकोद्दिष्टम्प्राप्नुवन्तीत्यर्थः । तथाच स्मृतिचन्द्रिकायां । चतुर्द्दश्यांतु यच्छ्राद्धं सपिण्डीकरणे कृते । एकोद्दिष्टविधानेन कुर्याच्छस्त्रेण घातिन इत्यादि । मार्कण्डेयोपि युवानः पितरो यस्य मृताः शस्त्रेण वा हताः तेन कार्यं चतुर्द्दश्यान्तेषाम्तृप्तिमभीप्सतेति । ननु चात्र शस्त्रहतस्यैव नान्यस्येति मिताक्षरादिनिबन्धकृद्भिर्नियमितत्वात्कथं युवान इत्युक्तम । तत्र च ह्य याज्ञवल्क्यः । श्राद्धदाने चतुर्द्दश्यां विना शस्त्रहतं मृतम् । ज्येष्ठपुत्रो विनश्येत पितृणाञ्चाप्यधोगतिरिति अतो युवान इति त्रयोदश्यां योजनीयमिति चेन्मैवम् युवशब्दस्य विशेषादिनादंशसर्पहताद्युपलक्षकत्वात् । तथाच वृद्धयाज्ञवल्क्यः । मृत्काष्ठोपललोहेषु विद्युद्व्यालविषादिभिः नखिदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्द्दशी जलादिषु बिपन्ना ये वन्हौ वा कारकाम्बिताः पक्षिसर्पविपन्ना ये तेषां शस्ता चतुर्दशी कण्ठपाशविपन्ना ये योगिनो चापमृत्युना लूतादृष्टिविपन्ना ये विप्रशापहताश्च ये शीतवातविपन्ना ये शस्त्रघातहतास्तथा पापमृत्युहता ये च तेषां शस्ता चतुर्दशी । अथवा युवानस्तत्र म्रियन्ते इति पाठस्तत्र यतस्त्रयोदश्यां श्राद्धं प्रशस्तम् तस्मात्तद्गृहे युवानो न म्रियन्त इत्यर्थस्त्रयोदश्यामेव । तथाच महाभारते जीतो नांतु नरश्रेष्टः कुर्याच्छ्राद्धं त्रयोदशीम् नावश्यन्तु युवानोस्य प्रमादायतनिग्रह इति शस्त्रहत इत्येकस्त्वन्त त्रैकपार्वणं सूचयति तेन पित्रादित्रये शस्त्रहते पार्वणमित्यर्थः अत्रै कश्चाहुः । त्रयाणामपि शस्त्रहतत्वे पृथक्पृथगेकोद्दिष्टमेवेति तदयुक्तम् । पार्वण-

स्यैवातिदेशात् तथाचस्मृतिदर्पणे एकस्मिन्वाद्वयोर्वापिविदूरच्छ-स्तेणवामृतौ एकोद्दिष्टंसुतःकुर्यात्त्रयाणांदर्शवद्भवेत् तथापित्रा-दयस्तयोयस्यशस्त्रघाताद्यनुक्रमात् ससुतःपार्वणंकुर्यात्पित्रादेर्न-पृथक्पृथगिति एकोद्दिष्टमितिशेषः स्मृतिचन्द्रिकायामपि । एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति त्रयाणांपार्वणमित्यर्थः अत्रै-कआहुः । रणेसंमुखप्रहारैर्हतशूराणामपिशस्त्रहतत्वाच्चतुर्द्दश्या-मेवेति । तदयुक्तम् । तेषांपरमगतित्त्वात् तथाचपुराणसमुच्च-ये वितत्यरणयज्ञंयेगोब्राह्मणहितैषिणः स्वामिपादाग्रसंलग्नायां-तिशस्त्रैश्चखण्डशः नतेशस्त्रहतैस्तुल्यापुराणज्ञैरुदाहृताः । नच-तिर्यङ्मायांतिप्रयांतिसुरमन्दिरम् । श्रूयतेचात्रगाथेयंभार्गवांगि-रसोर्मते द्वाविमौपुरुषौलोकेसूर्यमण्डलभेदिनौ परिव्राड्योगयुक्त-श्चरणेचाभिमुखोहतइति । यत्तु म्रियन्तेपितरश्चास्ययेशस्त्रै-श्चरणेहताइतिमनुनाचतुर्द्दश्यामुक्तम् । तत्पराङ्मुखहतादिवि-षयमित्यविरोधः । नचसंमुखपराङ्मुखादिशस्त्रहतयोःसाम्यसूचि-तम् तस्मात्संमुखरणहतानांचतुर्द्दश्यांश्राद्धन्नेति । अत्रान्येप्यपवा-दापुराणसमुच्चये मृताश्चान्याश्ववह्नशोत्रह्मचत्रिविशांस्त्रियः मृता-श्चपतिभिःसार्द्धंप्राप्तालोकंसनातनम् । नैताशस्त्रहतैस्तुल्याः प-श्चात्याःपतिनासह म्रियन्तेपतिभक्त्यातुद्यलोकंप्राप्नुवन्तिता नच-सन्यासिनांश्राद्धं कर्त्तव्यञ्चचतुर्दशी तपःसन्यासयोगेननतेयां-तिपरांगतिं येम्रियंत्यातुरत्वेनभृग्वग्न्यनशनांवुभिः नैत्रशस्त्रहता-स्तेपिअवस्थांतरगर्हिताः नशस्त्रहतिभिस्तुल्या आतुरत्वान्मृता-यतः एतषांनापमृत्युतंपुराणज्ञावदन्तिहि अत्यातुरत्वात्सन्यासे नाचश्रुतिविरोधनम् । यथात्रश्रूयतेगीतंपुराणज्ञैःपुरातनैः नवेदव चनात्तातनलोकवचनादपि । मतिरुत्क्रमणीजातेप्रयागेमरणंप्रति

एतद्व्यतिरिक्तोऽन्यश्चतुर्दश्यां श्राद्धकरणेतत्रैवोक्तः जन्मांधपंगुविकलावाग्जडालुवुब्बुकाः नकुर्वंतिचयेश्राद्धङ्कृष्णपक्षेचतुर्द्दशीम् ज्ञात्वाशस्त्रहतान्वंधूंस्तेम्रियन्तेचिरायुषः प्रयांतिपरमंघोरन्तेषामेवहिशस्यतद्इति नचैतेचतुर्द्दश्यामेवप्राप्नुवंतीतिवाच्यम् पितामःहाद्यत्ययप्राप्तेः तथाचतत्रैव अदत्वाषरमाषंप्राग्वै योददातिचतुर्द्दशीम् पितृहाचोच्यतेसद्भिरिहलोकेपरत्रच तस्माच्छ्राद्धम्पितॄणान्तुप्राक्पश्चाच्चचतुर्दशीम् दद्याच्छस्त्रहतेभ्यस्त्वइति प्राहपुरास्तुतिरितिच । चतुर्दश्याम्पूर्वमष्टम्यादौपश्चादमायामित्यर्थः । कात्यायनोपि शस्त्रादिभिर्हतस्यापि कुर्यात्प्रतिदिनंसुतः । पार्वणङ्कृष्णपक्षेतुवर्ज्जयित्वाचतुर्दशीम् उशनाः । यदिकालान्तरेवापियदाशस्त्राद्विपद्यते सोपिशस्त्रहतोज्ञेयः तस्यशस्ताचतुर्द्दशी इहन्मनुः महालयेचतुर्दश्यां मघायांपुत्रवानपि पिण्डनिर्वपणं कुर्यादास्यशस्त्रहतः पिता । तथा कृष्णपक्षेचतुर्द्दश्याम्मघासुतंदिनंयदि पिण्डनिर्वपणं कुर्यात्तृप्त्यर्थम् शस्त्रघातिनइति अत्रविशेषोवृद्धयाज्ञवल्क्येनोक्तः । शस्त्रमृत्युः पितायस्यशस्त्रघातिपितामहः । पार्वणन्तस्यविज्ञेयन्त्वयस्तेशस्त्रघातकः । यथाविहङ्गपक्षाभ्यामङ्गमाश्रित्यतिष्ठति तथापिताचवृद्धश्चपितामहसमाश्रिता वितितत्सदाचाराभावाच्चिन्त्यम् । यदात्वस्यामेवचतुर्द्दश्यांपित्रोः क्षयाहस्तदापिप्रेतपक्षमृतत्वात्पार्वणमेवेतिकेचित् तन्न आषाढ्याः पञ्चमेपक्षेप्रेताख्येतुक्षयोयदि । पार्वणन्तत्रकुर्वीतवर्जयित्वाचतुर्द्दशीमिति गौतमोक्तेः । साग्निविषयंपार्वणम्वेत्यविरोधः ॥

मू॰ अमावास्यायाᳬं सर्वमित्यमावास्यायाᳬंसर्वमिति ॥ १६ ॥

## * इति श्रीकात्यायनविरचितंश्राद्धसूत्रम् *

सर्वमितिसर्वेकामाः अस्याममावास्यायां श्राद्धकरणेनसर्वकामां ल्लभतइत्यर्थः। तथाचपुराणसमुच्चये श्राद्धङ्कुर्वन्नमावास्यांयत्नेनपुरुषः शुचिः सर्वान्कामानवाप्नोति तिथ्यान्तिथ्याम्मुदायुतइति। अस्या निरुक्तिस्तत्रैव। कलानामाप्यायनार्थंरविं विशतिचन्द्रमा सुषुम्नाख्याकलायासौसूर्यस्या नवमास्मृता। विशतिद्वौलवौतस्यांचन्द्रमाः सूर्यमण्डले। अमाञ्चन्द्रस्यसंयोगादमावास्यां विदुर्बुधाइति। अपरपक्षेश्राद्धासंभवेयमः। हंसेवर्षासुकन्यास्थेशाकेनापि गृहेवसन्। पञ्चम्योरन्तरेदद्यादुभयोरपिपक्षयोः। सुमन्तुः कन्याराशौमहाराज यावत्तिष्ठेद्विभावसुः। तावत्कालम्भवेद्देयं वृश्चिकंयावदागतम्। येयन्दीपान्विताराजन् ख्यातापञ्चदशीभुवि। तस्यांदियन्नचेद्दत्तं पितॄणाञ्चेन्महालयइति। अत्रशुक्लापञ्चमी तुलासंक्रान्तिदीपामावास्या वृश्चिकसंक्रान्तश्चेतिपूर्वं पूर्वासम्भवेउत्तरोत्तरा श्राद्धकालाः इत्यर्थः। द्विरुक्तिर्मङ्गलार्था इतिशब्दःसमाप्तौ अत्रैतच्चिन्त्यते। विधवैवकर्त्रीचेत्तदाकिमपरपक्षे श्राद्धन्त्रिपिण्डकंकुर्या दुतषट्पिण्डकमिति। तत्रैकआहुः स्वपित्रादिभ्योदातुमनधिकारा त्त्रिपिण्डकमेवेति। तदयुक्तम् त्वयाहश्राद्धं विनाषट्पिण्डकस्यापि विहितत्वात्। तथाच स्वभर्तृप्रभृतित्रिभ्यः पितृभ्यश्चतथैवच विधवाकारयेच्छ्राद्धम् यथाकालमतन्द्रितेति। षट्पिण्डकमित्यर्थः। कारयेदितिस्वार्थेणिच्। अधिकाराविषयोवा अपरआहुः मृता-

इश्राद्धमपिपत्नीकर्तृकं सर्व्वत्रपार्व्वणमेवेति । तथाचलौगाक्षिःस-र्व्वाभावेस्वयं पत्नीस्वभर्तॄणाममन्त्रकम् । सपिण्डीकरणङ्कुर्य्यात्सुतः पार्व्वणमेवचेति। सुमन्तुरपि अपुत्रेप्रस्थितेकर्त्तानास्तिचेच्छ्राद्धकर्म्मणि तत्रपत्न्यपिकुर्व्वीत सपिण्डम्पार्व्वणन्तथेति । तदप्ययुक्तं अनयो र्व्वचनयोःक्षयाहव्यति रिक्तविषयत्वाद्दर्शा परपक्षमृतिविषयत्वाद्वा तथाच भर्तुःश्राद्धक्षयानारीमौघ्या त्पार्व्वणमाचरेत्। नतेनाप्या-यतेभर्ताकृत्वाच नरकंव्रजेदिति । पार्व्वणनिषेधस्यक्षयाह विषय-त्वावगमात् । दर्शापरपक्षमृतौतुल्यन्यायत्वेन उचितत्वादित्यल मतिविस्तरेणे ति भद्रम् ॥

स्मृतेरनेकविषयात् अनन्तत्वाच्चसर्व्वथा । तत्वंज्ञातुमशक्यन्तद-लस्थानल्पजल्पितैः ॥१॥ स्वबुद्धिकल्पितन्नेह वचनंलिखितंमया । दृष्टंश्रुतममूलंवा समूलम् मेनदूषणम् ॥ २ ॥ दृष्टंयच्चाल्पदीर्घेषु निबन्धेषुचयद्धृतम्। श्रुतंस्मृत्यविरुद्धं यत्तत्पठन्तीत्युदाहृतम्। ३ ॥ प्रमाणमप्रमाणंवा सर्व्वज्ञः कर्तुमर्हति । दृष्टेश्रुतेचविश्वासो-मादृशैः कर्तुमिष्यते ॥ ४ ॥ कर्त्ताचेन्नचिरन्तनः किमियता दोषोनिबन्धेभवेत्। सूरिश्चेदधूना तनैरपिकृते ग्रन्थेकथन्नादरः॥ इत्थं ये कथयन्त्यनल्पमतय स्तान्प्रत्यदोषज्ञधीः चन्तां सन्तमिमन्नि बध्नमखिलं किंवा द्रीयन्तां हृदि ॥५॥ बाणव्योमेषुबिध्वङ्के १५०५ वर्षेकार्तिकमासके। कृष्णमिश्रोऽकृतग्रन्थं शुक्लपक्षद्दमंशुभम् ॥ ६ ॥

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रतनूजन्मनः
कृष्णमिश्रस्यकृतौ श्राद्धकाशिकायां सूत्रवृत्तौ
काम्य श्राद्धप्रकरणं समाप्तम्।

समाप्ताचेयं श्राद्धकाशिकासूत्रवृत्तिः ॥

अपरपक्षे श्राद्धङ्कुर्व्वीतोर्द्ध्वंवा चतुर्थ्याः यदहः सम्पद्येत तदहर्ब्रा-
ह्मणानामन्यपूर्वैर्दुरन्वीस्नातकानेकेयतीन्गृहस्थान्साधून्वा श्रोत्रि
यान्वृद्धाननवद्यान् स्वकर्मस्थानभावेपिशिष्यान्स्वाचारान्द्विर्नग्नशुक्ल-
विक्लिधः श्यावदन्तविद्धप्रजननव्याधितव्यङ्गिश्वित्रिकुष्टिकुनखी-
वर्ज्जमनिन्द्यानामन्त्रितोनापक्रामेदामन्त्रितोवान्यदन्नन्नप्रतिगृह्णी-
यात् स्नाताञ्छुचीनाचांतान्प्राङ्मुखानुपवेश्यदैवेयुग्मान्यथाशक्ति।
पित्राऽएकैकस्योदङ्मुखान्द्वौवादैवेत्रीन्पित्र्य ऽएकैकमुभयत्रवामा-
तामहानामप्येवन्तन्त्रंवावैश्वदेविकꣳश्रद्धान्वितः श्राद्धङ्कुर्वीतशाके-
नापिनापरपक्षमति क्रामेन्मासिमासिवोशनमिति श्रुतेस्तदहः शुचि
रक्रोधनोत्वरितोप्रमत्तः सत्यवादीस्यादध्वमैथुनश्रमस्वाध्यायान्वर्ज
येदावाहनादिवाग्यतऽओपस्पर्शनादामन्त्रिताश्चैवम् ॥१॥ दैवपूर्वं
ꣳश्राद्धम् पिण्डपितृयज्ञवदुपचारःपित्र्येद्विगुणास्तुदर्भाः पवित्रपाणि
र्दद्यादासीनः सर्वञ्चप्रश्नेषुपङ्क्तिमूर्द्धन्यंपृच्छतिसर्व्वान्वाऽसनेषुदर्भा
नास्तीर्य्यविश्वान्देवानावाहयिष्यऽइति पृच्छत्यावाहयेत्यनुज्ञातो वि
श्वेदेवासऽआगतेत्यनयावाह्या ऽवकीर्य्यविश्वेदेवाः शृणुतेममिति-
जपित्वापितॄनावाहयिष्यइति पृच्छत्यावाहयेत्यनुज्ञातउशन्तस्त्वे-
त्यनयावाह्यावकीर्य्यायन्तुनइति जपित्वायज्ञियवृक्षचमसेषुपवि-
त्रान्तर्हितेष्वेकैकस्मिन्नपऽआसिञ्चतिशन्नोदेवीरित्येकैकस्मिन्नेवयवा-
नावपतियवोसीत्येकै कस्मिन्नेवतिलानावपतितिलोसिसोमदेव-
त्योगोसवोदेवनिर्मितः प्रत्नमद्भिः पृक्तःस्वधयापितॄँल्लोकान्प्रीणा-
हिनः स्वाहेति सौवर्णराजतौदुम्बरखड्गमणिमयानांपात्राणाम-
न्यतमेषुयानिवाविद्यन्तेपलाशपत्रपुटेष्वेकैकस्मै कैकेनददातिसप
वित्रेषुहस्तेषुयादिव्या ऽआपः पयसासम्बभूवुर्याऽअन्तरिक्षाउतपा-
र्थिवीर्याहिरण्यवर्णायज्ञियास्तानऽआपः शिवाः सꣳ स्योनाः
सुहवाभवन्त्वित्यसावेषतेर्घइति प्रथमेपात्रे सꣳ स्रवान्समवनी-
यपितृभ्यः स्थानमसीतिन्युब्जं पात्रन्निदधात्यत्रगन्धपुष्पधूपदीपवा-

समास्वप्रदानम्। २॥ उद्धृत्यघृताक्तमन्नम् पृच्छत्यग्नौकरिष्यइति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वाहुतशेषंदत्वापात्रमालभ्य-जपतिपृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेअमृतेअमृतं जुहोमिस्वाहेतिवैष्णव्यर्चा यजुषावाङ्गुष्ठमन्नेवगाह्यापहताइति तिला-न्विकीर्योष्ण ॐ० श्विष्टमन्नन्ददाच्छक्त्यावाऽमृप्तेर्जपेद्व्याहृति। पूर्वाङ्गायत्री ॐ० मध्वातावा ९ सकृत्त्रिर्वारवोष्णीः पितृमन्त्रान्पु-रुषसूक्तमप्रतिरथमन्यानिच पवित्राणितृप्तान्ज्ञात्वान्नम्प्रकीर्य सकृ-त्सकृदपोदत्वापूर्ववद्गायत्रीञ्जपित्वामधुमतीर्मधुमध्वितिचतृप्ताःस्थेति पृच्छतितृप्ताःस्मइत्यनुज्ञातः शेषमन्नमनुज्ञाप्यसर्वमन्नमेकतोध्रृ-त्योच्छिष्टसमीपेदर्भेषुत्रींस्त्रीन्पिण्डानवनेज्यदद्यादाचान्तेष्वित्येके-आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्चदद्यादघोराः पितरः सन्तुसन्त्वित्युक्ते गोत्रन्नोवर्द्धतांवर्द्धतामित्युक्ते दातारोनोभिवर्द्ध-न्तांवेदाः सन्ततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयञ्चनोस्त्वित्या-शिषः प्रतिगृह्यस्वधावाचनीयान्सपवित्रान्कुशानास्तीर्यस्वधांवाच-यिष्यइति पृच्छतिवाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्योमातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तुस्वधेत्युच्यमानेस्वधावाचनीयेष्वपोनिषिञ्चत्यू-र्जंमित्युत्तानम्पात्रङ्कृत्वायथाशक्ति दक्षिणान्दद्याद्ब्राह्मणेभ्योविश्वे-देवाः प्रियन्तामितिदैवेवाचयित्वावाजेवाजेवतेति विसृज्यामा वाजस्येत्यनुव्रज्यप्रदक्षिणीकृत्योपविशेत्॥३॥ अथैकोद्दिष्टमेकोर्घएक-म्पवित्रमेकःपिण्डोनावाहनंनाग्नौकरणन्नात्रविश्वेदेवाः स्वदि-तमितितृप्तिप्रश्नः सुस्वदितमितीतरेब्रूयुरुपतिष्ठतामित्यक्षय्यस्था-नेऽभिरम्यतामितिविसर्गोभिरताःस्मइतीतरे॥ ४॥ ततः संवत्सरे पूर्णेत्रिपक्षेद्वादशाहेवा यदहर्वावृद्धिरापद्येतचत्वारिपात्राणिसति-लगन्धोदकानिपूरयित्वात्रीणिपितृणामेकम्प्रेतस्य प्रेतपात्रम्पितृ-पात्रेष्वासिञ्चतियेसमानाइतिद्वाभ्यामेतेनैव पिण्डोव्याख्यातोत-

ऊर्ध्वं ठं० संवत्सरे सम्वत्सरेप्रेतायान्नन्ददद्याद्यस्मिन्नहनिप्रेतः स्यात् । ५ । आभ्युदयिकेप्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जंजपऋजवोदर्भायवैस्तिलार्थाः सम्पन्नमितितृप्तिप्रश्नः सुसम्पन्नमितीतरे ब्रूयुर्दधि वदराक्षतमिश्राः पिण्डानांदीमुखान्पितृनावाहयिष्यइतिपृष्ट्वा कुर्व्यावाहयेत्यनुज्ञातोनांदीमुखाःपितरःप्रीयन्तामित्यक्षय्यस्थानेनांदीमुखान्पितृन् वाचयिष्यइतिपृच्छतिवाच्यतामित्यनुज्ञातोनांदीमुखाः पितरःपितामहाःप्रपितामहामातामहाप्रमातामहावृद्धप्रमातामहाश्चप्रीयन्तामितिनस्वधांप्रयुंजीतयुग्मानाशयेदत्र ॥ ६ ॥ अथतृप्तिर्ग्राम्याभिरोषधीभिर्मासंतृप्तिस्तदभावआरण्याभिर्मूलफलैरोषधीभिर्वासहान्नेनोत्तरास्तर्पयंति छागोस्रमेषानालभ्यक्रीत्वालब्ध्वावास्वयं मृतानाहृत्यपचेन्मासद्वयन्तुमत्स्यैर्मासत्रयन्तुहारिणेनचतुरऔरभ्रेणपञ्चशाकुनेनषट्छागेनसप्तकौर्मेणाष्टौवाराहेणनवमेषमा७सेनदशमाहिषेणैकादशपार्षतेनसंवत्सरन्तुगव्येनपयसापायसेनवावाद्ध्रीनसमा७सेनद्वादशवर्षाणि ।७।
अथाक्षय्यतृप्तिः खड्गमा७सङ्कालशाकंलोहछागमा७सम्मधुमहाशल्कीवर्षासुचमघाश्राद्धठं० हस्तिछायायांचमन्त्राध्यायिनःपूताशाखाध्यायिषडङ्गविज्ज्येष्ठसामगोगायत्रीसारमात्रोपिपञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णीद्रोणपाठकोब्राह्मोढापुत्रश्चेतिपंक्तिपावनावागीश्वरो याज्ञिकश्चनियोज्यावभावेप्येकैकंवेदविदम्पंक्तिमूर्द्धनिनियुंज्यादासहस्रात्पंक्तिम्पुनातीतिवचनात् ॥ ८ ॥ अथकाम्यानिभवन्ति स्त्रियोप्रतिरूपाःप्रतिपद्द्वितीयाया७स्त्रीजन्मा५श्वास्तृतीयायांचतुर्थ्यांक्षुद्रपशवःपुत्राःपञ्चम्यांद्युतर्द्धिःषष्ठ्याङ्कृषिःसप्तम्यांवाणिज्यमष्टम्यामेकशफन्नवम्यांदशम्याङ्गावः परिचारकाण्यएकादश्यम्धनंधान्यंद्वादश्यांपुत्रपशून्रौप्य हिरण्यंकुप्यंज्ञातिश्रैष्ठ्यत्रयोदश्यांयुवानस्तत्रम्रियन्तेशस्त्रहतस्यचतुर्दश्याममावास्याया७ सर्वमित्यमावास्या७सर्वमिति ।। ९ ॥

इतिश्राद्धकल्पसूत्रङ्कात्यायनाचार्यकृतम्परिशिष्टं समाप्तम् ।

## अथ पार्वण श्राद्धस्या नुक्रमणिका ॥

सेकःप्रतिज्ञागायत्रीदेवताभ्यस्तथासनम् आवाहनार्घदाना-
निगन्धादीनांसमर्पणम् ॥ १ ॥ मण्डलान्याज्ञताद्वैपाद्यन्नंभूस्वा-
मिनेतथा परिवेषोमधूत्सर्गापावालम्भोन्नदानकम् ॥ २ ॥ अन्न-
हीनंचगायत्रीमधुवातांततोजपेत् विकाराचमनञ्चाथगायत्रीम-
धुवेतिच ॥ ३ ॥ वेदिकांचततःकुर्यात्तल्लेखनकंतथा उल्मुक-
भ्रामणञ्चाथरेखयोःकुशधारणम् ॥ ४ ॥ देवताभ्यस्तथापिण्डस्था-
नेतत्रावनेजनम् पिण्डदानमुपस्पर्शोद्भिःश्वासयमनन्तथा ॥ ५ ॥
पिण्डोपरिप्रत्यवनेजनन्नीव्याश्वश्रंसनं सूत्रदानम्पिण्डपूजाजलपु-
ष्पाचतान्क्षिपेत् ॥ ६ ॥ अक्षय्यवादोवाधीरागोत्राशीःप्रार्थनन्ततः
पितृप्रीणनमाघ्राणम्पिण्डोत्थापनकन्तथा ॥ ७ ॥ चालनञ्चार्घपा-
त्राणांदक्षिणाचविसर्जनं देवताभ्योजपोरक्षादीपनिर्वापनंततः ॥
८ ॥ आचम्यचततोब्रूयात्प्रमादात्कुर्वतामिमि एषःपार्वणश्राद्ध-
स्यानुक्रमःकथितोबुधैः ॥ ९ ॥

इति पार्वण श्राद्धस्यानुक्रमणिका ॥



123+215

श्रीः ।

अयङ्ग्रन्थोयत्नादतिबहुतरोत्साहभरतः
समेत्यप्राचीनप्रवरविलसत्पुस्तकचयम् ।
मयावाराणस्यामुपकृतिकृतेस्वच्छमनसा
स्वकल्याणेप्सूनामपिचविदुषाम्मुद्रितइह ॥ १ ॥

यहग्रन्थ अत्यन्त दुर्लभ औ- अतीवश्लाघनीयहै श्राद्धके विषयमें ऐसा संग्रहका और ग्रन्थ नहीं है। इसको वैदिक पण्डित प्रभुदत्तजीने अति शुद्धता पूर्वक सारस्वत वर श्रीमत्पंडित ठाकुर दत्त जी की। सहायता से लोगों के उप कार के वास्ते प्रकाशित किया ॥

ठिकाना श्रीकाशी।
सरस्वती फाटक।
सत्यनारायणकामन्दिर।
पण्डित प्रभुदत्तजी।

सं० १९५० फाल्गुन कृ० २ बु०।